# उपसर्गार्थचन्द्रिका

## (A THESAURUS OF SANSKRIT PREPOSITIONAL VERBS)

सेयं

वाक्यपदीयस्य सँस्स्कर्त्रा श्रीगान्धिचरिताऽनुवादकला-प्रस्तावतरङ्गिणी-शब्दाप-
शब्दविवेक-वाक्यमुक्तावली-व्याकरणचन्द्रोदय-वाग्व्यवहारादर्शादीना-
मनेकेषां ग्रन्थानां निर्मात्रा व्याकरणमहाभाष्यस्य विवरीत्रा
श्रीरामकृष्णतनुजनुषा
**श्रीचारुदेवेन शास्त्रिणा प्रणीता**



**तत्रायं द्वितीयः खण्डः**

**(सम्——वि)**

**स एष**

**भारतीय-विद्या-प्रकाशनस्य**
दिल्ली वाराणसीस्थस्या-
ध्यक्षेण स्वेन व्ययेन प्राकाश्यं नीतः ।

# निवेदना

संस्कृत प्रतिपत्तार प्रतिपादयितारश्च समं प्रकाशितचरं प्रथमं खण्डं मुक्तकण्ठममायमनल्प प्राशसन्निति प्रिय मे। तदिदं जर्जरकलेवरस्य प्रवयसो मे परम समुद्धर्षणम्। अत्र खण्डे पूर्ववत् संश्रितशैलीसमाश्रयः, पूर्ववत्प्रतिपाद्यकार्त्स्न्ये प्रयासः, पूर्ववदेव च परमतव्याक्रियानिराक्रिये स्थिते इति प्रथमेनैपोनवयवेनारोहति तुलाम्। तेनाशसेऽयमपि हृदाभिनन्दिष्यते विदद्भिश्च विविदिषावद्भिश्च। चिरेणास्य प्रकाशनमभूत्, तेन चिरमुदैक्षन्त समुत्सुकाः सूरय इति खिद्ये। परं प्रकाशनं नाम न मदायत्तम्, तद्धि मदतिरिक्ते प्रकाशके वाणिजेऽधि। एव मन्थरं प्रवृत्तिमत् प्रकाशन कदा नु समाप्तिमेतेति चिन्ताऽऽचामतीव माम्। अद्य खण्डत्रयस्य प्रकाशनं शिष्टम्। अहं च त्र्यशीतितम वत्सर वयसोनुभवामि। कियदवशिष्ट ममायुष इति च न जानामि। शीर्णशरीरस्यापि मेऽप्रहीणे प्रज्ञामेधे इति परो भगवतोऽनुग्रहः। इद हि मे परममाशास्य परमकारुणिकः परेशो मे तावन्तं कालं जीवितं वितरेद्यावता प्रारब्धस्य परिसमाप्तिः स्यादिति। अत्रार्थे विदुषामाशिषमाशासानो विरमाम्यहं विनीतश्चारुदेवः शास्त्री॥

## PREFACE

Students and teachers of Sanskrit alike have highly appreciated the First Fasciculus with all the sincerity of heart and ungrudging expression. This gives me, an aged man of a decrepit physique, not a little inspiration. In the present Fasciculus, the same old method adopted in the first is followed, there is the same attempt at thoroughness, and the same elucidation and repudiation of others' views : thus this Fasciculus resembles in all respects its predecessor. Hence I hope this too would meet with the approbation of those who know and those who are anxious to know. This Fasciculus has taken long to be published. This pains me. But publication does not rest with me. It is entirely the business of a person, other than I, a publisher. At this slow pace, one does not know when the entire work would be published. Three Faciculuses still remain to be published and I am currently running the 83rd year of my life I do not know how long I am to live. Although decreptitude has overcome my body, my mental faculties—intelligence and memory are entirely intact. This is the benign grace of the merciful God. (In the end, it is my greatest wish that God may grant me a lease of life just sufficient to complete my work already undertaken. I seek the blessings of the learned in this behalf, and conclude.

**Surabhi, 3/54,**
**Roop Nagar, Delhi**
**27th May, 1978.**

CHARU DEVA SHASTRI

ओं नमः परमात्मने ।

नमो भगवते पाणिनये ।

नमः शिष्टेभ्यः । नमः पूर्वेभ्यः पथिकृद्भ्यः ।

उपसर्गा निषिञ्चन्ति वाच्यपूर्वां मनोज्ञताम् ।
इत्युपसर्गवाल्लभ्यमृषीणां सम्प्रसिध्यति ॥१॥
अतो वाचो विवेक्तारो वक्तारो वाग्मिनः किल ।
धातूपसर्गयोगेण तं तमर्थं प्रचक्षते ॥२॥
संहितासु सभाष्यासु निषत्सूपनिषत्सु च ।
भारते चादिकाव्ये च कल्पेषु स्मरणेषु च ॥३॥
यः प्रायो ह्युपसर्गाणां काव्यनाटकयोस्तु सः ।
गद्ये समासभूयिष्ठेऽथो विमृग्यक्रिये कुतः ॥४॥
आसंहितं समाहारं समाहारमुदाहृतीः ।
आकाव्यनाटकं चायमुपसर्गार्थसङ्ग्रहः ॥५॥
प्राक्तनान्नूतनाच्चापि वाङ्मयात्संप्रणीयते ।
शिष्टप्रयुक्तिपद्यायाः प्रव्यवतं प्रतिपत्तये ॥६॥
उपसर्गा द्योतकाः केचिद्वाचकाश्चाप्यमी स्मृताः ।
अनर्थकाश्च लक्ष्यन्ते केचिद्वस्तुस्वभावतः ॥७॥
धातूपसर्गयोरैक्यं वादिनः केचिदास्थिताः ।
सम्भूयाप्यर्थवाचित्वं ते नः सूक्ष्मदृशो मताः ॥८॥
इतीदं पक्षनानात्वं सम्प्रधार्यावधारितम् ।
सङ्ख्यया पश्चिमः पक्षो गुणैरेष ह्यपश्चिमः ॥९॥
कृत्यामास्वादमास्वादमेतस्यां वर्तनि नवाम् ।
नवार्थस्यातिसन्तृप्ताः सम्प्रेष्यन्ते विपश्चितः ॥१०॥
अनिशं भासमानां ते चकोराः शब्दवित्तमाः ।
प्रत्यग्रां चन्द्रिकां चेमां निपेष्यन्ते समुत्सुकाः ॥११॥

**संवाह्यताम्=संगृह्यताम्** । सूतः संवाहयामास रथम् (रा० ६।७६।७) । **संवाहयामास=प्राज=प्रचोदयामास** । सोपि संवाह्यते लोके तृष्णया पश्य कौतुकम् (पञ्चत० ५।१५) । **संवाह्यते=ह्रियते** । अमृतस्येव संवाहः प्रभाचन्द्रमसो यथा (हरि० ३.५।२) । **संवाहः=प्रवाहः** । संस्त्यानविशेषा ह्येते ग्रामो घोषो नगरं संवाह इति (पा० ७।३।१४ इत्यत्र भाष्ये) । **प्राकारपरिखायुक्तस्तु श्रेणिधर्मान्वितो देशः संवाह इति कैयटः** । **विपणिरिति** मोनियर् । शाखानगरमुख्यानां संवाहानां शतानि च (हरि० २।६१।६) । **संवाहाः सप्राकाराण्युद्यानानीति नील०** । वायुर्घोपवान् भूमौ वा तृणसंवाहः (आप० ध० १।३। ११।८) । **तृणान्युत्क्षिप्य गमयतीति तृणसंवाहः** । इत्येष तेन संवाहो गृहकृत्ये प्रवर्तितः (राज० ५।१७५) । **संवाहः=लुण्ठः=आमर्शनम्=आच्छेदनम्** । **बाधो वा** । समूढमस्य पांसुरे (अथर्व० ७।२७।४) । **पांसुमति पदे समूढं सम्यगवस्थितम् इत्यर्थः** । **समूढमसमूढं** वा यत्रामेध्यं न लक्ष्यते (बौ० ध० १।५।१०।१) । **समूढं सम्मार्जन्या एकत्र राशीकृतम्** ।

—**विज् (ओविजी भयचलनयोः)** । उद्वेपय सं विजन्ताम् (अथर्व० ११।६। १२) । **स्वस्थानाद् विचलिता भवन्त्वित्याह** । यथा श्येनात् पतत्रिणः संविजन्ते (अथर्व० ५।२१।६) । **संविजन्ते=उद्विजन्ते=त्रस्यन्ति** । मा भेर्मा संविक्थाः (वा० सं० ६।३५) । **मा संविक्थाः=मा संविजिष्ठाः=मा विचालीः** । यथा मृगाः संविजन्त आरण्याः पुरुषादधि (अथर्व० ५।२१।४) । **संविजन्ते=अपधावन्ति, आत्मपरीप्सया त्वरन्ते** । श्रुत्वा जरां संविविजे महात्मा (बुद्ध० ३।३४) । **संविविजे=विव्यथे=विचचाल=व्याकुलो बभूव** । विसृज्य सशरं चापं शोकसंविग्नमानसः (गीता १।४७) । **शोकव्याकुलितचेताः** । किर्मीरवधसंविग्नो बहिर्दुर्योधनो ययौ (भा० वन० १०।३६) । **उक्तोऽर्थः** । हृन्मर्मभेदिपतदुत्कटकङ्कपत्रसंवेगतत्क्षणकृतस्फुटदङ्गभङ्गा (ताटका) (महावीर० १।३६) । **संवेगः=वेग** । पूररेचकसंविग्नवलिवल्गुदलोदरम् (रूपम्) (भा० पु० ४२।४।५०) । **संविग्ना इतस्ततश्चलिता वलयः** । **प्रायेण संविजिस्त्रासकृतमपसरणमाह न तु चेष्टामात्रम्** ।

—**विद् (विद ज्ञाने)** । समु वा इमे प्राणा विद्रे ये चेमे ये चेमे (ऐ० ब्रा० ३।६) । **संविद्रे=संविद्रते=संगच्छन्ते** । **शिरस्याः सप्त ये प्राणा ये त्रयोऽपाञ्च एव ते । स्वस्थानस्थाः संगताश्च भवेयुर्देहपोषदाः ॥** इति तत्र षड् गुरुशिष्यवचनम् । यो वा रसान्न संवेत्ति (सुश्रुते १।११३।११) । **संवेत्ति=अनुभवति** । इच्छाम्यहं वरमस्मै प्रदातुं तन्मे विप्राः संविदध्वं यथावत् (भा० आदि० ५६।१) । **अनुमन्यध्वमित्याह** । ते पृथग्दर्शनास्तस्य संविदन्ति तथैकताम् (भा० शां० २८०।२८) । **संविदन्ति=अभ्युपगच्छन्ति** । अम्ब निष्पर समरीर्विदाम् (श० ब्रा० ३।६।४।२१) । एष याजुषो मन्त्रः वा० सं० ६।३६) । **अरीः प्रजाः**

**संजानताम् ऐकमत्यमधिगच्छन्त्वित्याह** । अप शत्रून् विध्यतां संविदाने आर्त्नी इमे (वा० स० २९।४१) । **संविदाने=परस्परं संकेतं कुर्वाणे** । यमेन त्वं यम्या संविदाना (वा० सं० १२।६३) । **संविदाना=ऐकमत्यं गता** । वर्षति हैव तत्र यत्रैवमृत्विजः संविदाना यज्ञेन चरन्ति (श० ब्रा० १।५।२।१९) । **संविदानाः=संजानानाः** । अङ्गिरोभिः पितृभिः संविदानः (ऋ० १०।१४।४) । **संजानानः=ऐकमत्यं गतः** । त्वं सोम पितृभिः संविदान. (ऋ० ८।४८।१३)। तन्मृत्युना निर्ऋतिः संविदाना (अथर्व ७।७३।१) । **उक्तोऽर्थः** । तौ हाऽसंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः (छां० उ० ८।७।२) । **विप्रतिपद्यमानावेवेत्याह** । असंविदानस्य ममेश संविदाम् (कि० १८।४९) । **असंविदानः=अज्ञः** । तत् किमित्यसंविदानेव जामात्रे कुप्यसि (उत्तर० ७) । **उक्तोऽर्थः** । संवित्तः सहयुध्वानौ तच्छक्ति खरदूषणौ (भट्टि० ५।३७) । **संवित्तः=सम्यग्जानीतः**। कृत्वा कुशलसंयुक्तां संविदं च यथावयः (भा० शल्य० ३४।१६) । **संवित् =परिचयः** । अकरोत्संविदं तेन पाण्डवेन महात्मना (भा० उ० १६७।३७) । **संवित्=मैत्री** । रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम् (भा० शां० ५३।२०) । **संवित्···प्रतिष्ठित आचारः शास्त्रदृष्टो विधिर्वा** । प्रसादिनोऽनुज्झितगोत्रसंविदः (शिशु० १२।३५) । **गोत्रसंवित्=कुलाचारः** । रहसि संविदो या हृदिस्पृशः ( ) । संविदः संलापाः । कृत्वा स्त्रीभिस्तु संविदम् (भा० सभा० ५८।३४) । **उक्तोऽर्थः** । यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा (भा० पु० १।३।३३) । स्वसंविदा=आत्मानुभवेन । त्वत्स्नेहसंविदवलम्बितजीवितानि (मालती० ६।१३) । **संवित्=ज्ञानम्** । स राजलोकः कृतपूर्वसंवित् (रघु० ७।३१) । **संवित् संकेतः** । स्तुतीरलभमानानां संविदं वेदनिश्चितान् (भा० शां० १५१।६) । **संविद्=दर्शनैक्यम्** । सनेत्य तान्नरव्याघ्रास्तव दास्यामि संविदम् (भा० द्रोण० १२७।२) । **संविद्=ज्ञप्तिः=ज्ञापनम्** । ततः स दुःखसन्तप्तो नालभत्संविदं क्वचित् (हरि० १।३०।१२) । **संविदम्=स्वास्थ्यज्ञानोपायम्** (नील०) । यथा च त्वां न पश्येयुः कुर्वाणां तेन संविदम् । (भा० वि० २२।५) । **संविदम्=संकेतम्** । संवित् क्रियाप्रतिज्ञायामाचारे ज्ञानगह्वरे । संभाषणे क्रियाकारे संकेते नाम्नि भाष्यते (मेदिनी) ॥ श्वस्त्वया सुखसंवित्तिः स्मरणीयाधुनातनी (कि० ११।३४) । **सुखसंवित्तिः=सौख्यानुभवः=सुखास्वादः** । पश्चाच्छिष्यसकाशात्तु कालः संविदितो मया (हरि० १।१९।२२) । **संविदितो विदितः** । **नार्थः समा** ।

—**विश् (विश प्रवेशने)** । इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा संविशन्तु (ऋ० १०।१८।७) । **संविशन्तु=अनुपदमागच्छन्तु** । सं त्वा विशन्त्वोषधीरुतापः (वा० सं० ८।२५)। **प्राप्नुवन्त्वित्यर्थः** । समाप्तायां संविशन्ति दक्षिणैः पार्श्वैः

(गो० गृ० ३।६।१८) । **संविशन्ति=प्रविशन्ति । अग्निपरिजनयोर्मध्य आगच्छन्तीति सामश्रमी ।** जघनार्धेन च पशुरुच्च तिष्ठति सं च विशति (श० ब्रा० ८।२।४।२०) । **संविशति=निषीदति ।** तदाऽग्निमिद्धं भगवान् संविवेश महावने (भा० आदि० १७६।४६) । **संविवेश प्रविवेश ।** तृतीयेन ज्योतिषा संविशस्व (ऋ० १०।५६।१) । **संगतो भवेत्याह ।** पर्यटेत्कीटवद् भूमि वर्षास्विकत्र संविशेत् (लघु वि० स्मृ० ४।५) । **संविशेत्=तिष्ठेत्=वसेत् ।** पश्चादग्नेरुदगग्रेषु दर्भेषु प्राक्शिरा सविशति (गो० गृ० २।६।१०) । **संविशति=स्वपिति ।** क्रमेण सुप्तामनु सविवेश (रघु० २।२४) । चरमं संविशति या प्रथमं प्रतिबुध्यते (भा० सभा० २१७७) । **उक्तोऽर्थः ।** तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् (मनु० ३।४८) । **संविशेत्=गच्छेत् । स्त्रिया मिथुनी भवेदिति यावत् ।** षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु **संविशेत् (याज्ञ० १।७९)** । स तत्र संविवेश केदारखण्डे, शयाने च तथा तस्मिंस्तदुदकं तस्थौ (भा० आदि० ३।२४) । **संविवेश=शिश्ये=निपेदे । इह स्वापो नार्थः, किन्तर्हि स्वापार्थं विश्रमार्थं वा यथा कायप्रणिधानम् भवति तथा कायं प्रणिदध इति विवक्षितम् ।** विधिं ह्याद्यं विधयः संविशन्ति (भा० अनु० ७२।५५) । **समाविशन्तीत्यर्थः ।** दृष्टं श्रुतमसद् बुद्ध्वा नानुध्यायेन्न संविशेत् (भा० पु० ६।१६।२०) । **संविशेत् =निर्विशेत्=भुञ्जीत । अपूर्वोऽन्यत्राहृष्टपूर्वः कविकल्पितोऽर्थः । अनुध्यायेदित्यत्रानुरूप्यस्थाने ।** अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी (वि० पु० ६।५।३३) । **संवेश्यते=उपवेश्यते ।** आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनात् । एषोऽद्यतनः कालः (पा० १।२।५७ सूत्रे वृत्तौ) । **संवेशनं स्वापः शयनम् ।** गृहसंवेशको दूतो वृक्षारोपक एव च (मनु० ३।१६३) । **गृहसंनिवेशोपदेशको वास्तुविद्योपजीवी** (कुल्लूकः) । वाग्यतो नैकवस्त्रश्च नासंविष्टः कदा चन । भूमौ सदैव नाश्नीयात्...(भा० अनु० १०४।६६) ।। **असंविष्टोऽशयानोऽनिपद्यमानः । नासंविष्ट इति सुप्सुपासमासः । अनिपद्यमान इत्यर्थः । (अश्नीयादित्यध्याहारः)** । न चास्य (गुरोः) सकाशे संविष्टो भाषेत । **उक्तोऽर्थः ।**

—**वृ (वृञ् वरणे, वृङ् संभक्तौ)** । राज्ञो लोचने संवृणोति (विक्रम०) । **आच्छादयति ।** संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमम् (भट्टि० ६।२७) । **संवरिषीष्ठाः=उपरुध्याः ।** यावद् वस्त्रं च वेणीं च विस्रस्तां संवृणोम्यहम् (कथा० ६४।३८) । **संवृणोमि=व्यवस्थापयामि ।** अश्मसहिता धाराः सवृण्वत्यः समन्ततः (भा० वन० १०६८१) । **आच्छादयन्त्य इत्यर्थः ।** अयमु त्वा विचर्षणे जनीरिवाभिसंवृतः । प्र सोम इन्द्र सर्पतु (ऋ० ८।१७।७) । **अभिसंवृतः=समन्तादाच्छादितः ।** न मदनो विवृतो न च संवृतः (शा०

२।१२)। रजसा संवृतं तेन नष्टज्योतिरभून्नभः (भा० वन० ११।१३)। असंवृताया भूमौ (रा० ५।२२।४)। अनन्तर्हितायाम् अव्यवहितायां शय्याद्यनुपहितायामित्यर्थः। अयं पटः संवृत एव शोभते (मृच्छ० २।१०)। मञ्जूषादिषु गोपित इत्यर्थः। वृद्धाद् ब्राह्मणसंवृतात् (भा० आदि० १६०।३५)। ब्राह्मणैः संव्रियत इति ब्राह्मणसंवृतम्। यत्र ब्राह्मणा अपि क्षत्रियैः समं युध्यन्ते, तस्मात्। समा नार्थः। वरणेर्थे समोऽप्रसिद्धेश्च। ज्याघातौ हि महान्तौ मे संवर्तुं नृप दुष्करौ (भा० वि० ५२)। संवर्तुम्=संवरीतुम्=गोपायितुम्। धृतराष्ट्रोपि राजेन्द्र संवृतः सर्वकौरवैः (भा० वन २५६।२१)। संवृतः=परिवृतः=परिगतः=परिक्षिप्तः=परिवेष्टितः। ब्रह्मवादी पुण्यमतिः काम्यः संवृतमैथुनः (हरि० १।२६।३)। निरुद्धमैथुन इत्याह। यज्ञे संवृतश्चेत् (गौ०ध० १५।४०)। संवृतः=वृतः=आहूतः। अदायां त्वा दिशि पुरा संवृतः स्वधायामादधामि (अथर्व० १८।३।३४)। अन्यदसंवृतम् (बौ०ध० २।१०।१७।२८ इत्यत्र गोविन्दस्वामिविवरणम्)। असंवृतम्=उत्तानम्=स्पष्टम्। वर्षतां जलदानां च तोयमत्युल्बणं निशि। संवृत्यानुययौ शेषः फणैरानकदुन्दुभिम् (वि० पु० ५।३।१७)। संवृत्य=निवार्य। वदति संवृतिरेव कामितानि (कि० १०।४४)। संवृतिः=गोपनं निह्नव इत्यर्थः। प्रत्यग्रापनीतसंयमनस्य भवतोऽलघुसंवारा गतिः (मृच्छ० ७।६)। संवारो विघ्नः।

—वृज् (वृजि वृजी वर्जने)। ते सर्वं यज्ञं समवृञ्जत (श० ब्रा० (११।५।६।४)। आच्छिद्य स्ववशेऽकुर्वन्नित्याह। ते देवा अकामयन्त। कथं न्विममपि (भागं) संवृञ्जीमहि योऽसुराणाम् (श० ब्रा० १।७।२।२३)। वशे कुर्वीमहि, विन्देमहि। स इदं सर्वं संवृङ्क्ते (श० ब्रा० ५।१।१।१४)। उक्तोऽर्थः। अथो ह यो द्विषतो भ्रातृव्यात् संविवृक्षेत...हैवास्माद् वृङ्क्ते (श० ब्रा० १२।४।४।३)। वृजिरिहाकर्मकः। यदाप उच्छुष्यन्ति वायुमेवापियन्ति। वायुर्ह्येवैतान् सर्वान् संवृङ्क्ते (छां० उ० ४।३।२)। अपियत एतानग्न्यादीन्संकलय्य स्वयं धत्त इत्यर्थः। ततो देवाः सर्वं यज्ञं संवृज्याथ यत्पापिष्ठं...(श० ब्रा० १।९।२।३५)। उक्तार्थः।

—वृत् (वृतु वर्तने)। हिरण्यगर्भः समवर्तताग्रे (ऋ० १०।१२२।१)। अजायतेत्यर्थः। शीर्ष्णो द्यौः समवर्तत (ऋ० १०।९०।१४)। उक्तोऽर्थः। तच्छ्रवत्संवर्तते (छां० उ० ८।१३।२)। संवर्तते=विद्यते। लवणमिश्रितं तिष्ठत्येवेत्याह। तत्र संवर्तते रात्रिः (हरि० १।८।२)। अवतरति रजनीत्यर्थः। सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत (भा० वि० १६।१५)। अजायतेत्यर्थः। काः कथाः समवर्तन्त तस्मिन्वीरसमागमे (भा० शां० ५४।३)। समवर्तन्त=प्रावर्तन्त। शनकैर्मध्याह्नः समवर्तत (कथा० १०४।२०२)। प्राप्ते च प्रहरेत्काले न च संवर्तते पुनः। हन्तुकामस्य देवेन्द्र पुरुषस्य रिपून्प्रति

(भा० शां० १०३।२०) ॥ **न संवर्तते (कालः)=नोपसम्पद्यते । कौरवाः** समवर्तन्त जिगीषन्तो महाबलाः (भा० भीष्म० १।३) । **समवर्तन्त=समवायन्** । युद्धाय समवर्तन्त समाहूयेतरेतरम् (भा० भीष्म० ८७।२५) । तिस्रोऽन्याः समवर्तन्त वाहिन्यो भरतर्षभ (भा० उ० १६।२७) । **संवर्तते जनपदः** (वा० प० वृषभ० टी०) । **सर्वत्र समवाय एकीभावगमनमर्थः** । यत्संवर्तते साऽऽमिक्षा यदन्यत्तद् वाजिनम् (आप० श्रौ० ८।१।२।६) । **संवर्तते=घनी भवति । संवर्तते** च भैषज्यमङ्गुलिभ्यां मृद्यमानम् (चरके वि० ७।३०) । **संवर्तते=वर्तिवद् भवति** । सं ते वज्रो वर्ततामिन्द्र गव्युः (ऋ० ६।४१।२) । **संवर्तताम्=इतोऽभिवर्तताम्** । मा संवृतो मोपसृपः (अथर्व० ८।६।२) **मा संवृतः=माऽभिवर्तस्व** । **संवृत इति सम्पूर्वस्य वृतेर्लुङि रूपं माङ्युपपदेऽनागमकम् । अतो यथोक्तमर्थः, न तु संवृतिं संकोचं मा कार्षीरिति** । सोऽयं विधिविहितः कर्मणैव सवर्तते तत्र कर्म (भा० उ० २६।८) । **संवर्तते=उच्छिद्यते । संपूर्वो वृतिरुच्छेदेपि वर्तते । संवर्तः प्रलयो भवति** । नत्वेव मन्ये पुरुषस्य कर्म संवर्तते सुप्रयुक्त यथावत् (भा० उ० ३२।२६) । **संवर्तते=फलवज्जायते । फलेन सम्पद्यत इत्यर्थः** । मिथ. कामात् सांवर्तेते स गान्धर्वः (आप० ध० २।५।११।२०) । **सांवर्तेते=संवर्तेते (छान्दसो दीर्घः)=मिथुनी भवतः** । यथाऽयं वाहो अश्विना समैति सं च वर्तते (अथर्व० ६।१०२।१) । **संवर्तते सम्यक् तदधीनं वर्तते** । सवर्तयति मुष्टिम् । **संगृह्णातीत्यर्थः । मुष्टिं बध्नातीति वा । मुष्टिसङ्ग्राहो मुष्टिबन्धो भवति** । ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः । मुष्टिनाभिजघानैनाम्...(रा० ५।३।४०) । मुष्टिं संवर्तयामास वज्रकल्पं महाबलः (रा० ६।७६।२५) । यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः । तथा कालवश यान्ति भूतानि भरतर्षभ (भा० स्त्री० २।६) ॥ **संवर्तयति, उत्सादयति, उच्छिनत्ति, भनक्ति** । उभे यत्समवर्तयद्‌ इन्द्रश्चर्मेव रोदसी (ऋ० ८।६।५) । **समवर्तयत्=सममेलयत्** । उषा अप स्वसुस्तमः संवर्तयति वर्तनिं सुजातता (अथर्व० १६।१२।१) । **संवर्तयति=सम्यङ् निवर्तयति** । इन्द्रासोमा वर्तयतं दिवो वधं सम् (अथर्व० ८।४।४) । **संवर्तयतम्=एकधैव प्रवर्तयतम्** । पश्येयमिति तस्याश्च कामः सवर्त्यतामिति (रा० ७।४६।२३) । **संवर्त्यताम्=निर्वर्त्यताम्=साध्यताम्=पूर्यताम्** । इमां संविवृत्सत्यपतिः स्वपतिं स्त्रियम् (अथर्व० ८।६।१६) । **संविवृत्सति=संवर्तनं मैथुन्यं कर्तुमिच्छति** ॥ सोऽन्तरोरू असंवर्तमानः शेते (श० ब्रा० १३।४।१।६) । **असंवर्तमानः=असंलग्नः=असम्पृक्तः** । अधः सवेशनौ असंवर्तमानौ सह शयाताम् (जै० गृ० २०।६) । **अमिथुनी भवन्तौ** । संवर्तमान हृदयं समाविशति यत्पुरा (चरके सूत्र० ३०।६) । **संवर्तमानं जायमानम्** । अर्को वृक्षो भवति संवृतः कटुकिम्ना (नि० ५।४।६) ।

**संवृत्तः=संगतः संव्याप्तः** । त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम (रा० ३।१५।२९) । **संवृत्तः=मृतः । न संवृत्तः=न संस्कृत** इति तु **कतकः । नैष शब्दमर्यादालभ्योर्थः** । ते तस्य यज्ञे सवृत्तास्तेऽपृच्छन्त कथं त्विमौ (भा० वन० १८५।१९) । **संवृत्ताः समवेताः** । क्षणभूतेव नौ रात्रिः संवृत्तेयं महातपः (रा० १।४५।३) । **संवृत्ता=गता=समाप्ता** । संवृत्त शोणित तत्र मारुतो विषमं गतः (का० सं० खिल० रक्तगुल्म० श्लो० २८) । मर्त्या अमर्त्याः सं वृत्ताः (भा० आदि० १९७।६) । **अमर्त्यभावं प्राप्ता इत्यर्थः** दृष्टदोषापि स्वामिनि मृगया केवल गुणायैव संवृत्ता (शा० २) । **संवृत्ता=परिणता** । संवृत्तो मनोरथः । **फलित इत्यर्थः** । अपूरयन्नभः शब्दो बलसंवर्तसभवः (भट्टि० १७। ५६) । **सैन्यैकीभावोत्पन्न इत्यर्थः** । अपरेद्युस्त्रीस्त्रीन् पुरोडाशसवर्ताँश्चतुष्पथेप्यवचरति (कौ० सू० ३०।१८) । **संवर्ताः=पिण्डाः** । संवर्तम् (भा० शल्य० ५७।१९) । **संवर्तः शत्रुप्रसरणस्यावरोधनं भवति** । पर्यायात् क्षणदृष्टनष्टककुभः सवर्तविस्तारयोः (महावीर० ५।१)। **सवर्तः=संकोचः, आकुञ्चनम्** । सवर्ताग्निः सन्दिधक्षुर्यथैव (अभि० १।१३) । **संवर्तः=प्रलयः** । मत्स्यबन्धैरन्तः स्रोतो निरुध्य प्रक्षिप्तं संवर्तजालम् (तन्त्रा० १।१२) । **संवर्तः संग्रहः** । अनिष्टस्याभिनिर्वृत्तिमिष्टसवृत्तिमेव च । अप्रयत्नेन पश्यामः (भा० शां० २२२।२०) । **संवृत्तिः=तिरोधानं नाशः** । अदृच्छायामसंवृत्तौ गतिरेव तस्मिन् (आप ध० १।४।१४।५) । **असंवृत्तिः=असिद्धिः** । गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसवृत्तिरिति (आप० ध० १।२।५।९) । **अध्ययनसंवृत्तिः=अधीतस्य वेदस्याभ्यासः** । संवर्तिका नवदलम् इत्यमरः । **संवर्तयति वेष्टयतीति संवर्तिकेति स्वामी** । स्मरेन्धने वक्षसि तेन दत्ता संवर्तिका शैवलवल्लिचित्रा (नै० ८।७६) । अनुष्ठितं च संवृत्य विशेषेणोपपादयेत् (का० नी० सा० १२।३६) । **संवृत्य=साधु वर्तित्वेति जयमङ्गला । कुशलैः संवाद्येत्युपाध्यायनिरपेक्षा** । चित्रतन्तुविरचितः संवर्तनविवर्तनसहिष्णुः (ध्वन्य० लो०) । संवर्तयंस्तमः सूर्यात् (बृ० दे० २।६३) । संवर्तयन्तो वि च वर्तयन्नहा (ऋ० ५।४८।३) । संवर्तयन् (रा० ४।२७।४८) । **संवर्तयन्=क्षपयन् (उक्तकालं चतुरो मासान्)**। संवर्तयन्तः शैलेषु वानरा विविधांस्तरून् (रा० ४।४७।६) । **संवर्तयन्तः=भञ्जन्तः=उद्वर्तयन्तः=ध्वंसयन्तः** । स वासुदेवः प्रगृहीतचक्रः संवर्तयिष्यन्निव सर्वलोकान् (भा० भीष्म० ५९।९४) । **संवर्तयिष्यन्=संहरिष्यन्** । संवर्तयितुमर्हसि । यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसत्तमैः (रा० १।६९।१२-१३) । **संवर्तयितुम्=निर्वर्तयितुम्** । सवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत (रा० १।१६।२४) । **संवर्तयित्वा=समाप्य** । चिताग्निरिव जज्वाल कोपसंवर्तितेक्षणः (रा० ५।४२। २२) । **कोपेन संवर्तिते विवर्तिते ईक्षणे यस्य सः** ।

—वृध् (वृधु वृद्धौ) । संवर्धता गोपकुले बालेनैव महात्मना (भा० द्रोण० ११।२) । संवर्धता=संवर्धमानेन शरीरपोषमाप्नुवता ।

—वृह् (वृह वृहि वृद्धौ, वृहू उद्यमने) । आ ययाम संववर्ह ग्रन्थींश्चकार ते दृढान् (अथर्व० ६।३।३) । संववर्ह=संयोजयामास, संश्लिष्टांश्चकार । व्यूढ-प्रहरणोरस्कं सैन्यं तत् समवृंहयत् (भा० द्रोण० ४।१६) । समवृंहयत्=अवर्धयत्=सम्प्राहर्षयत् । यथा महासुहयः सैन्धवपड्वीशशङ्कून्संवृहेदेवं हैवेमान् प्राणान्संववर्ह (श० ब्रा० १४।६।२।१३) । संवृहेत्=आवृहेत्=उद्धरेत् =समुद्धरेत् ।

—वेष्ट् (वेष्ट वेष्टने) । स्वं ह्येव कोपात्पृथिवीमपीमां सं वेष्टयेः (भा० वन० १०२६४) । सवेष्टयेः=संकोचयेः । दिवं देवेन्द्र पृथिवीं च सर्वां संवेष्ट-येस्त्वं स्वबलेनैव शक्र (भा० आश्व० ६।२८) ।

—व्यध् (व्यध ताडने) । संव्याधे यूपेन च स्फ्येन च ब्राह्मणा रथेन च शरेण च राजन्यबन्धवः (श० ब्रा० १।२।४।२) । संव्याधे=सम्प्रहारे ।

—व्ये (व्येञ् संवरणे) । वासो अग्ने विश्वरूपं संव्ययस्व विभावसो (वा० सं० ११।४०) । संव्ययस्व=परिधत्स्व । त्वक्त्रैः संविव्ययुर्देहान् (भट्टि० १४।७४) । आच्छादयामासुरित्याह । तस्मै देवा अमृतं संव्ययन्तु (अथर्व० ७। १८।३) । संव्ययन्तु संवृण्वन्तु प्रयच्छन्तु इति सायणः । संव्यानमुत्तरीयं चेत्यमरः । संव्यानानामन्तकान्तः पुरस्य (शिशु० १८।६६) । उक्तोऽर्थः । पाण्डु-रांशुकसंवीतां शयानां प्रमदामिव (बुद्ध० ४।४६) । पाण्डुरांशुकं परिदधाना-मित्यर्थः । येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः (बुद्ध० ३।१५) । संवीतः= अन्तरितः स्वर्णप्राकारसंवीता (लङ्का) (रा० ७।२।५) । संवीता=वेष्टिता= परिगता=परिक्षिप्ता ।

—व्रज् (व्रज गतौ) । यत्रैव संव्रजन्नन्वाहार्यपचनमनुस्मरेत् (श० ब्रा० २।३।२।४) । संव्रजन्=विचरन्=पर्यटन् ।

—व्रश्च (ओव्रश्चू छेदने) । पर्वाण्येषां पर्वशः संव्रश्चम् (श० ब्रा० ११। ६।१।३) । संव्रश्चमिति णमुलन्तम् । संवृश्च्य खण्डशः कर्तित्वा । संव्रश्चमोष-धिवनस्पतीनां प्रकिरति (श० ब्रा० १३।७।१।६)।

—शक् (शक विभाषितो मर्षणे, शक्लृ शक्तौ) । न पिशाचैः संशक्नोमि (अथर्व० ४।३६।७) । संशक्तोऽनुप्रविष्टो भवामीति सायणः । न बहवः सम-शकम् (अथर्व० १।२७।३) ।

—शङ्क् (शकि शङ्कायाम्) । क्रुध्यन्तीं मां च सम्प्रेक्ष्य समशङ्कत मां

त्वयि (भा० वि० १६।१२)।

शप् (शप आक्रोशे)। संशप्तकास्तु समयात्सङ्ग्रामादनिवर्तिन (अमर.)। यदाश्रौष"'संशप्तकान्निहतानर्जुनेन तदा नाशंस विजयाय सजय (भा० आदि० १।१८६)॥

शम् (शमु उपशमे)। तावत् सशाम्य पाण्डवैः (भा० द्रोण० १२२।१६)। शमं गच्छ, सन्धत्स्वेत्यर्थः। वासुदेवेन तीर्थेन पुत्र सशाम्य पाण्डवैः (भा० द्रोण० ८५।२३)। शमं गच्छ, सन्धत्स्व। सत्त्व सशाम्यतीव मे (भट्टि० १८।२८)। संशाम्यति=नश्यति। बुद्धया सशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिण. (पञ्चत० १।३७६)। विरोधम् इत्यध्याहार्यम्।

—शास् (शासु अनुशिष्टौ)। आशिषश्च प्रशिषश्च सशिषो विशिषश्च याः (अथर्व० ११।१०।२७)। संशिषः संशासनानि। अत्राह सायण उपसर्ग-वशाद् धात्वर्थस्य भेदोऽवगन्तव्य इति। हन्त सोऽयमर्थभेदस्तस्यापि चतुर्वेद-भाष्यकारस्यानवगतः। ये चैव देवानां शमितारो ये च मनुष्याणां तानेव तत् सशास्ति (ऐ० ब्रा० ६।६)। संशासन प्रेषणम्। पूषा सन्या इति सनीहारान् संशास्ति (आप० श्रौ० १०।६।१८।५)। संशास्ति=सम्प्रेष्यति। सनिशब्दे-नात्र हिरण्यगोवस्त्रादीनि देयद्रव्याण्युच्यन्ते। सनीन् हरन्तीति सनिहाराः। छान्दसो दीर्घः।

—शिञ्ज् (शिजि अव्यक्ते शब्दे)। ते (जुहूपभृतौ) असञ्शिञ्जयन्नाददीत (श० ब्रा० ११।४।२।२)। परस्परमसङ्घट्टयन्नित्याह।

—शी (शीङ् स्वप्ने)। यत् पर्वते न समशीत हर्यत इन्द्रस्य वज्रः (अथर्व० २०।१५।२)। सक्तो न बभूव, सङ्गं नापेत्याह। मा सशयिष्ठा न गदेव वज्रं स्यान्निष्फलम्'''(भा० पु० ६।११।१६)। संशयं मा कार्षीरित्याह। तमेव स्था-णुं ज्ञातुं संशयितुं वा नेच्छति (साङ्ख्यका० ४६ अत्र गौडपादभाष्यम्)। अत्र संशीङ् सकर्मकः प्रयुक्तः। सशय्य कर्णादिषु तिष्ठते यः (कि० ३।१४)। क्वचिदर्थे निश्चयमनधिगम्येत्यर्थः। भावाभावप्रकारकं ज्ञान संशयः। न सशयमनारुह्य नरो भद्राणि पश्यति (हित० २।७)। संशयं कृच्छ्रम्, भयम्, संकटम्। अग्निहोत्रादहमभ्यागतास्मि विप्रर्षभाणा संशयच्छेदनाय (भा० वन० १८६।२२)। संशयच्छेदनाय=विवादपदनिर्णयाय।

—शॄ (शॄञ् हिंसायाम्)। स ७ हैन ७ं शृणाति (श० ब्रा० १।१।१।१८)। सम्यग् हिनस्तीत्यर्थः।

—शो (शो तनूकरणे)। संशितो रश्मिना रथः (वा० म० २३।१४)। **सम्पूर्वः श्यतिः शोभने वर्तत इत्युवटमहीधरौ।** समहमेषां राष्ट्रं श्यामि (अथर्व० ३।१६।२)। **संश्यामि तीक्ष्णी करोमि।** संशितं मे ब्रह्म संशितं वीर्यं बलम् (वा० सं० ११।८१)। ततस्ते सूदिताः सर्वे मम बाणाः सुसंशिताः (भा० उ० १८०।२२)। **उक्तोऽर्थः।** उपोष्य संशितो भूत्वा हित्वा वेदकृताः श्रुतीः (भा० शा० २६५।७)। **संशितस्तीक्ष्णव्रत इत्यनर्थान्तरम्।** संशित व्रतम्। **सम्यक् सम्पादितमित्यर्थ इति दीक्षितः।** संशितो ब्राह्मणः। **व्रतविषयकयत्नवान् इति च सः।** संशितात्मा। **परिणतयज्ञः संयतमना इति वा।** सृक संशाय पविमिन्द्र तिग्मम्। (अथर्व० ७।८४।३)। **संशाय=सम्यक् तीक्ष्णीकृत्य। संशायेति सम्पूर्वस्य श्यतेर्ल्यपि रूपम्।**

—श्रि (श्रिञ् सेवायाम्)। न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते (उत्तर० ६।१२)। **संश्रयन्ते=आलम्बन्ते।** संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु (मनु० १०।६०)। **संश्रयति=प्राप्नोति।** तस्मिन्पुत्रैर्जरसि संश्रयेथाम् (अथर्व० १२।३।६)। **अकर्मकोऽत्र धातुः।** चूतेन संश्रितवती नवमालिकेयम् (शा० ४।१२)। **संश्रितवती=संगतवती। अत्राप्यकर्मको धातुः।** नक्तमासीत संश्रितः (लौ० गृ०)। **संश्रितः=अपाश्रितः।** (**इत्यादित्यदर्शनः**)। पौरजानपदान्सर्वान्संश्रितोपाश्रितास्तथा (भा० शां० ८७।२४)। **संश्रिताः=साक्षाद्आश्रिताः।**

—श्रु (श्रु श्रवणे)। अयाच्यमर्थं न च संशृणोमि (भा० वन० १६५।४)। **संशृणोमि=प्रतिशृणोमि।** त्वं हि संश्रूयसेऽत्यर्थमसह्यबलविक्रमः (भा० भीष्म० १०५।२८)। **संश्रूयसे=विश्रूयसे=प्रख्यायसे।** द्विजस्य संश्रुतोऽर्थो मे जीवयिष्यामि ते सुतम् (रा० ७।७६।१२)। **संश्रुतः=प्रतिज्ञातः।** यत्त्वया संश्रुतं मह्यम् (रा० २।१२।४६)। **उक्तोऽर्थः।** देवानां समयस्त्वेष वसूनां संश्रुतो मया (भा० आदि० ६७।२२)। एतत्कार्यममराः संश्रुतं मे (भा० उ० ३६।४)। **संश्रुतम्=श्रुतम्। अनर्थकः सम्शब्दः।** वाचं वा को विजानाति पुनः संश्रुत्य संश्रुताम् (याज्ञ० ३।१५०)। **इहापि समा नार्थः। श्रवणमात्रमर्थः, न प्रतिज्ञानम्। विजानाति=प्रत्यभिजानाति।** न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः (रा० ३।१०।१६)। **प्रतिज्ञां जहामीत्यनुषङ्गः। संश्रुत्य=प्रतिज्ञाय। संगीर्य।** दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रवः। जटायुर्नाम नाम्नाहं गृध्रराजो महाबलः (रा० ३।५०।३)। **सत्यसंश्रवः=सत्यसङ्गरः।** असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्तयेत् (मनु० २।२०३) **यत्र गुरुर्न शृणोति तत्रासंश्रवे।**

—**श्लिष् (श्लिष आलिङ्गने)**। यथा छायातपौ नित्यं सुसम्बद्धौ परस्परम्। एवं कर्म च कर्ता च संश्लिष्टावितरेतरम् (पञ्चत० २।१२७)॥ वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः (शा० ५।२०)। **संश्लेषः=आश्लेषः।** अपत्यमित्यन्योन्यसंश्लेषण पित्रोः (उत्तर० ३)। **संश्लेषणं बन्धनम्।**

—**सञ्ज् (षञ्ज सङ्गे)**। प्रान्तेषु संसक्तनमेरुशाखम् (कु० ३।४३)। **संसक्ताः=सम्पृक्ता नमेरुशाखा यत्र**। संसक्तं सूतपुत्रेण दृष्ट्वा भीममरिन्दम (भा० द्रोण० १३२।४१)। **सूतपुत्रेण कर्णेनायोधने व्यापृतमित्याह।** संसक्तवदनाश्वासाः=**अविरतमुखोच्छ्वासाः।** श्रेष्ठिनो वसुरक्षितस्य हर्म्येण संसक्त देवदत्तस्य गेहकम्। **तस्यानन्तरं स्थितमित्यर्थः। तेनाव्यवहितमिति वा।**

—**सद् (षद्लृ विशरणगत्यवसादनेषु)**। विमना विफलारम्भः संसीदत्यनिमित्ततः (याज्ञ० १।२७४)। **संसीदति=दीनमनस्को भवति।** न चापि संसीदति न प्रहृष्यति (भा० शां० २२६।१५)। **संसीदति=विषीदति।** द्विशः पात्राणि ससादयति (का० श्रौ० २।३।६)। **सहैव निदधातीत्याह।** गार्हपत्ये तस्य पात्राणि संसादयन्ति (श० ब्रा० १।१।२।२३)। **उक्तोर्थः।** संसाद्यमानोपि नरेण तेन (अवदा० जा० २६।६)। **संसाद्यमानः=आरुह्यमाणः।** संसदमुपयायात् (आश्व० गृ० २।६।११)। **संसदिति व्यवहारस्थानमुच्यते।**

**सस्ज् (षस्ज सङ्गे)**। यद्वैकर्तनः कर्णो राक्षसश्च घटोत्कचः। निशीथे समसज्जेतां तद्युद्धमभवत्कथम् (भा० द्रोण० १७५।१)। **समसज्जेताम्=समागच्छताम्=समासीदताम्।** पूर्वापरार्णवनिभे पृतने समसज्जताम् (शि० भा० २४।५७)। **संसक्ते अभूतामित्यर्थः।** उवाचापि प्रहृष्टेव ...वाचा संसज्जमानया (रा० २।२५।३६)। **संसज्जमानया=सगद्गदया।**

—**सह् (षह मर्षणे)**। न मानिनी संसहतेऽन्यसङ्गमम् (भट्टि० २।६)। **अत्र समित्यनर्थकश्छन्दोनुरोधादाश्रितः।**

—**साध् (राध साध संसिद्धौ)**। यत्संसाधयति ते विष्णुक्रमाः (आप० ध० २।६।७।६)। **संसाधयति=गच्छति।** सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् (मनु० २।१००)। **संसाधयेत्=घटयेत्।** यः स्वयं साधयेदर्थमुत्तमर्णोधमर्णिकात् (मनु० ८।५०)। **प्रतिलभेतेत्याह।** क्षिप्र संसाध्यतां कंसः केशी च तुरगाधमः (हरि० २।१६।७२)। **संसाध्यताम्=हन्यताम्।** अयमात्मभवः शोको मामनाथमचेतनम्। ससाधयति वेगेन यथा कूलं नदीरयः (रा० २।६४।७४)॥ **संसाधयति=नाशयति।** केचिदग्निमथोत्पाद्य संसाध्य च वनेचराः। भक्षयन्ति स्म मांसानि (भा० आदि० ६६।२८)॥ **अग्निना संसाध्य=अग्निना संस्कृत्य।** रामः संसाध्य ऋषिगणमनुगमनाद् देशात्तस्मात्...(रा० २।११६।२५) **संसाध्य=प्रस्थाप्य।**

—सिध् (षिधु संराद्धौ)। जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशय. (मनु० २।८७)। **संसिध्येत्=अपवर्गमाप्नुयात्। परमानन्दं विन्देत्।** संसिध्यस्व महाबाहो कुरु कार्यमनन्तरम् (भा० वन० ३६८।३४)। **कृती भव, कृतार्थः स्या इत्याह।** संसाधय सुहृज्जनम् (रा० ४।११।३४)। **आमन्त्रयस्वेत्यर्थः।** संसिद्धिं परमां गताः (गीता ८।१५)। **परर्द्धिर्मोक्षः संसिद्धिः।** समिद्धिः स्वभावे सिद्धौ (अजयः) आबालमेव ससिद्धं कर्तुं शक्नोति कोऽन्यथा (यो० वा० ६ (उ०) १५६।३१) **संसिद्धं स्वभावजम्, सांसिद्धिकम्।**

—सिव् (षिवु तन्तुसन्ताने) व्यभ्राजेता यथा मेघौ सस्यूतौ सूर्यरश्मिभिः (भा० द्रोण० १३६।२५)। संस्यूतौ सम्बद्धौ।

—सु० (षुञ् अभिषवे)। न पूर्वदीक्षिणः संसवोऽस्ति। **द्वयोर्बहूनां वा यजमानानां स्पर्धमानानां सम्भूय सोमाभिषवः संसवः।**

—सूच् (सूच पैशुन्ये)। संयोगो हि वियोगस्य संसूचयति सम्भवम् (सुभाषितम्)।

—सृ (सृ गतौ)। स सरन्ति दिशः सर्वा यशसोऽस्य इवांशवः (भा० उ०) ७।१७)। **संसरन्ति=व्याप्नुवन्ति।** संसारयति कृत्यानि सर्वत्र विचिकित्सते (भा० उ० ३३।३४)। **संसारयति=(भृत्यादिद्वारा) प्रवर्तयति।** सूच्या सूत्र यथा वस्त्रे ससारयति वायक. (भा० शा० २११।३६)। आत्मन्यविद्यया क्लृप्त. संसारयति देहिनम् (भा० पु० १०।५४।४५)। **योनिषु संक्रमयतीत्याह।** जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् (मनु० १२।१२४)। **संसारयति=भ्रमयति।** पापान् संसृत्य संसारान् प्रेष्यता यान्ति शत्रुषु (मनु० १२।७०)। **पापान् संसारान्=कुत्सिता गतीः।** दर्शनेन विहीनस्तु संसारं प्रतिपद्यते (मनु० ६।७४)। **संसारं जन्म-मरणप्रबन्धम्। प्राण्युत्पादे संसरणमसम्बाधचमूगतौ। घण्टापथे**...(अमरः)॥

—सृज् (सृज् विसर्गे)। तं मा संसृज वर्चसा (ऋ० १०।९।९)। **संसृज=संयोजय।** सं नः सृज सुमत्या वाजवत्या (ऋ० १।३१।१८)। सं ता इन्द्रो असृजदस्य शार्कैर्यदीं सोमासः सुषुता अमन्दन् (ऋ० ५।३०।१०)। असृजन्मधुना संमधूनि (ऋ० १०।५४।६)। सं वत्सेनासृजता मातरं पुनः (ऋ० ११०। ८)। तेनेवैनं संसृजति शान्त्यै (तै० सं०)। **संसृजति युङ्क्ते।** शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः। न केन चित् समसृजच्छन्दसा तं प्रजापतिः (यमस्मृतौ)॥ **समसृजत्=सम्बद्धमसृजत्।** संसृज्यते सरसिजैररुणांशुभिन्नैः (रघु० ५।६।९)। **संसृज्यते—सम्पृच्यते।** सौमित्रिणा तदनु संससृजे (रघु० १३।७३)। **संजग्मे इत्यर्थः।** अस्त्यल्पं चेदमुच्यते कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति (ब्रह्मसू० २।१।९ शां० भा०)। **संसृजेत् युञ्जीत।**

मद्रकेषु च संसृष्टं शौच गान्धारकेषु च (भा० कर्ण० ४०।३०)। **संसृष्टं सङ्कीर्णं नष्टम्**। संसृष्टं चात्र कारणम् (भा० सभा० ५।३२)। **संसृष्टम्=सङ्गतम्**। संसृष्ट त्रिषु संगतम् इति मेदिनी। संसृज्य विश्वा भुवनानि गोप्ता (नि० १।१५।७)। **संसृज्य=सृष्ट्वा**। न संसर्ग व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः (मनु० ११।४७)। **संसर्गः=सङ्गः, संस्पर्शः, उपश्लेषः, संगमः**। प्रत्याहारेण संसर्गान् (मनु० ६।७२)। **संसर्गः=विषयसम्पर्कः, इन्द्रियार्थसङ्गः**।

**—सृप् (सृप्लृ गतौ)**। संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययाऽसौ (मेघ० ५३)। **संसर्पन्त्या=सङ्क्रामन्त्या**।

**—स्कृ (सुट्+डुकृञ् करणे)**। ककुभं समस्कुरुत माघवनीम् (शिशु० ६।२५)। **ऐन्द्रीं दिशमलमकुरुतेत्याह**। वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते (भर्तृ० २।१६)। **संस्कृता परिष्कृता, संस्कारवती, परिशोधिता, निर्दूषणा**। मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः (मनु० ५।३६)। **संस्कृतान्=पूतान्**। संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधि (रघु० १५।३१)। **जातकर्मादिभिः संस्कारैस्तौ मैथिलीसुतावपावयद् इत्यर्थः**। जीवां भूयो रघुपतिवृषा स्पर्शतः संस्करोति (महावीर० ६।३७)। ये पक्षापरपक्षदोपसहिताः पापानि संस्कुर्वते (मृच्छ० ६।४ पाठान्तरम्)। **संस्कुर्वते=समुच्चिन्वन्ति**। समवाये च (पा० ६।१।१३८)। **तत्र नः संस्कृतं तत्र नः समुदितम् इति वृत्तौ**।

**—स्तम्भ् (स्तम्भु धारणे रोधने वा, सौत्रो धातुः)**। संस्तम्भ राम भद्र ते मा शुचः पुरुषोत्तम (रा० ४।१।११५)। **समाश्वसिहि, धैर्यं धेहीत्याह**। देवि संस्तम्भयात्मानम् (उत्तर० ४)। **उक्तोऽर्थः**। एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना (गीता० ३।४३)। **निश्चलं कृत्वेत्यर्थः**।

**—स्तु (ष्टुञ् स्तुतौ)**। अथापि मित्रो वरुणेन संस्तूयते (नि० ७।३।१०)। **सह स्तूयते इत्यर्थः**। ते ब्रह्मसंस्तुताः (आप० ध० १।१।१।३२)। **संस्तुताः कीर्तिताः**। धावति पश्चादसंस्तुतं चेतः (शा० १।३३)। **असंस्तुतमननुरोधि विसंवादि**। संस्तुतानाचष्टे (का० श्रौ० ५।५।६)। **संस्तुताः संगताः (जाराः)**। नैयमिकं ह्येतद् ऋणसंस्तुतम् (आप० ध० १।१।१) इत्यत्र धूर्तस्वाम्युद्धृत वसिष्ठवचनम्)। अनेकशः संस्तुतमप्यनल्पा नवं नवं प्रीतिरहो करोति (शिशु० ३।३१)। **संस्तुतः=परिचितः**। जयन्ति महतां संस्तुतापलापिन्यः कल्याणिन्यो नीतयः (मालती० १०।२३)। **संस्तुतम्=अभिप्रेतम्, विवक्षितम्**। न वश योषितो यान्ति न दानैर्न च संस्तवैः (पञ्चत० ४।८६)।

**संस्तवः=स्तुतिः** । गुणाः प्रियत्वेधिकृता न संस्तवः (कि० ४।२५) । **संस्तवः परिचयः** । नवैर्गुणैः सम्प्रति संस्तवस्थिर तिरोहितं प्रेम घनागमश्रियः (कि० ४।२५) । **संस्तवः परिचयः** । **उक्तोऽर्थः** । कामं नैतत् प्रशसन्ति सन्तः स्वबलसंस्तवम् (भा० उ० १६८।३४) । **संस्तवः=स्तुतिः** । श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः (भा० महाप्र० ३।१७) । तमिम ज्ञानवृद्धः सन् गोपं संस्तोतुमिच्छसि (भा० सभा० ४१।६) । **सस्तोतुम्=स्तुतम्** । स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् (अमर०) । अथास्य सस्तविका देवा इन्द्रः सोमो वरुणः पर्जन्य ऋभवः (नि० ७।८।४) । **समानः साधारणः स्तवः संस्तवः** । न त्वृक् संस्तविकी दशतयीषु विद्यते (नि० ७।८।२०) ।

**—स्तृ (स्तृञ् आच्छादने)**। आ वेदेः सरतृणाति (श० ब्रा० १।६।२।२४)। **वेदिमभिव्याप्य प्रथयतीत्याह** । प्रान्तसंस्तीर्णदर्भाः (शा० ४।८) । नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ (कु० ४।३४) । **संस्तरः शय्या** ।

**—स्त्यै (स्त्यै ष्ट्यै शब्दसङ्घातयोः)** । संस्त्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह इति (पा० ७।३।१४ सूत्रभाष्ये) । **संस्त्यायो निवास इति-कैयटः** ।

**—स्था (ष्ठा गतिनिवृत्तौ)** । सन्तिष्ठस्व महाबाहो मुहूर्तमपि भारत (भा० स्वर्गा० २।३५) । **सन्तिष्ठस्व=तिष्ठ** । तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते (मुद्रा० ३।५) । क्षण न सन्तिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्तमानः (हरि०) । **अत्र तिसृष्वुदाहृतिषु समुपसर्गो विशेषकृन्न** । सद्यः सन्तिष्ठते यज्ञः (मनु० ५।६७) । **सन्तिष्ठते समाप्तिमेति तत्पुण्येन युज्यते** (यजमान.) **इति कुल्लूकः** । न तत्संस्थास्यते कार्य दक्षेणोरीकृत त्वया (भट्टि० ८।११) । **न मध्ये विरंस्यति, न प्रतिहंनिष्यते । न प्रतिघानिष्यते** । तस्य यत्कालमेवेन्द्रियाणि सन्तिष्ठन्ते (चरके शरीर० ४।१५) । **अभिनिर्वर्तन्ते इत्यर्थः** । तेऽब्रुवन् । संस्थापयामेमं यज्ञम् (ऐ० ब्रा० २।३१) । **समाप्तं करवामेत्याह** । साध्वसंस्थितं वा एष पितृयज्ञ सस्थापयति (ऐ० ब्रा० ३।३७) । **उक्तोऽर्थः** । एष वै प्रजनयिता यन्मुष्करः, तस्मान्मुष्करो भवति तं न संस्थापयेत् पर्यग्निकृतमेवोत्सृजेत् (श० ब्रा० ३।७।२।८) । **न संस्थापयेत्=नालभेत=न हन्यात्** । देह संस्थापयिष्यामि निर्भयं मार्गमाश्रितः । (भा० आदि० ११६।२०) । **संस्थापयिष्यामि=अवसाययिष्यामि** । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे (गीता०) । **संस्थापनं प्रतिष्ठापनम्** । असंस्थितान्प्राणान् सस्थापयेत् (ऐ० ब्रा० २।२८) । **चलानसून्चलान्कुर्यादित्यर्थः** । केयमवस्था संस्थापनानाम् (हर्ष०अष्टम उच्छ्वासे) । **संस्थापनाः=सान्त्वनाः** । संस्थापना प्रियतरा विरहातुराणाम्

(मृच्छ० ३।३)। संस्थाप्यैव तस्य राज्ञस्तं यज्ञं शक्रतेजसः (भा०आश्व०८९।६)। **संस्थाप्य=परिसमाप्य।** संस्थाप्य पौर्णमासीं वैमृधमनु निर्वपति (बौ०श्रौ०१७। ४७।२)। **उक्तोऽर्थः।** यदत ऊर्ध्वमसंस्थित यज्ञस्य तत्तनवामहै (श० ब्रा० १।८। १।४३)। **असंस्थितम्=असमाप्तम्।** ब्रह्मेवासंस्थित हविः (अथर्व०६।५०।२)। **उक्तोऽर्थः।** संस्थिते च संचरोऽनूत्करदेशात् (बौ० ध० १।७।१५।१९)। **संस्थिते=समाप्ते।** असंस्थितो वा एष यज्ञो यदग्निहोत्रम् (तै० ब्रा० २।१।४।६)। **असमाप्तः=अविरतः। अत एव जरामर्यमित्यन्यत्रोक्तम्।** दारुभारेण जीवामो विक्रीतेनेति संस्थिताः (यो० वा० ६ (२) १९६।१५)। **संस्थिताः=निश्चिताः।** न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः (याज्ञ० १।१३१)। **संस्थितः=उत्थितः।** प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ (रा० १।४।२०)। संस्थितदोर्विषाणः (रा० ३।३१।४६)। **सम्यगवस्थितौ दोषौ बाहू एव विषाणे दन्तौ यस्य स (राघवगन्धहस्ती)।** संस्थितो यदि सङ्कल्पो दुश्चिकित्स्यः स्वतो भवेत् (यो० वा० ४।५४।३३)। **संस्थितः परमार्थभूतः।** संस्थितस्य गुणोत्कर्षः प्राय. प्रस्फुरति स्फुटः (सुभाषितम्)। **संस्थितस्योपरतस्य।** वराहसंस्थित भूतं मत्समीप समागमत् (भा० वन० १९७।१८)। **वराहवत् संस्थितमाकारो यस्य तत्।** प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसंस्थितम् (का० नी० सा० १९।५२)। **असंस्थितम्=अनिविष्टम्। इह बलमिति विशेष्यम्।** नैता रूपं परीक्षन्ते नासां वयसि संस्थिति (मनु० ९।१४)। **संस्थितिः समादर.।** अहो इमां को नु लभेत संस्थितिम् (भा० पु० ३।१९।२७)। **संस्थितिः=मृत्युः।** नाङ्गस्य वंशो राजर्षिरेष संस्थातुमर्हति (भा० वि० १४।४२)। **संस्थातुम्=समाप्तुम्।** वणिक् कृषी तथा लिङ्गी भिक्षुकोऽध्यापकस्तथा। संस्थाः स्युश्चारसंस्थित्यै (का० नी० सा० १३।३६)। **संस्था रूपं व्यञ्जनं वा।** वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे (मनु० १।२१)। **संस्थाः=व्यवस्थाः। व्यवसाया इत्यर्थः।** लोकस्य संस्था न भवेत् सर्वं च व्याकुली भवेत् (भा० शां० ५६।६)। **संस्था व्यवस्था मर्यादा।** विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम् (भा०शां० २६६।४५)। **संस्थाव्यतिक्रमम्=मरणानौचित्यम् मर्यादाभङ्गमिति वा।** कृतां संस्थामतिक्रान्ता भयात्प्रायमुपासिताः (रा० ४।५७।१८)। **संस्था=समयः, सङ्केतः, प्रतिज्ञा।** संस्था हि क्रियां प्रत्यौदासीन्यं व्यापारान्तरकरणं वा पूर्वस्मात्कर्मणः (मी० १०।६।३० सू० शा० भा०)। **संस्थाः समाप्तिः।** पुरा यज्ञस्य संस्थायाः (श० ब्रा० ३।१।३।६)। **संस्था=सम्पूर्णता।** सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थाम् (भा० उ० ३८।२)। **आत्मसंस्थाम्=स्वस्थितिम्।** श्रोत्रियसंस्थायामपरिसंवत्सरायाम् (आप० ध० १।३।१०।१०)। **संस्था=मृतिः। संस्थां च पाण्डुपुत्राणां वक्ष्ये** (भा० पु० १।७।१२)। **उक्तोऽर्थः।** फल-

संस्था भविष्यामि कृत्वा कर्म सुदुष्करम् (भा० आदि० १५९।१३)। **फल-संस्था=सफलमरणा**। ब्राह्मणानामसाध्य च नृषु संस्थानचारिषु (भा०आदि० १८८।१२)। **संस्थानचारिषु देवासुराद्याकारैश्चरत्सु**। अथ चतुष्पथे सन्निवेशे च संस्थानम् (अमरः)। स्त्रीसस्थानं चाप्सरस्तीर्थमारादुत्क्षिप्यैनां ज्योतिरेकं जगाम (शा० ५।३०)। **स्त्रीसंस्थानं स्त्र्याकृति**। प्रक्षेप्स्यन्त्स्यन्तरिक्षे च सस्थानं त्वमवाप्स्यसि (वि० पु० ५।१।८०)। **संस्थानं स्थितम्**। शेष तु बद्धसंस्थानस्तिष्ठाम्यचलशृङ्गवत् (यो० वा० ५।८६।४)। **बद्धसंस्थानो बद्धासन इत्याह**। भासमानासनसंस्थानाः कुसुमस्थलीः (यो० वा० ६ (२)।१४५।१६)। **संस्थानमवयवसन्निवेशः**।

**—स्पृश् (स्पृश संस्पर्शने)**। अवतीर्य सरः स्वर्गी संस्प्रष्टुमुपचक्रमे (रा० ७।७७।१६)। **संस्प्रष्टुम्=उपस्प्रष्टुम्=आचमितुम्। अन्यत्र दुर्लभोऽत्रार्थे समः प्रयोगः**। यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया (शा० ४।५)। **संस्पृष्टम् अभिभूतम्**।

**—स्मृ (स्मृ चिन्तायाम्)**। स्मर संस्मृत्य न शान्तिरस्ति मे (कु० ४।१७)। राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् (गीता १८।२७)। रागिणापि विहिता तव भक्त्या संस्मृतिर्भवति मङ्क्षवभवाय (कि० १८।२७)।

**—स्रु (स्रु गतौ)**। ये नदीनां संस्रवन्त्युत्सासः सदमक्षिताः (अथर्व १।१५।३)। **संस्रवन्ति=स्यन्दन्ते**। इमं गोष्ठं पशवः संस्रवन्तु (अथर्व० २।२६।२)। **संस्रवन्तु=प्राप्नुवन्तु**। संस्रवान् समवनीय (आश्व० गृ० ४।८।६)। **अर्घ्यदानावशिष्टा आपः संस्रवाः**। संस्रवभागाः स्थ (वा० सं० २।१८)। **विलीनमाज्यं संस्रवः**।…तेषां संस्राववच्छुचिरिति (बौ० ध० १।५।८।१९)। **संस्रावः=लाला**। संस्राव्येण हविषा जुहोमि (अथर्व० १९।११)। **सम्यक् स्रावः संस्रावः, तमर्हतीति संस्राव्यं (हविः)। आज्यपयआदि**।

**—स्वृ (स्वृ शब्दोपतापयोः)**। समीं रेभासो अस्वरन्निन्द्रं सोमस्य पीतये (ऋ० ८।८३।११)। **समस्वरन् अशब्दयन्, आकारयन्**।

**—हन् (हन हिंसागत्योः)**। सं ते हन्मि दता दतः (अथर्व० ६।५६।३)। **संहन्मि संश्लिष्टान्करोमि**। सिंहः संहननात्…संहाय हन्तीति वा (नि० ३।१८)। संहत्य कुर्वते यात्रां सहिताः सङ्घचारिणः (भा० आश्व० ३९।४)। **संहत्य=मिश्रीभूय**। विनाशितानि संहत्य नित्यशः पिशिताशनैः (रा० ३।११।६०)। **संहत्य=समेत्य=एकीभूय**। प्रधानभूत आख्यातार्थे सहत्य विशेषणं भवति परार्थे पुनर्वियुज्येति (मी० ६।४।२३ शा० भा०)। **संहत्य=युगपदन्वित्य**। संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः (मनु०

२।७१)। संहृत्य=संश्लेष्य। संहृत्य भीमसेनाय व्याक्षिपत्सहसा करम् (भा० वन० १२।१०६)। संहत्य=संगृह्य=मुष्टीकृत्य। उद्वासनकाल आमिक्षां संहत्य (आप० श्रौ० ८।१।२।६)। तयोः पात्रयोरुद्धृत्य। शब्द मन्दरकन्दरोदरदरीः सहत्य वा सागरः (ऊरु० १।१५)। संहत्य, आहत्य, अभिहत्य। पयोधरोत्सेधविशीर्णसंहतिः (कु० ५।८)। गुरुतां नयन्ति हि गुणा न संहतिः (कि० १२।१०)। संहतिः सङ्घातः। मूर्त्तिरिति यावत्। तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियते (श० ब्रा० १४।७।१।१६)। संहत्य संगृह्य सङ्कोच्य। संहननवत्कायोपपन्नः (अवदा० जा० २५)। संहननं काठिन्यं तद्वान् कायः=संहननवत्कायः, तेनोपपन्नो युक्तः। रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् (रा० ३।१।१३)। रूपयुक्तं संहननम् आपादकेशं संश्लिष्टसन्धिबन्धः। तत्कार्मुकं संहननोपपन्नम् (भा० आदि० १८७।१८)। संहननम् काठिन्यम्। मन्त्रसंहननो राजा मन्त्राङ्गानीतरे जनाः (भा० शां० ८३।५०)। मन्त्रसंहननः=मन्त्रकवचः। गात्र वपुः संहननं शरीरम् (अमरः) अमृताध्मातजीमूतस्निग्धसंहननस्य ते (उत्तर० ६।२१)। संहननं शरीरम्। द्रढः सङ्घातकठिनः (कु० २।११)।

—हा (ओहाक् त्यागे, ओहाङ् गतौ)। सं सहसे पुरुमायो जिहीते (ऋ० ३।५१।४)। संजिहीते=गमनोद्यमं करोति। यदा वै तान्तः प्राणं लभतेऽथ संजिहीते (कौ० उ०)। संजिहीते=उत्तिष्ठति। सं तेन प्राणेन समजिहीत (श० ब्रा० ४।२।२।११)। समजिहीत=उदस्थात्=समजीवीत्। ततः पुनर्नं सहास्यन्ते (श० ब्रा० १।२।४।११)। नोत्थास्यन्ति, न शिर उन्नमयिष्यन्तीत्याह। यथा जले सञ्जिहते जलौकसः (भा० पु० १०।४०।१५)। संजिहते प्रचरन्तीति श्रीधरः। यथान्यत्र तथेहापि कवे रूढि प्रत्यनादरः। स ह प्रातः सजिहान उवाच (छां० उ० ५।११।१५)। संजिहानः शय्यां परित्यजन्। सम्पूर्वो जहाति शय्यापरित्यागे वर्तते तथा च ब्राह्मणे प्रयोगः—कलिः शयानो भवति संजिहानस्तु द्वापरः (ऐ० ब्रा० ७।१५) इति सायणः। अत्र सायणीये वचने जहातिरित्यनेन ओहाङो ग्रहणं वेदितव्यं न त्वोहाकः। स विस्रस्तैः पर्वभिः न शशाक स हातुम् (श० ब्रा० १।३।३६)। संहातुम्=उत्थातुम्। उत्संहायास्थात् (ऋ० २।३८।४)। सर्वो लोकः शय्यां विहाय उदस्थाद् अवशिष्टं कर्म कर्तुं पुनरुत्तिष्ठतीति सायणः। स हाय अतो देवा अवन्तु नः (ऋ० २।२।१६) इति त्रिरेतम् (आश्व० गृ० २।२।६) संहाय=शयित्वोत्थाय। अस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहाय पक्षौ संलयायैव ध्रियते। (बृ० उ० ४।३।१६)। संहाय सश्लेष्य संकोच्य।

—हि (हि गतौ वृद्धौ च)। अस्मा इदु स्तोमं संहिनोमि (ऋ० १।६१।४, अथर्व० २०।३५।४)।

—हृ (हृञ् हरणे)। सन्तरां पादुकौ हर (ऋ० ८।३३।१९)। **लघू ते पादौ संनिकर्षतराम्**। एकं वृषभमुद्धारं संहरेत स पूर्वजः (मनु० ९।१२३)। **संहरेत=गृह्णीयात्**। ते यज्ञं सञ्जह्रुस्ते यज्ञं सम्भृत्योचुः (श० ब्रा० ३।५।१।१५)। **सञ्जह्रुः=समाजह्रुः=संबिभरामासुः**। अर्थमानप्रदानाभ्यां सञ्जहार सहानुजः (भा० आदि० १४३।१)। **सञ्जहार=सञ्जग्राह=वशे चकार**। एवमुक्त्वा महर्षयः सञ्जह्रुस्ताः क्रियास्तदा (भा० आश्व० )। न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनः (हितोप०)। **संहरते=प्रत्याहरति**। संजहार बहिश्चित्तं सायमर्को रुचिं यथा (यो०वा० ६ (२)। १३८।१५)। शङ्के संहरति स्मरोपि चकितस्तूणार्धकृष्टं शरम् (शा० ६।४)। **उक्तोऽर्थः**। क्रोध प्रभो संहर संहरेति यावद् गिरः खे मरुतां चरन्ति (कु० ४।७२)। **क्रोधं संयच्छेत्याह**। महिमानं यदुत्कीर्त्य तव संह्रियते वचः (रघु० १०।३२)। **संह्रियते=समाप्तिं विरामं नीयते**। यज्ञं सम्भरति सं च जिहीर्षति यो दीक्षते (श० ब्रा० ३।८।१।२)। चरीकर्ति वरीभर्ति संजरीहर्ति लीलया (कौस्तुभे)। **पुनः पुनः संहरति संजरीहर्ति**। नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि (पञ्चत० १।) **संहरन्=आकर्षन्**। संहरन्प्रस्तुतं वस्तु (यो० वा० ६ (१)। १।२२)। **अवसाययन्नित्याह**। स यत्र पुनर्न संहरिष्यन्त्स्यात् (श० ब्रा० १।२।२।४)। **हविषोर्यदि मिश्रीभावं नेच्छेद् इत्याह**। चिन्तयित्वा ततो वह्निश्चन्द्रे संहारमात्मनः (भा० आदि० ७।१२)। **संहारं तिरोभावम्**। संहारविक्षेपसहस्रकोटीः (भा० शां० २८०।३०)। **संहरत्यस्मिन्निति संहारशब्देन संहारकालः (जगल्लयकालः) उच्यते। विक्षेपशब्देन चोदयकालः। ऋतुसंहारः=ऋतूनां समाहारः। ऋतुवर्णनपरायाः कालिदासकृतेः समाख्या। वेणीसंहारः=वेणीबन्धः। भट्टनारायणस्य कृतेर्नामधेयम्**। इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम्। केशपाशं वरारोहा गृह्य…(भा० उ० २।३३-३४)। **वेणीरूपेण समाहृतमपि मृदुम् इत्यर्थः। वर्णसंहारः=ब्राह्मणादीनां वर्णानामेकत्र संग्रहः** (भरत नाट्य० १९।८१)। ब्राह्मण्याः प्रथमः पुत्रो भूयान्स्याद्राजसत्तम। भूयो भूयोपि संहार्यः पितृवित्ताद् युधिष्ठिर (भा० अनु० ४७।३८-३९)॥ **संहार्यः=संविभजनीयः**। उपस्थितमसंहार्यैर्हयैः (रा० ५।६।५)। **असंहार्याः=अनुपरोध्याः=अवार्याः=दुर्निवाराः**। विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम (रा० ५।३७।४)। **उक्तोऽर्थः**। शूरान्भक्तानसंहार्यान् (सहायान्) (भा० शां० ५७।२३)। **असंहार्यान्=अभेद्यान्**। अनुरक्तोऽसंहार्यः पार्थान्प्रति जनार्दनः (भा० उ० ८८।१)। **असंहार्यः=पृथक् कर्तुं न शक्यः**। मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः (भा० शां० ११५।१५)। **उत्कोचादिनाऽभेद्याः**। कृच्छ्रां वृत्तिमसंहार्यां सामान्यां मृगपक्षिभिः (बौ० ध० ३।३।३।२१)। **असंहार्यां दुर्भराम्**। अमुं

युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते (रघु० १३।६)। **संहृत्य=उच्छिद्य।** अभिषेकविधानं तु तस्मात् संहृत्य लक्ष्मण (रा० २।२२।११)। **संहृत्य=विरमय्य, समापय्य।** संहृत्यैतानि सर्वाणि यज्ञ निर्वर्तयन्त्युत (भा० शां० २६८।२६)। **संहृत्य=एकीकृत्य।** पादान् संहृत्य (का० श्रौ० ६।६।३)। **संहृत्य=समाहृत्य, एकीकृत्य।**

—**हृष्** (**हृष तुष्टौ**) निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः (भा० उ० १५१।७०)। **रोमाञ्चितान्यभवन्नित्याह।** उभौ परमसंहृष्टौ मत्ताविव महागजौ (भा० वि० १३।२७)। **हृष्टलोमानौ, कण्टकितगात्रौ।** तस्मिंस्त्रिवर्गानुगुणा गुणौघाः संहर्षयोगादिव सन्निविष्टाः (अवदा० जात० २-१)। **संहर्षः स्पर्धा संघर्षः।** बाल्यात्कामाच्च मोहाच्च संहर्षाच्चापलेन च (हरि० १।१२।१३)। **अभिनिवेशादित्यर्थः।** ते वाहयन्तस्त्वन्योन्यं संहर्षात्सहसा द्रुताः (हरि० २।१४।२२)। **अत्र संहर्षः स्पर्धेति भाति।**

—**ह्राद्** (**ह्राद अव्यक्ते शब्दे**)। श्वशृगालगर्दभसंह्रादे (गौ० ध० २।७।८)। **संह्रादः सहशब्दनम्।**

—**ह्लाद्** (**ह्लादी सुखे च, चादव्यक्ते शब्दे च**)। एकैकमस्थ्यसंह्लादयन्तोऽवदध्युः (आश्व० गृ० ४।६।६)। **अस्थ्नां सङ्घट्टनेन शब्दो यथा न स्यात्तथाऽवदध्युरित्याह।**

—**ह्वे** (**ह्वेञ् स्पर्धायां शब्दे च**)। संह्वयस्व विवक्षितम् (भट्टि० ८।१७)। **ब्रूहीत्याह। शङ्के कवेरयं स्वकपोलकल्पितेर्थे प्रयोगः।** हूतिराकारणाऽऽह्वानं संहूतिर्बहुभिः कृता (अमर.)।

## समति (सम्+अति)

—**क्रम्** (**क्रमु पादविक्षेपे**)। द्वौ मासौ समतिक्रम्य पास्यामि रुधिरं तव (रा० ५।५६।७६)। **समतिक्रम्य=अतिक्रम्य=विगमय्य।**

—**वृत्** (**वृतु वर्तने**)। इन्द्रियाणां वशानुगम्। अर्थाः समतिवर्तन्ते हंसाः शुष्कंसरो यथा (भा० उ० ३६।४०)। **समतिवर्तन्ते=अतीत्य गच्छन्ति।**

—**सृज्** (**सृज विसर्गे**)। तर्ह्येत एव समतिसृष्टाः स्तुवताम् (छां० उ० १।११।३)। **समतिसृष्टाः समनुज्ञाताः।**

## समधि (सम्+अधि)

—**इङ्** (**इङ् अध्ययने**)। दश लक्षणानि धर्मस्य ये विप्राः समधीयते। (मनु० ६।९३)। **समधीयते=सम्यगधीयते।** समधीतं मया ब्रह्म (भा० वन० १३८।२४)।

—**गम्** (**गम्लृ गतौ**) हन्तुं समधिगच्छति (रा० २।८४।५)। **समधिगच्छति=उपैति, उपक्रामति।** यत्ते समधिगच्छन्ति यस्य ते तस्य तद् धनम् (मनु०

८।४१६)। **समधिगच्छन्ति=अर्जयन्ति, प्राप्नुवन्ति, अधिकुर्वते।** यो भारतं समधिगच्छति वाच्यमानम् (हरि० १।१।२)। **समधिगच्छति=शृणोति।**

—**स्था (ष्ठा गतिनिवृत्तौ)**। जीवन्मुक्तमना मान्यो विश्वामित्रोप्ययंप्रभुः। वेदोक्तां मखनिर्माणक्रिया समधितिष्ठति (यो० वा० ५।७५।२३)। **समधितिष्ठति =स्वाधिकारे स्थापयति=अवेक्षते।**

**समनु (सम्+अनु)**

—**आप् (आप्लृ व्याप्तौ)**। देवैरिन्द्रस्त्वं भविष्यसीति समन्वीप्सितम् (वि० पु० ४।६।८)। **समन्वीप्सितम् अभ्युपगतम्।** शतधन्वनिधनायोद्यमं कुर्वित्यभिहितस्तथेति समन्वीप्सितवान् (वि० पु० ४।१३।८०)। ममायमच्युते नैव सामान्यः समन्वीप्सितः (वि० पु० ४।१३।१५०)। **उक्तोऽर्थः।**

—**इ (इण् गतौ)**। ततस्तां प्रहितां देवीमिन्द्राणी सा समन्वगात् (भा० उ० १४।५)। **अन्वपद्यतेत्यर्थः।** भिन्नानां समानरूपता समन्वयः (वाचस्पतिमिश्रः)।

—**क्लृप् (कृपू सामर्थ्ये)**। दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत् (भा० वन० १०६।१८)। **अकल्पयदित्येवार्थः। नार्थः समनुभ्याम्।**

—**गम् (गम्लृ गतौ)**। यदिदं धर्मगहनं बुद्धया समनुगम्यते (भा० स्त्री० ५।१)। **समनुगम्यते=विगाह्यते।**

—**ग्रह् (ग्रह उपादाने)**। अवमुच्य किरीटं स केशान्समनुगृह्य च (भा० सभा० २३।६)। **समनुगृह्य=अवस्थाप्य=अनाकुलान्कृत्वा।**

—**ज्ञा (ज्ञा अवबोधने)**। गोभिश्च समनुज्ञातः सर्वत्र च महीयते (भा० अनु० ७३।४६)।

—**दिश् (दिश अतिसर्जने)**। तद्यदवाग्यित्परः कृन्तन्ति यदुल्बणं यद्विथुरं क्रियते शमितृभ्यश्चैवैनं तन्निग्रभीतृभ्यश्च समनुदिशति (ऐ० ब्रा० २।७)। **तच्छमित्रादीनां भागधेय इति कल्पयति, तेभ्यः प्रदेश्य इति निश्चिनोति।**

—**धाव् (धावु गतिशुद्धयोः)**। (धनञ्जयं) समन्वधावन् (भा० कर्ण० ७६।६२)। **आसादयितुं त्वरितमन्वसरन् इत्यर्थः।**

—**युज् (युजिर् योगे)** धार्तराष्ट्रं सहामात्यं स्वयं समनुयुङ्क्ष्महे (भा० उ० ७२।३)। **समनुयुङ्क्ष्महे=प्रार्थयामहे।** न च प्रेषयिता कश्चित्प्रेष्यैः समनुयुज्यते (रा० ५।१। ६८)। **समनुयुज्यते=नियुज्यते, आदिश्यते, अनुशिष्यते।**

—**वृत् (वृतु वर्तने)**। प्रयोजनवतीं प्रीतिं लोकः समनुवर्तते (रा० ६।८२। ४५)। **समनुवर्तते=अनुवर्तते=अनुसरति।**

### समन्वा (सम्+अनु+आङ्)

**—गम्ॢ (गम्ॢ गतौ)**। यदा तु (धर्मः) सामान्येन समन्वागतो भवति (यो० सू० ३।१४ भाष्ये)। **समन्वागतो युक्तः।**

**—रभ् (रभ राभस्ये)**। त विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च (श० ब्रा० १४।७।२।३)। **सममनुबध्नीतः। युगपच्छिलष्यतः।** तस्मिन्नुपविष्टायां समन्वारब्धायाम् (आश्व० गृ० १।६।६)। सप्तहोतारं मनसाऽनुद्रुत्याहवनीये सग्रहं हुत्वोदञ्चः प्रह्वा बहिष्पवमानार्थं पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति (आप० श्रौ० १२।१६।१७)। **समन्वारब्धा इतरेतरमवलम्बमानाः।**

### समनुवि (सम्+अनु+वि)

**—चर्** (चर गतिभक्षणयोः)। उपवनानि समनुविचरंस्त तं देशमुप-जगाम (अवदा० चुडू० जा०)। **अनुसंचरन्नित्याह।**

### समप (सम्+अप)

**—ध्यै (ध्यै चिन्तायाम्)** तामवेक्ष्य ततः क्रुद्धः समपध्यायत द्विजः (भा० वन० २०६।४)। **अपध्यानमित्यशिवस्य चिन्तनम्। तदेव समपध्यानम्। अनुध्यानापध्याने विरोधिनी।**

### समपि (सम्+अपि)

**—धा (डुधाञ् धारणपोषणयोः)**। ते देवा इमाँल्लोकान्सर्वतः समपि-धायावस्तात्स्वर्गं लोकं प्रापद्यन्त (श० ब्रा० ८।६।१।२३)। **समपिधाय=समन्ताद् वेष्टयित्वा।**

### समभि (सम्+अभि)

**—पद् (पद गतौ)**। पुत्रजन्म परीप्सन्वै पृथिवीमन्वसंचरत्। अहिच्छत्रं च विषयं द्रोणः समभिपद्यत (भा० आदि० १३८।७६)॥ **समभिपद्यत= आसादयत्।** कस्य कर्मेदमिति ते पर्यपृच्छन्समागताः। युवनाश्वो ममेत्येव सत्यं समभिपद्यत (भा० वन० १२६।१८)॥ **सत्यं प्रत्यपद्यत=अभ्युपा-गच्छत्।**

**—धाव् (धावु गतिशुद्ध्योः)**। अद्य तूणीशया बाणा निर्मुक्ता इव पन्नगाः। रामं समभिधावन्तु (रा० ६।३४।२३)। **राममुद्दिश्य त्वरन्ताम्, राममभि वेगेन पतन्तु।**

**—ध्यै (ध्यै चिन्तायाम्)**। **अतोऽनुक्तेषु** या नारी समभिध्याति दौहृदम् (सुश्रुत० १।३२३।१५)। **सस्पृहं स्मरतीत्याह।**

**—नन्द् (टुनदि समृद्धौ)**। समभिनन्दितो मन्त्रिभिः (कथा० २१।१४८)। **प्रतिनन्दितः=वर्धितः=सभाजितः।**

**—प्लु (प्लुङ् गतौ)**। तद्वियोगार्दितान्सर्वाञ्छोकः समभिपुप्लुवे (भा० वन० ५२।४)। **समभिपुप्लुवे=व्याप।**

**—रञ्ज् (रञ्ज रागे)**। कोऽयं नेत्रैः समभिरज्यते (भा० शां० ३३२।१६)। **सरागो भवति। संरक्तनयनः सम्पद्यत इत्यर्थः।**

**—वृत् (वृतु वर्तने)** निशा समभिवर्तते (भा० उ० १५१।३७)। **प्रत्यासीदतीत्यर्थः**। क्षिप्रं समभिवर्तन्तां मम वाक्येन नोदिताः (हरि० २।४३। २६)। **समभिवर्तन्ताम्=समागच्छन्तु**। भवतां च वचो नालमहं समभिवर्तितुम् (भा० आदि० १८०।१३)। **समभिवर्तितुम् अनुवर्तितुम्।**

**—हृ (हृञ् हरणे)**। विप्रकीर्णानामेकत्र राशीकरणं समुदायभावापत्ति-र्मुख्यः समभिहारः, पौनःपुन्य तु गौणः (पा० ३।१।२२ सूत्रे काशिका)। **समभिहरणं** समभिहारः। पुष्पाभिहारः। उत्पलाभिहार इति तत्रैव भाष्ये।

## समभिव्या (सम्+अभि+वि+आङ्)

**—हृ (हृञ् हरणे)**। जातिशब्दस्य गुणक्रियाशब्दसमभिव्याहारेण विशेष्यसमर्पकतैव। **समभिव्याहारः=सहोच्चारणम्**। तस्य समभिव्याहारतो दोषः (वै० सू० ६।१।८)। **विद्यासम्बन्धो योनिसम्बन्धश्च समभिव्याहारः।**

## समभिसम् (सम्+अभि+सम्)

**—धा (डुधाञ् धारणपोषणयोः)**। प्रदेशिनीं ततोऽस्यास्ये शक्रः समभि-सन्दधे (भा० वन० १२६।३०)। **समभिसन्दधे=निदधे**। तपः समभिसन्धाय वनमेवान्वपद्यत (भा० वन० १८५।३७)। **समभिसन्धाय=अभिसन्धाय= अभिप्रेत्य=मनसिकृत्य।** योत्स्येहं मातुलेनाद्य क्षत्रधर्मेण पार्थिवाः। स्वय समभि-सन्धाय विजयायेतराय वा (भा० शल्य० १६।२३)॥ **समभिसन्धाय=व्यवसाय =व्यवसितो भूत्वा। समो द्विरुक्तिः।**

## समभिसम्प्र (सम्+अभि+सम्+प्र)

**—आप् (आप्लृ व्याप्तौ)**। सिद्धिं समभिसम्प्राप्ताः पुण्येन महताऽन्विताः (भा० वन० ८२।२६)। **आप्ता इत्येवार्थः। समिति द्विरुक्तम्। नार्थ इतरैर-प्युपसर्गैः।**

## समभ्यव (सम्+अभि+अव)

**—इ (इण् गतौ)**। पशोर्वा आलभ्यमानस्य हृदयं शुक् समभ्यवैति (श० ब्रा० ३।८।५।८)। **आविशतीत्याह**। येनो ह समभ्यवेयान्नास्मै द्रुह्येत (श०

ब्रा० ३।४।१।६) । **समभ्यवेयात्=संवादमुपसंवादं, वेयात् सन्दधीत ।** ते जिता अहोरात्रयोः सन्धिं समभ्यवागुः (**गो० ब्रा० उ० ४।११**) ।

**समभ्या (सम्+अभि—आङ्)**

—**इ (इण् गतौ)** । ब्राह्मणक्षत्रियाद्यं च चातुर्वर्ण्यं पुराद् द्रुतम् । दर्शनेप्सुः समभ्यागात् (भा० आदि० १३४।१७) ॥ **समभ्यागात्=समागमत्** । व्यसनं वः समभ्यागमत् (भा० सभा० ७६।१४) । **उपानंसीदित्याह ।**

—**दा (डुदाञ् दाने)** । एतास्तेजोमात्राः समभ्याददानः (श० ब्रा० १४।७।२।१) । **समं गृह्णान इत्यर्थः ।**

**समभ्युद् (सम्+अभि+उद्)**

—**चि (चिञ् चयने)** । एकस्मिन्दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन्नर्थान्तरत्वात् (आप० श्रौ० ६।१।१।२) । **समुच्चितानि स्युर्न विकल्पितानीत्याह ।**

**समव (सम्+अव)**

—**अर्ज् (अर्ज अर्जने, अर्ज प्रतियत्ने)** । अथ मातृभिर्वत्सान् समवार्जन्ति (श० ब्रा० १।७।१।३, २।५।३।१६) । **समवार्जन्ति=युञ्जन्ति । वत्सानां मातृभिः संयोगमनुजानन्तीत्यर्थः ।**

—**इ (इण् गतौ)** । तृणमिव यत्समवैति परस्वम् (वि० पु० ३।७।२२) । **समवैति=वेत्ति=जानाति । अन्यत्र समवपूर्वस्य इणोऽत्रार्थे प्रयोगो दुर्लभः । समवायः संगतिर्भवति समुदायो वा नैयायिकानामभिमतः सम्बन्धविशेषो वा ।** अमात्यादीनां राज्ञा सह समवाये पारतन्त्र्यं व्यवाये स्वातन्त्र्यम् (१।४।२३ सूत्रे भाष्ये) । **समवायः सान्निध्यं संनिकर्षः ।** पटस्तन्तुषु समवैति (**समवायसम्बन्धेन तन्तुषु वर्तते**) । **एकदेशभावापत्तिरपि समवायो भवति ।** तथा चाचार्यप्रयोगः—समवायान् समवैति (पा० ४।४।४३) । हृदयं शुक् समवैति (श० ब्रा० ११।७।४।३) । श० ब्रा० ३।८।५।८ **इत्यत्र शुक् समभ्यवैतीति पाठः । तेनाभौ सत्यसति वाऽर्थे भिदा न । आविशतीत्येवार्थः ।** या आपूर्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीं समवयन्ति (श० ब्रा० ११।१।७।४) । **पौर्णमास्यामेकी भवन्ति, तदेकदेशतां यन्ति ।** कं बलवन्तं संश्रयामः । कस्य समवायः (तन्त्रा० ३।४) । **समवायः संश्रयः ।** तं (धर्म) श्रुतेर्धर्मज्ञसमवायाच्च प्रतिपद्येत (कामसूत्रे) । **समवायः संसर्गः । प्रतिपद्येत=जानीयात्** । नानावाक्यसमाहारसमवायविशारदैः (भा० आदि ७०।४३) । **भिन्नशाखास्थानां गुणविधीनामेकस्यां शाखायामुपसंहारः समवायः (नील०)** । न समवायेऽभिवादनमत्यन्तशः (बौ० ध० १।२।३।३३) । **समवायः सन्निकर्षः सामीप्यम् ।** समवायेन वणिजां लाभार्थं कर्म कुर्वताम् (याज्ञ० २।२५६) । **सर्वे वयमिदं कर्म मिलिताः कुर्म इत्येवं-**

**रूपा सम्प्रतिपत्तिः समवाय इति मिताक्षरायाम्।** समवेत्य त्वरुन्धत्या विविशुः शैलसानुनि (वामन पु० ५६।६)। **समवेत्य=संगत्य।** धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः (गीता १।१)। **समवेताः=समेताः, एकीभूताः।**

**—ईक्ष् (ईक्ष दर्शने)।** नूनं त्व नात्मनः श्रेयः समवेक्षितुमिच्छसि (रा० ३।५६।१७)। **सम्यग्ज्ञातुमित्यर्थः। तत्त्वतः परिचेतुमिति वा।** शरीरे न दयां काञ्चिदात्मन समवैक्षत (रा० ४।१६।२)। सर्वं तु समवैक्ष्येदं निखिलं ज्ञानचक्षुषा (मनु० २।८)। **समवेक्ष्य=पर्यालोच्य।**

**—कॄ (कॄ विक्षेपे)।** दिव्यैर्माल्यैश्च तं देवा समन्तात्समवाकिरन् (हरि० १।११।४७)। **समवाकिरन्=समास्तृण्वन्=समाच्छादयन्।** आश्रमपदं कुसुमैः समवाकिरन् (भा० कर्ण० १८।१०)। भीष्मं...शरैः...समवाकिरत् (भा० आदि० १०२।४२)। पुष्पवृष्टयः। सुरासुरगणान्सर्वान् समवाकिरन् (भा० आदि० १८।१८)। **उक्तोऽर्थः।** महता रथसङ्घेन रथचारेण चाप्युत। वैकर्तनं परीप्सन्तो गन्धर्वान् समवाकिरन् (भा० वन० २४१।१६)। **समवाकिरन्=अरुन्धन्=पर्यवेष्टयन्।**

**—क्षिप् (क्षिप प्रेरणे)।** जग्राह तामुत्तरवस्त्रदेशे जयद्रथस्तं समवाक्षिपत्सा (भा० वन० २६८।२४)। **समवाक्षिपत्=अवाधुनोत्।**

**—गुह् (गुहू संवरणे)।** रजस्वलेव युवतिः सेना समवगूहते (हरि० २।१०५।८३)। **आत्मानमिति शेषः। देह संकोचयति, अङ्गानि संहरति।**

**—चि (चिञ् चयने)।** सुहृत्परिग्राह्यानुपमानान् हरितगोमये समवचिनोति (लौ० गृ० ४०।१४)। **समवचिनोति=सम्यगवचिनोति प्रतीच्छति। हरित-गोमये संमिश्रीकृत्य पिण्डी करोति** (देव०)।

**—दिश् (दिश अतिसर्जने)।** रुद्रं वै देवा यज्ञान्निरभजस्ते समवादिशन् (का० स २८।६)। **समवादिशन्=तन्निर्भजनं व्याख्यन्=प्रावोचन्।**

**—दो (दो अवखण्डने)।** ते देवाः। जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरे (श० ब्रा० ३।४।२।८)। आज्यान्येव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्धं समवद्यन्ते (श० ब्रा० ३।४।२।६)। **उभयत्र समवद्यतिरवदाय खण्डान्कल्पयित्वा सङ्ग्रहणे वर्तते।** सर्वस्य समवदाय जुहोति (तै० ब्रा० १।३।८।२)। सव्ये समवदाय (का० श्रौ० ५।६।१६)। **वामे पाणौ खण्डान्सं-गृह्येत्याह।**

**—धा (डुधाञ् धारणपोषणयोः।** तत्सर्वं समवधाय (भा० श्रौ० ६।६।६)। **समवधाय आधाय, आहितं कृत्वा। वाहनमारोप्येत्यर्थः।** अतो मणिसमवधाने शक्तिर्नश्यति (न्या० बो० त० सं० २)। **समवधानं सन्निधानं संसर्गः।** सामग्रीसमवधानेपि। **सामग्र्याः सङ्ग्रहणेपीत्याह।** एषा ह्याचार्यस्य

शैली लक्ष्यते इति भाष्ये शीले भवा शैली समवधानपूर्विका प्रवृत्तिः (कैयटः)। **समवधानमवधानम्। नार्थः समा।**

**—नी (णीञ् प्रापणे)**। द्विदेवत्यानां संस्रवान् होतृचमसे समवनयति (ऐ० ब्रा० २।६)। **अवनयो निधानम्** (षड्गुरु०)। **निधानमासेचनमभिप्रेतम्। संस्रवाः=बिन्दवः।** उदस्मात्प्राणाः क्रामन्त्याहोस्विन्नेति, नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते (बृ० उ० ३।२।११)। **समवनीयन्ते=समानीता भवन्ति, एकीभावं गच्छन्ति।**

**—प्लु (प्लुङ् गतौ)**। अकृत्वा संविदं काञ्चित् सहसा समवप्लुतः (भा० शां० १३८।१२६)। **पादपाग्रात् अवतीर्ण इत्यर्थः।**

**—सृज् (सृज विसर्गे)**। ते उभे (बृहद्रथन्तरे सामनी) न समवसृज्ये। य उभे समवसृजेयुर्यथैव च्छिन्ना नौर्बन्धनात्तीरतीरमृच्छन्ती प्लवेत (ऐ० ब्रा० १६।)। **समवसृजेयुः सहैव कुर्युः। केवलोक्तिरवसर्गः (षड्गुरु०)।**

**—सो (षो अन्तकर्मणि)**। अथ पतिताः समवसाय धर्मांश्चरेयुः (बौ० ध० २।१।२।१०)। **समवसाय सम्भूय।** अथाभिशस्ताः समवसाय चरेयुर्धर्म्यम् (आप० ध० १।१०।२९।८)। **समवसाय=सह गृहाणि कृत्वा। अवसानं गृहं भवति।**

**—हृ (हृञ् हरणे)**। नानात्ययानां वृक्षाणां रसान्समवहारमेकतां रसं गमयन्ति (छा० उ० ६।९।१)। **समवहारम्=समाहृत्य।** प्रज्ञासमवहारोऽयं कविभिः संभृतं मधु (भा० शां० १४२।३)। **समवहारो निष्ठा (नील०)।**

**समवा (सम्+अव+आङ्)**

**—या (या प्रापणे)**। यावद् यावदुदक समवायात् तावत्तावदन्ववसर्पासीति (श० ब्रा० १।८।१।६)। **समवयायात्=अधो यायात्।**

**—सृज् (सृज विसर्गे)**। अथ मातृभिर्वत्सान्समवासृजन्ति (श० ब्रा० १।५।४।३)। **संयुञ्जन्ति=मातृभिर्वत्सानां संसर्गमभ्यनुजानन्ति।**

**समा (सम्+आङ्)**

**—आप् (आप्लृ व्याप्तौ)**। सर्वं समाप्नोषि ततोसि सर्वः (गीता ११।४०)। **एकीभावेनाऽऽसमन्ताद् व्याप्नोषीत्यर्थः।** मम वाक्यं नानृतं लोके कश्चित्कुर्यात्, समाप्नुहि ( )। **शापमनुभवेत्यर्थः।** अप्रयच्छन् (कन्यां) समाप्नोति भ्रूणहत्यामृतावृतौ (याज्ञ० १।६४)। **समाप्नोति=प्राप्नोति।**

**—इ (इण् गतौ)**। भग्ने सैन्ये यः समेयात्स मित्रम् (भा० द्रोण० २।१९)। **समेयात्=साहचर्यं कुर्वीत।** यथा काष्ठं च काष्ठं च समेयातां महोदधौ (भा० शां० १७४।१५, रा० २।१०५।२६, **अत्र महार्णवे इति पाठः**)। **संगच्छे-**

**यातम्=संयुज्येयातामित्यर्थः**। ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च (वा० सं १९।४७)। समेयाद् विषमं नागैर्जलाढ्यं समहीधरम् (हितोप० ३।७३)। **समेयात्=अवगाहेत**। स्थानादपीन्द्रं कुपितः प्रकर्षेद्यमं समेयाद् वरुणं नियच्छेत् (रा० ३।४३।४२)। **यमं समेयात्=यमायालं भवेत्**। पप्रच्छ कोऽयं प्रथमं समेयिवान् (भा० वि० ७।५)। **समेयिवान् मया समगच्छत**।

**—कृ (डुकृञ् करणे)**। वायुरेनाः समाकरत्। (अथर्व० ६।१४१।१)। **सङ्कृश आनयदित्याह**। सं वां मनांसि स व्रता समु चित्तान्याकरम् (वा० सं० १२।५८)। **समाकरम्=समानयम्**। पशुं नः सोम रक्षसि… समाकृणोषि जीवसे…(ऋ० १०।२५।६)। **समाकृणोषि=समादधासि,प्रतिसस्करोषि, उपस्कुरुषे**। वि रोहितो अमृशद् विश्वरूप समाकुर्वाणः प्ररुहो रुहश्च (अथर्व० १३।१।८)। तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीत्। (ऐ० ब्रा० ५।१४)। **समाकुर्वाणं सङ्गृह्णानमेकीकुर्वाणम्। आत्मसात्कुर्वन्तमिति तु सायणः**। संहृष्ट धनमुभयं समाकृतम् (अथर्व० ४।३१।७)। **समाकृतं समानीतम्**।

**—कॄ (कॄ विक्षेपे)**। स च तं विजने दृष्ट्वा पांसुभिः कर्दमेन च। श्लेष्मणा चैव राजानं ष्ठीवनैश्च समाकिरत् (भा० आश्व० ६।३१)। **समाकिरत्=अन्वलिम्पत्**। सैनिकान्मम सूतं च हयांश्च स समाकिरत् (शरैः) (भा० वन० २०।२१)। **आच्छादयदित्यर्थः**। समाकीर्णा पिपीलकैः (रा० १।६।२४)। **पिपीलकनिर्भरेत्यर्थः**।

**—क्रम् (क्रमु पादविक्षेपे)**। सुरसमाजसमाक्रमणोचितः (रघु० ९।२२)। **देवसभाधिष्ठानार्हः**। समाक्रामत्स त शैलं स चचाल महान् गिरिः (रा० ५।५।११)। **समाक्रामत्=आरोहत्**। गुरुभारसमाक्रान्तश्चचाल च जुघूर्ण च (रा० ४।१५।२५)। **गुरुभारोपपीडित इत्याह**। सममेव समाक्रान्तं द्वयं द्विरदगामिना। तेन सिंहासनं पित्र्यमखिल चारिमण्डलम् (रघु० ४।४)॥ **समाक्रान्तम्=अध्यासितम्। आस्कन्नम्। विजितम्**। सा तु त्वया समाक्रान्ता प्रतिज्ञा (रा० १।४४।५४)। **समाक्रान्ता=तीर्णा=पालिता**। ततस्तेन समाक्रम्य गृहं नीत्वा दिनत्रयम्। संस्थाप्य तव लीलार्थमिहानीतो रघूद्वह (यो० वा० (६(२)। ११६।१६)॥ **समाक्रम्य=आसाद्य, त्वरितमुपगम्य**।

**—क्रीड् (क्रीडृ विहारे)**। इह देवः सपत्नीकः समाक्रीडत्यधोक्षजः (भा० अनु० १४।६६)। **समन्ताद् विहरतीत्यर्थः**।

—**क्षिप् (क्षिप प्रेरणे)** । वाससां तत्र राशिं समाक्षिपत् (भा० आदि० १। १५८) । **समाक्षिपत्=आक्षिप्य (हृत्वा) उपसमाधात्** । न चोष्ठौ न भुजौ जानू न च वाक्यं समाक्षिपेत् । सदा वातं च वाचं च ष्ठीवनं चाचरेच्छनैः (भा० वि० ४। ३५) ॥ **समाक्षिपेत्=यदृच्छयाऽनुयुञ्जीत, अनुयोगादिना वान्तरा प्रतिबध्नीयात्** । सेनाबिन्दुमथो राजन्राज्यादाशु समाक्षिपत् (भा० सभा २७।१०) । **समाक्षिपत्=अवाक्षिपत्=अवारोपयत्** । पञ्चमेन शिरः कायात्सारथेश्च समाक्षिपत् (भा० कर्ण० २८।५) । **समाक्षिपत्=अपाहरत्** । विभूषणानां च समाक्षिपन्प्रभाः (भा० द्रोण० ५०।४) । **समाक्षिपन्=संहरन्** । समाक्षिपन्भानुमतः प्रभां मुहुस्त्वमन्तकः (भा० आदि० २३।२०) । तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः (भा० वन० २६८।२४) । **समाक्षिप्ततनुः=हठात्प्रणुन्नकलेवरः** । समाक्षिप्य रथात्तस्मात् सारथिम् (रा० ३।५६।५०) । **समाक्षिप्य=अवपात्य** । शाखां चन्दनवृक्षस्य समाक्षिप्य (रा० ४।७।१४) । **समाक्षिप्य=अवस्कद्य=शातयित्वा** । द्रौपद्या वसनं बलात् । सभामध्ये समाक्षिप्य (भा० सभा० ६८।४०) । **अवरोप्येत्यर्थः** ।

—**ख्या (ख्या प्रकथने)** । न हि सम्बन्धादृते समाख्यानम्···ननु प्रवचनलक्षणा समाख्या स्यात्(मी० १।१।२७ सूत्रे शा० भा०)। **समाख्यानम्, समाख्या=नामधेयम्** । प्रकर्षेण वचनम् (प्रवचनम्) अन्यस्य साधारणं कठादिभिरनुष्ठितं स्यात् तथापि हि समाख्यातारो भवन्ति (मी० १।१।३०) सूत्रे शा० भा०) । **समाख्यातारः=नामनिर्देष्टारः** । तिस्रः कोटयः समाख्याताः । **समाख्याताः=परिगणिताः** । पुरुषार्थं ज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् (सां० का० ६९) । **समाख्यातम्=प्रोक्तम्** । संक्षेपतो वै स विशुद्धकर्मा तेभ्यः समाख्याय दिवि प्रवासम् (भा० वन० १६५।१३) । **समाख्याय=आख्याय=उक्त्वा** ।

—**गम् (गम्लृ गतौ)** । राजभिस्तत्र वार्ष्णेयः समागच्छद्यथावयः (भा० उ० ९१।८) । **समागच्छत्=समगंस्त** । रत्नं समागच्छतु काञ्चनेन (सुभाषितम्) । **समागच्छतु=संयोगमेतु, संयुज्यताम्** । प्रहृष्टो भव विप्रर्षे समागच्छ मया सह (भा० अनु० १९।८१) । **मां संगच्छ, संविश, संभवेत्याह** । सा त्वं मया समागच्छ (भा० वन० ३०६।२८) । **उक्तोऽर्थः** । रथा रथैः समाजग्मुः पादातैश्च पदातयः (भा० वि० ३९।२) । **युयुत्सयाऽभिमुखाः संगता बभूवुरित्यर्थः** । ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः (भा० कर्ण० २१।९) । **उक्तोऽर्थः** । पाण्डवान्···समाजग्मुर्महावने (भा० वन० १२।१) । **समाजग्मुः=उपययुः** । क्व नु वयं तं नरं समागच्छेम यो नस्तद्रूपमापादयेत्पुनः (भा० आदि० २१७।१३) । **समागच्छेम=विन्देमहि, लभेमहि** । समागच्छन्त्ययत्नेन

संगमं च परस्परम् (रा० ४।४४।७८)। **उक्तोऽर्थः**। तां कौमुदीमिव समागमयेन्दुबिम्बे (विक्रम०)। समागमय वैदेह्या रामम् (रा० ५।६।२६)। **सगमं कारयेत्यर्थः**। तेन कर्णेन ते तात कथमासीत्समागमः (भा० वि० ८।६६)। **समागमः=संग्रामः**। तेषां समागमो घोरस्तुमुलो लोमहर्षणः (भा० वि० ३२।४)। **उक्तोऽर्थः**। अहं तु मन्ये तव न क्षमं रणे समागमं कोशलराजसूनुना (रा० ३।३७।२५)। पुनरेव तयो राजन्घोर आसीत्समागमः (भा० द्रोण० १३२।८)। दारुणश्च पुनस्तत्र प्रादुरासीत्समागमः (भा० कर्ण० २१।८)। तच्च भीमं महद् युद्धं कृपार्जुनसमागमे (भा० वि० ५६।५)। **समागमः=समासत्तिः**। रणे तेन विराटेन भविता वः समागमः (भा० उ० ५०।४०)। **उक्तोऽर्थः**। स रावणः समागम्य विधिवत्तेन रक्षसा (रा० ३।१५।३६)। **समागम्य=संगत्य**। स समागम्य शर्मिष्ठां यथाकाममवाप्य च (भा० आदि० ८२।२५)। **समागम्य=संभूय=मिथुनीभूय**। अनुमान्य तदा तारा सुग्रीवेण समागतः (रा० १।१।६६)। **सङ्ग्रामयाञ्चक्र इत्यर्थः**। ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकम् (भा० आदि० १५३।३५)। **उक्तोऽर्थः**। अपि कृत्यकृतं तात रामेणात्र समागतम् (रा० २।११३।७)।

—**गल्** (**गल स्रवणे**)। प्राकम्पत स शैलराट्। मुमोच पुष्पवर्षं स समागलितपादपः (भा० आदि० ११०६)। **सहसा पतितपादप इत्याह**।

—**ग्रह्** (**ग्रह उपादाने**)। समागृभाय वसु भूरि पुष्टम् (**अथर्व**० १८।२।६०)। **समागृभाय=साकं गृहाण**। आ तू न इन्द्र क्षुमन्त चित्रं ग्राभं सं गृभाय। महाहस्ती दक्षिणेन (**ऋ**० ८।८१।१)॥ **उक्तोऽर्थः**।

—**घ्रा** (**घ्रा गन्धोपादाने**)। गन्धं समाघ्राय (रा० ५।२३।३२)। **गन्धमुपादायेत्यर्थः**। कनीयसः समाघ्राय शिरःसु (भा० आदि० १२६।३०)। **समाघ्राय=उपाघ्राय, चुम्बित्वा**। ऋणैः किल समाघ्रातः पुरुषो जायते त्रिभिः (बृ० श्लो० स० ५।२)। **समाघ्रातः संस्पृष्टः**।

—**चक्ष्** (**चक्षिङ् व्यक्तायां वाचि**)। यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते (मी० १।१।२ सूत्रे शा० भा०)। **कथयन्ति वदन्ति उदाहरन्ति**। एवं गते समाचक्ष्व स्वयं निश्चित्य हेतुभिः (भा०सभा० १४।७०)। समाचक्ष्व =व्यक्तमुदीरय। स त्वं सीतां समाचक्ष्व यत्र येनापि वा हृता (रा० ३।७५।३६)। ता समाचक्ष्व कल्याणी यदि स्याच्छैब्यमानुषी (द्रौपदी० ४, ५)।

— **चर्** (**चर गतिभक्षणयोः**)। उच्छिष्टान्न निषेक च दूरादेव समाचरेत् (मनु०४।१५१)। **समाचरेत्=निक्षिपेत्**। एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर (पञ्चत०)। **मौन समाचर=तूष्णीम्भावमातिष्ठ**। नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः (भा० उ० ७४।२)। **समाचरेः=व्यवहरेः, वर्तेथाः (अस्मिन्)**। तार-

येत्कुलं सर्वमेकोऽपीह द्विजोत्तमः। किमङ्ग पुनरेवैते तस्मात्पात्रं समाचरेत् (भा० अनु० २२।४०)। **सत्कुर्यात् सेवेत, उपचरेदित्यर्थः।** वृथाकुलसमाचारैर्न युध्यन्ते नृपात्मजा. (भा० आदि० १३६।३३)। **समाचारः=आचारः=वृत्तम्।** नायं युक्तः समाचारः पाण्डवेषु महात्मसु (भा० सभा० ३७।२)। **समाचारः=व्यवहारः। वृत्तिः।** गदायुद्धसमाचार बुध्यमानः स वीर्यवान् (भा० वन० १६०। ६७)। **समाचारः समयः संवित्।**

**—चि (चिञ् चयने)।** शैनेयं पञ्चविंशत्या सायकानां समाचिनोत् (भा० द्रोण० १६२।१६)। **आवृणोदित्यर्थः।**

**—ज्ञा (ज्ञा अवबोधने)।** महारथः समाज्ञातो महाराज महाधनुः (भा० वन० १६।२२)। **समाज्ञातः=प्रसिद्धः।** महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः (भा० आश्व० ७४।१)। **महारथत्वेन सम्यगाज्ञातैरित्याह।** शास्त्रज्ञसमाज्ञातो हि यद् ददाति यन्मानयति···तत्सर्वमतिसन्धातुमित्यविश्वासः (दशकु० पृ० २५६)। **उक्तोऽर्थः।** गन्धहस्तिनं समाज्ञातमौपवाह्यं द्विरदवरमभिरुह्य (अवदा० जा० ६)। श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत् (भा० शां० १६५।१४)। **समाज्ञाय=सम्यग्ज्ञात्वा।** भूत्वा हि नृपतिः पूर्वं समाज्ञाप्य च मेदिनीम् (भा० शल्य० ६५।१४)। **समाज्ञाप्य=प्रशिष्य।**

**—तन् (तनु विस्तारे)।** सरसेन समातन्वन् कोशे बहुसुवर्णताम् (राज० ४।२४७)। **समातन्वन्=जनयन्=साधयन्।** समाततेन श्वसनेन कूजता (भा० कर्ण० ८८।२६)। **समाततेन=सन्ततेन।**

**—दा (डुदाञ् दाने)** मत्स्यो मत्स्यं समादत्ते ज्ञातिर्ज्ञातिम् (का० नी० सा० ८।६८)। **समादत्ते=गृह्णाति=अधिकुरुते=प्रसहते।** तान्सर्वानाह्वे क्रुद्धान्सानुबन्धान् समागतान्। अहमेकः समादास्ये तिमिर्मत्स्यानिवोदकात् (भा० उ० ५७।४६)। **उक्तोऽर्थः।** फलानि चान्यानि समाददन्मे (भा० वन० ११२।१३)। **अददादित्यर्थः। अत्राङस्थाने। समा च नार्थः।** यथा महान्तमध्वानमेष्यन्रथं वा नावं वा समाददीत (श० ब्रा० १४।६।११।१)। **समाददीत=सह नयेत्।** शिशुरादत्त सं रभः (ऋ० १।१४५।३) समादत्त=साकं दधे। महानसाच्छृतं मांसं समादायैहि (नल० २३।१८)। **समादाय=उद्धृत्य।** स्कन्धैः समादाय कुमारान्। (हरि० ३।४।३०)। **स्कन्धानारोप्येत्याह। स्कन्धे समाधायेति पाठान्तरम्।**

**—दिश् (दिश अतिसर्जने)।** अर्जुनस्य समादेशं यथोक्तं सर्वमब्रवीत् (भा० उ० १६३।५२)। **समादेशम्=सन्देशम्।**

**—धा (डुधाञ् धारणपोषणयोः)।** तदेवं श्रेयः समाधत्ते यथा तथाप्युपनतः

सत्सङ्गमः (अवदा० सुत० जा०)। **समाधत्ते=जनयति** । भयं तदा रिपुषु समादधद् भृशम् (भा० द्रोण० २६।६५) **समादधत्=समादधात्।** परहर्षं समादधत् (हरि० २।६३।५)। कोपं समादधे (हरि० २।१६।२६)। **कोप धारयामास, क्रोधमाहारयामासेत्यर्थः** । सहदेवस्तु कौरव्य समाधास्यति बुद्धिमान्। कुटुम्बतन्त्रं विधिवत्…(भा० आश्व० ७२।२०)॥ **समाधास्यति=धारयिष्यति**। कल्याणानि समाधत्ते न मोहे कुरुते मनः (रा० २।५४।३०)। **समाधत्ते=मनसा कर्तुमाशास्ते**। चिरं सुधीरमभ्यधिकं समाधात् (भट्टि० १२।६)। **अचिचिन्तत्, चिन्तितवानित्याह** । अवधानं समाधानं प्रणिधानं तथैव च (अमरः)। उञ्छवृत्तिर्ऋषिः कश्चिद् यज्ञं यष्टुं समादधे (भा० शां० २७२।३)। अथ मां गोमुखोऽवोचत्स्रस्तेन मुकुटेन वः। ललाटमावृतं तेन तत्समाधीयतामिति (बृ० श्लो० सं० ८।१८)॥ **समाधीयताम्=व्यवस्थाप्यताम्**। उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् (हितोप० ४।७)। **उपायैर् व्यपोहति इत्याह** । पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः (पञ्चत० १।३२७)। **समाधत्ते=निक्षिपते । न्यस्यति** । तदात्मसंभवं राज्ये मन्त्रिवृद्धाः समादधुः (रघु० १७।८)। **प्रतिष्ठापितवन्त इत्यर्थः**। तदहं त्वत्कृते पुत्रं समाधास्ये जयोत्सुकम् (रा० १।४६।१५)। **गतवैरं भ्रातृस्नेहवन्तं करिष्यामीत्याह** (कतकः)। समाधत्त च तं बाणं धनुर्मध्ये महाबलः (भा० कर्ण० २६।२७)। **शरसन्धानमकरोदित्यर्थः**। नैव वासः समाधत्ते (हरि० २।१२६। २६)। **समाधत्ते=परिधत्ते**। धूपचन्दनतैलादि विक्रयोत्थं समादधे। द्रविणं देववेश्मभ्यः…(राज० ५।१६७)॥ **समादधे=(आहृत्य) स्ववशे चकार**। आत्मानमसमाधाय समाधित्सति यः परान् (भा० शां० २६७।२७)। तं सामानु प्रावर्तत समितो नाव्याहितम् (ऋ० १०।१३५।४)। **नावि समाहितम्=नावमारोपितम्**। अनः सुसमाहितम् (श० ब्रा० १४।७।१।४२)। **सम्यगारोपितवाह्यम् इत्यर्थः**। त्रयो लोकाः समाहिताः (हरि० ३।३१।१८)। **समाहिताः=एकीकृताः**। अपश्यद् भूमिभागांश्च सर्वतः सुसमाहितान् (रा० ५।१७।१)। **साधूकृतान् व्यवस्थापितान् इत्यर्थः**। एकार्थतायां तु समाहितायां मिथ्या वदन्तं त्वनृतं हिनस्ति (भा० आदि ८२।१७)॥ **समाहितायाम्=निश्चितायाम्** । नराश्च ये तत्र समाहिताः पुरा (भा० वि० ८।१२)। **समाहिताः=नियुक्ताः**। पुराणे कथ्यते यत्र वेदः श्रुतिसमाहितः (हरि० १।४१।२७)। **श्रुतिसमाहितः=प्रत्यक्षेणैव निहितो दृश्यते**। तपसा ब्रह्मचर्येण श्रुतेन च समाहिताः (हरि० १।८।२८)। **समाहिताः=समन्विताः** । मृदुसूर्याः सुनीहाराः पटुशीताः समाहिताः (दिवसाः) (रा० ३।१६।११)। **समाहिताः शान्ताः** । विस्पष्टार्थसमाहितैः । रथैः साङ्ग्रामिकैर्युक्तैरसङ्गगतिभिः क्वचित् (हरि० २।४२।

२) । **विस्पष्टार्थसमाहितैः=अस्त्रशस्त्रविद्भिः सुशिक्षितैरिति नील०** । **असङ्गगतिभिः=अव्याहतगमनैः** । भर्तृवाक्यसमाहिता (रा० ६।६६।२६)। **भर्तृवाक्येऽवहिता** । यत्रामृतं च मृत्युश्च पुरुषेऽधि समाहिते (अथर्व०१०।७।१५) । **समाहिते=निहिते** । संचुकोच (पाण्डवानां महद्बलम्) महाराज चर्मेवाग्नौ समाहितम् (भा० भीष्म० ६५।५७) । **उक्तोऽर्थः** । उपनिषद्भिः समाहितात्मासि (श०ब्रा० १४।६।११।१) । **युक्तमना असीत्याह** । समाधायायुधं शम्यां गच्छामो नगरं प्रति (भा० वि० ५।१६) । **समाधाय=सम्यङ् निधाय** । एवं त्वयि समाधाय धर्मराजं नरोत्तमम् (भा० द्रोण० १११।१५) । **समाधाय =निक्षिप्य,=न्यस्य=परिदाय** । जरां त्वयि समाधाय (हरि० १।३०।२३) । **अर्पयित्वा, सङ्क्रमय्येत्याह** । अभिनन्द्य समापृच्छ्य समाधाय च राघवम् (रा० २।११६।२४) । **स्ववियोगखिन्नं समाश्वास्य** । मूर्तीः सर्वाः समाधाय त्रैलोक्यस्य ततस्ततः (भा० कर्ण० ३४।१६) । **समाधाय=समाहृत्य** । समाधाय मतिं राम निशामय (रा०) । **मन ऐकाग्र्यं सम्पाद्येत्यर्थः** । अभिधायेति वसुधां समाधाय पितामहः (शि० भा० ६।५८) । **समाधाय=सान्त्वयित्वा** । नैव शक्या समाधातुं सन्निपाते महाचमूः (भा० भीष्म० ३।७८) । **समाधातुम्=एकत्र धारयितुम्** । अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् (गीता १२।६) । **समाधातुम्=एकायनीकर्तुम्** । दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः (भा० पु० ११।२३।२) । **समाधातुम्=नियन्तुं व्यवस्थापयितुं क्षोभात्परिहर्तुमित्याह** । यदत्रानन्तरं कार्यं तत् समाधातुमर्हथ (रा० ४।२५।२) । **समाधातुं सम्यक् कर्तुम्** । यथा भानुगतं तेजो मणिः शुद्धः समाधिना । आदत्ते······ (भा० शां० २६८।१२)॥ **समाधिना नियमेनाव्यभिचारेणेति नील०** । **अथै**-काग्नेः समाधानम् (लौ० गृ० ४५।१) । **समाधानमुपशमनम्** । दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत (गो० गृ० १।१।१४) । **अग्न्याधानं समाचरेत्, अग्निमादधीत । अनर्थकः सम्शब्दः सम्यगर्थको वा** । परमेष्ठिमरणे पुत्रस्याग्निसमाधानम् । (लौ० गृ० ४५।२) । **उक्तोऽर्थः** ।

**—धाव् (धावु गतिशुद्धयोः)** । ततो मृगाः समाधावन् यत्र तिष्ठति केशवः (हरि० ३।७८।१६) । **इतः सममधावन्नित्यर्थः** ।

**—धू (धू विधूनने, धूञ् कम्पने)** । (राक्षसान्) मानवास्त्रसमाधूतान् अनिलेन यथा घनान् (रा० १।३२।१५) । **समाधूतान्=परास्तान्, विकीर्णान्** ।

**—ध्मा (ध्मा शब्दाग्निसंयोगयोः)** । (शङ्खाः) समाध्माताः (भा० सभा० ५३।१८) । कम्बूनथ समादध्मुः (भट्टिः १४।२) । **शङ्खान्पूरयामासुरित्यर्थः** । भेर्यश्चापि समाध्माता मृदङ्गा बहवो नृप (हरि० ३।१२०।१४) । **समाध्माताः अभिहताः** ।

**—नी (णीञ् प्रापणे)**। समानिन्ये च तत् सर्वं भाण्ड वैवाहिकं नृपः (भा० वन० २६५।१)। **संजग्राहेत्यर्थः**। धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन् (भा० उ० ५।१५)। **समागमयामासुः, एकी चक्रुः**। बलं चैव समानय (रा० २।८२।२१)। समानयस्व वैदेह्या रामम् (रा० ५।५६।३७)। **मेलय, संयोजयेत्यर्थः**। समानय च वैदेहीं राघवेण महात्मना (रा० ५।१।१६०)। **उक्तोऽर्थः**। समानयस्व सत्कृत्य सर्वदेशेषु मानवान् (रा० १।१३।२१)। **एकी-कुरु, संगृहाणेत्याह**। पुरस्कृत्याद्य भवतः समानेष्यामहे मखम् (भा० आश्व० १४।८)। **संभरिष्यामः, आहरिष्यामहे**। दिवं च भूमिं च समानयन्निव (भा० द्रोण० ५०।४)। **एकतां नयन्निव**। समानयंस्तुल्यगुणं वधूवर चिरस्य वाच्यं न गतः प्रजापतिः (शा० ५।१५)। **समानयन्=संयोजयन्**। विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् (भा० शल्य० ३।२)। **विघटितेषु सैन्येषु भूयो भूयः सङ्घटनमापादितेषु, संनिपातितेष्वित्याह**। हस्तौ समानीय (**बद्ध्वा**)। एवमेव क्रतून् सर्वान्समानीयाप्तदक्षिणान् (पञ्च० १।२६)। **समानीय=आहृत्य=संभृत्य**। शीतोष्णा अपः समानीय (आश्व० गृ० १।१५।८)। **समानीय=संमिश्र्य**। ततस्तु प्रकृतीः समानाय्य। **संनिपात्य, आकार्य, आगमय्य**।

**—पत् (पत्लृ गतौ)**। ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः (भा० आदि० ६४।६)। **समापेतुः समाजग्मुः**। तत्र मल्लाः समापेतुर्दिग्भ्यो राजन् सहस्रशः (भा० वि० १३।१५)। युधिष्ठिरेण चादिष्टाः पार्थिवास्ते सहस्रशः। विनदन्तः समापेतुः पुत्रस्य तव वाहिनीम् (भा० भीष्म० ४४।२७)। **अवचस्कन्दुरित्यर्थः**। ताभिः समापेतुर्ब्राह्मणा ऋतावृतौ (भा० आदि० ६४।६)। **मिथुनी बभूवुरित्यर्थः**। पवनः पवनाभिहतो गगनादवनौ यदा समापतति (वरा० सं० ३८।१)। **समापतति=अधो याति=अवपतति=निपतति**। अथ स राजा समन्ततः समापततो वनीपकजनस्य (अवदा० जा० २)। **सन्निपततः=समागच्छतः**।

**—पद् (पद् गतौ)**। द्वारं तु वितताकारं समापेदे पुनश्च सः (भा० सभा० ४७।१३)। **समापेदे=प्राप**। तत्समापन्नौ पश्चाद्घट्टयामास (अवदा० जा० २२)। **समापन्नौ समीपे स्थितौ**। ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते (यो० सू० १।४१ भाष्ये)। तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थतदञ्जनता तेषु स्थितस्य तदाकारापत्तिः सा समापत्तिरित्युच्यते (यो० सू० १।४१ भाष्ये)। समापत्तिदृष्टेन जनेन संभाषापि यदि (माल० ४)। समापत्तिदृष्टेन केशिना दानवेन (विक्रम० १)। **समापत्तिः=यदृच्छासङ्गतिः**। तयोः समापत्तिषु कातराणि (विलोचनानि) (कु० ७।७५)। क्रियासमापत्तिनिवर्तितानि (रघु०

७।२३) । **उक्तोऽर्थः** । स्वयम्भूत्वसमापत्तौ तथा दृश्यव्यवस्थितौ (यो० वा० ६(२) । ६६।४) । **समापत्तिः=प्राप्तिः** । चित्तात् सर्गसमापत्तिः (यो० वा० ३।११६।३१) । **समापत्तिः=उत्पत्तिः** । आ समापत्तेः (आप० ध० २।१०। २७।१६) । **समापत्तिः समाप्तिः** ।

**—म्ना (म्ना अभ्यासे)** । भूयांसि तु समाम्नानात् । यत्तु···प्राधान्यस्तुति तद् समामने (नि० ७।१२।१०) । **समामने=समामनामि=संगृह्णामि** । समाम्नायः समाम्नातः स व्याख्यातव्यः (नि० १) । **सङ्ग्रहः प्रणीत इत्याह** । सर्गस्थानसमाम्नायैः (भा० पु० ७।७।२४) । **सृष्टिस्थितिसंहारैरित्याह** । **अपूर्वः स्वकपोलकल्पितोऽर्थः । रूढिं प्रत्यनादरोऽस्य कवे रूढः । स्वालक्षण्यं च** प्रथितम् ।

**—यत् (यती प्रयत्ने)** । आसां प्राणाः समायत्ता मम चात्रैकपुत्रके (भा० वन० १२।१५) । कार्यं चास्मिन्समायत्तमित्येवं न ददाह सः (रा० ७।३५।३०) । **समायत्तम्=आधृतम्** ।

**—यम् (यम उपरमे)** । सन्तरां मेखलां समायच्छते (तै० सं० ६।२।२) । **कर्षतीत्याह** ।

**—या (या प्रापणे)** । वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा । महारथेषु च्छन्नेषु मासा दश समाययुः (भा०वि० १४।१) । **समाययुः=व्यतीयुः** । खिन्नः समाययौ द्रष्टुं कदा चिद् विन्ध्यवासिनीम् (कथा० २।२) । **समाययौ=आययौ आजगाम । समा नार्थः** । द्वौ पन्थानौ समायातौ (पञ्चत०) । **समं प्राप्तौ** । मम बलान्निद्रा समायाता (पञ्चत०) ।

**—युज् (युजिर् योगे)** । यथा नायं समायुञ्ज्याद् धार्तराष्ट्रान्कथं चन (भा० वि० ५१।२१) । **धृतराष्ट्रात्मजैः सङ्ग्रामं गच्छेत्** । धूम्राक्षेण समायुक्तः (रा० ६।१८।२०) । **समायुक्तः=सङ्ग्रामयमाणः** । **येऽर्थाः स्त्रीषु समायुक्ताः ( )** । **समायुक्ताः=अर्पिताः न्यस्ताः** । भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः (भा० शल्य० २।४६) । **समायुक्तः=संयुक्तः=युक्तः** । श्रुतिस्मृतिसमायुक्त विनीतं सनिदर्शनम् (भा० शां० ८५।१०) । **उक्तोऽर्थः** । इष्टानिष्टसमायोगे वैरं सौहार्दमेव च (भा० शां० २६४।२७) । दृष्टादृष्टसमायोगात् । देहात्मनोः समायोगात् । प्राणापानसमायोगसमयम् (यो० वा० ५।८।६, ५।६७।१०, ६(१) । २६।११) । क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे । आरोपणे समायोगे वेपने तोलने तथा (रा० १।६७।१०) ॥ **समायोगे=शरेण योजने** । अपास्तसमायोगश्च क्षणमासिष्ट (हर्ष० पृ० ४४६) । न तद् धनुर्मन्दबलेन शक्यं मौर्व्या समायोजयितुं तथा हि (भा० आदि० १६३।२७) ।

आरोपणे समायोगे वेपने तोलने तथा (रा० १।६७।१०)। **समायोगे=शरेण योजने।** अपास्तसमायोगश्च क्षणमासिष्ट (हर्ष० पृ० ४४६)। **न तद् धनुर्मन्दबलेन शक्यं मौर्व्या समायोजयितुम्** (भा० आदि० १६३।२७)।

—**रभ्** (**रभ राभस्ये**)। ते नात्मनः कर्म समारभन्ते (भा० वन० १२०।२)। **उपक्रमन्ते। समा नार्थः।** अहं त्विमं जलनिधिं समारप्स्याम्युपायतः (भा० वन० २८३।३०)। **आराधयिष्यामीति** नील०। **उपैष्यामीति शार्मण्यकोषः।**

—**लक्ष्** (**लक्ष दर्शने**)। नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके (भा० आदि १३२।३६)। **समालक्ष्य=लक्षयित्वा। समाङ्भ्यां नार्थः।**

—**लग्** (**लगे सङ्गे**)। केशाकेशि समालग्ना न शेकुश्चेष्टितुं नराः (भा० शल्य० २३।५२)। **समालग्नाः=समन्तात्सम्यग् लग्नाः सक्ताः।**

—**लभ्** (**डुलभष् प्राप्तौ**)। शीर्षण्यानि ततः खानि मूर्धानं च समालभेत् (वि० पु० ३।११।२१)। **समालभेत्=समालभेत=स्पृशेत्। समालम्भो विलेपनमिति तु कोषकाराः।** गन्धैश्चापि समालभ्य राममायतलोचना (रा० २।२५।३७)। **समालभ्य=विलिप्य।** भर्तुराज्ञां समालभ्य तथा चक्रुश्च सर्वशः (हरि० २।६३।३)। **समालभ्य=प्राप्य, अधिगम्य। समाङौ बुद्धिविपर्यासकृतौ सुपरिहरौ।** प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना (रा० १।२७।२७)। **समालभ्य=स्पृष्ट्वा** (अस्त्राणि)। वधूमुखौषधीपुष्पसमालम्भनभूमयः (यो० वा० ६(२)। ६।२६)। **समालम्भनं मिश्रणम्।** कुङ्कुमेनोत्सवे मृत्योः समालब्धा इव स्रजः (यो० वा० ३।४८।५६)। **समालब्धाः=विलिप्ताः।** चन्दनेन समालब्धाः सहिरण्याः पृथक् पृथक् (भविष्योत्तर० पु० ६५।३४)। **उक्तोऽर्थः।** मनुष्याणां समालम्भो न च दृष्टः कदाचन (भा० सभा० २२।११)। **समालम्भो वधः।** अत ऊर्ध्वमसमालम्भनमादशरात्रात् (गो० गृ० २।७।२३)। **असमालम्भनमस्पर्शः।** उत्तरामुत्तरां शाखां समालम्भं रोहेत् (श० ब्रा० ६।३।३।६)। **समालम्भम्=आलम्ब्य। णमुलन्तमेतत्।**

—**वप्** (**डुवप बीजसन्ताने**)। संभारान् पात्र्यां वा चमसे समावपेयुः (ऐ० ब्रा० ८।१७)। **समं क्षिपेयुः, संयुयुः, आसिञ्चेयुः।** अथैतान्यजमानोऽञ्जलौ समोप्य (श० ब्रा० २।६।२।१६)। **समोप्य=समं न्यस्य।**

—**वह्** (**वह प्रापणे**)। अपदातीनृत्विजः समावहन्ति (तै० ब्रा० ३।८।१।२)। **समावहन्ति=समानयन्ति।** ता वेह संवहावहै (ऐ० ब्रा० ८।२७)। **एकत्रावतिष्ठेवहि, अन्योन्येन सह वर्तेवहि** (शार्मण्यकोषः)। **जीविकोपायं सम्पादयावहै इति तु सायणः।**

**—विज्** (**श्रोविजी भयचलनयोः**) । समाविग्नास्तु ताः सर्वाः पुनरेव नराधिप (हरि० १।२६।३५) । **समाविग्नाः=उद्विग्नाः ।**

**—विश्** (**विश प्रवेशने**) । गत्युपसर्गकर्मप्रवचनीयसंज्ञाभिः सह निपातसंज्ञा समाविशति (पा० १।४।५६ सूत्रे काशिका) । **समावेशः सहावस्थानम् ।** शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् (मनु० २।११६) । **नाक्रामेत्, नाध्यासीतेत्याह ।** ग्लानिश्चैनं समाविशत् (भा० आदि० २२३।६७) । **समाविशत्=अभिव्याप्नोत् ।** प्रमत्तमर्थं हि नरं समन्तात्त्यजन्त्यनर्थाश्च समाविशन्ति । **समागच्छन्तीत्याह ।** लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमाम् (भट्टि० ८।२७) । **समाविशत् =प्राविशत् । नार्थः समाङ्भ्याम् । अस्थाने च तौ ।** तांस्तान् धर्मविधींस्तत्र भ्रातरस्ते समाविशन् (रा० ७।१०।२) । **तत्तदनुष्ठानपरा बभूवुरित्यर्थः ।** यस्मिन्कृत्य समावेश्य निर्विशङ्केन चेतसा (पञ्चत० १।८५) । **समावेश्य=न्यस्य=समर्प्य ।** व्याकरणेपि कर्तव्यं हर्तव्यमित्यत्र प्रत्ययकृत्कृत्यसंज्ञानां समावेशः (**सहावस्थानम्**) । हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः (मुद्रा० १।२१) । **समाविष्टः=स्थितः ।**

**—वृ** (**वृञ् वरणे**) । तान् परिधानेन वाससा समावृणोत् (भा० वन० ६१।१४) । **समावृणोत्=आच्छादयत् संवीतवान् ।** स शब्दः प्रदिशः सर्वा दिशः खं च समावृणोत् (भा० द्रोण० १८।३) । **समावृणोत्=व्याप्नोत्, प्राति स्म ।** ततः शर्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् (भा० वन० १२२।१४) । **समावृणोत्=उपारुणत्=व्यहन् ।** रजसा संवृते लोके शरजालसमावृते (भा० द्रोण० ९८।५६) । **आङोऽधिकस्याधिकोर्थः । समन्तात् सुष्ठु वृते इत्यर्थः ।**

**—वृज** (**वृजि वृजी वर्जने**) । तेजसैव ब्रह्मणो भक्तो राष्ट्रं परिगृह्णात्येकधा समावृङ्क्ते (तै० सं० २।१।२।६) । **समावृङ्क्ते=आत्मानं प्रत्याकर्षति, स्ववशे कुरुते ।**

**—वृत्** (**वृतु वर्तने**) । समाववर्ति विष्ठितो जिगीषुः (ऋ० २।३८।६) । **प्रत्यावर्तते, पुनः समवैतीति वा ।** अथ समाववृते कुसुमैर्नवैः⋯मधुः (रघु० ६।२४) । **समाववृते=प्रत्याववृते ।** गुरुणा **च समनुज्ञातः** समावर्तेत वै द्विजः (भा० अनु० १४१।३७)। **समावर्तेत वेदव्रतसमाप्तिलक्षणं स्नानमाचर्य गृहं प्रति निवर्तेतेत्याह । चाभ्यनुज्ञात इति पाठान्तरम् ।** तथापि लोके कर्माणि समावर्तन्ति भारत (भा० शां० ३२।२१) । **समृध्यन्तीत्याह ।** एति समावर्तन्ते (पशवः) (श० ब्रा० १।४।१।६) । **समावर्तन्ते=प्रत्यावर्तन्ते ।** स एव हि महतीं सेनां समावर्तयदाहवे (भा० द्रोण० २४।४) । **समावर्तयत्=समानयत्, समगमयत् ।**

स ते गावस्तम आवर्तयन्ति (ऋ० ७।७६।२)। नानादेशसमावृत्ताः क्षत्रिया यत्र संजय (भा० शल्य० २।४४)। **समावृत्ताः=संगताः=समेताः।** उदीचि प्रथमसमावृत्त आदित्ये (नि० ७।२३।१०)। **उत्तरायणं गते सूर्य इत्यर्थः।** गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि (मनु० ३।४)। **समावृत्तः=गृहं प्रतिनिवृत्तो ब्रह्मचारी।** सर्वलोक समावृत्त पिप्रीषुः फलमुत्तमम् (भा० सभा० ३५।१०)। **सर्वैरुपायनप्रदैर्लोकैः समावृत्तो वेष्टितः।** कस्मात्त्वं कृतसमावर्तो वटुरिव त्वरसे (अवि० ४)। सोऽयं लोकसमावर्तो मर्त्यानां भरतर्षभ (भा० स्त्री० ७।६)। **समावर्तः=आवर्तः। अनर्थकः सम्शब्दः।**

**—वे (वेञ् तन्तुसन्ताने)।** आदित्य इमाँल्लोकान्त्सूत्रे समावयते (श० ब्रा० ८।७।३।१०)। **समावयते=बध्नाति।**

**—व्यध् (व्यध ताडने)।** महावातसमाविद्धा महानौरिव सागरे (भा० कर्ण० ८०।१७)। **समाविद्धा=प्रक्षिप्ता।**

**—श्रु (श्रु श्रवणे)।** मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् (रा० २।१०७।३)। **समाश्रौषीत्=प्रतिज्ञातवान्।**

**—श्लिष् (श्लिष आलिङ्गने)।** समाश्लिष्यदसम्भ्रान्तः सूतपुत्रं वृकोदरः (भा० द्रोण० १३१।३८)। **आलिङ्गत्, पर्यष्वजत, उपागूहत् इत्यर्थः।** समाश्लिषद् ब्राह्मणकुलम् (पा० ३।१।४६ सूत्रभाष्ये)। **समाश्लेषः प्रत्यासत्तिः। समवैदित्यर्थः।**

**—श्वस् (श्वस प्राणने)।** समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया (रा० ३।४७।२२)। **समाश्वस विश्रान्तिं कुरु।**

**—सञ्ज् (षञ्ज सङ्गे)।** ततः स भगवांस्तस्य स्कन्धे बाहुं समासजत् (भा० उ० १०५।२२)। **समासञ्जयत्। सजतिरिह सकर्मकः प्रयुक्तः। अनुपसर्गस्तु प्रायेणाकर्मकः।**

**—सद् (षद्लृ विशरणगत्यवसादनेषु)।** समासीदाम कालिन्दीं तरज्जननिरन्तराम् (बृ० श्लो० सं० ८।२१)। **प्राप्नुमेत्यर्थः।** क्षत्रियान्तकरं राममेकमेकः समासदम् (भा० उ० १७६।११)। **संमुखः सम्प्रापम्।** रथेन रामं महता खरस्ततः समाससादेन्द्र इवोद्यताशनिः (रा० ३।२६।३८)। **युयुत्सया समाजगामेत्याह।** परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान् (भा० मौ० १।६)। **समासाद्य=सङ्घर्षं प्राप्य।** पाण्डवाः कौरवाः सर्वे समासाद्य परस्परं (भा० स्त्री० ८।३८)। **प्रातिभटयेन सङ्गत्येत्यर्थः।**

**—स्था (ष्ठा गतिनिवृत्तौ)।** इन्द्रियाणां जये योगं समातिष्ठेद् दिवानिशम् (मनु० ७।४४)। **समातिष्ठेत्=आतिष्ठेत्=कुर्यात्।** व्रात्यस्तोमैरिष्ट्वा

त्रैविद्यवृत्तिं समातिष्ठेयुः (लाट्या० श्रौ० ८।६।२९)। **उक्तोऽर्थः**। स एव कुन्ददन्ताख्यो द्विज पार्श्वे समास्थितः (यो० वा० ६ (२)। १८५।१७)। **समास्थितः=स्थितः**।

—हन् (हन हिंसागत्योः)। एको दृषदुपले समाहन्ति (श० ब्रा० १।१।४। १३)। **इतरेतरं ताडयति, सञ्श्लिष्यति**। शेषेणापि समाहताः (भा०सभा०)। **समाहताः संहतिं प्राप्ताः**। सा भूमिर्बहुभर्यानै रथनेमि समाहता (रा० २। १०३।४०)। **समाहता=अभिहता**। **समाघातः=सङ्ग्रामः**। **अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवा इत्यमरः**।

—हृ (हृञ् हरणे)। तृष्णासन्त्यागं च समाहरेत् (यो० वा० ५।२४।५२)। **कुर्यादित्यर्थः**। नासाद्यते ह्यनभ्यस्ता...तस्मादेनां समाहरेत् (यो० वा० ५।२४। २१)। **अभ्यासेन स्थिरी कुर्यादित्यर्थः**। नानावाक्यसमाहारसमवायविशारदैः (भा० आदि० ७०।४३)। **नानावाक्यानामेकशाखागतानां समिधो यजतीत्यादिप्रयाजाद्यङ्गविधिपराणां प्रयोगविधिना दर्शपौर्णमासाभ्यां यजेतेत्यादिना एकवाक्यत्वं समाहारः** (नील०)। **समाहारः समुच्चयः** (अमरः)। **अनेकस्यैकत्राध्यावापः समाहारः** (स्वामी)। यच्च पूर्वं समाहारे यच्च पूर्वं परे परे (भा० शां० १०४।१५)। **समाहारे=(राज्ञां) समुदाये**। तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं चन (रा० १।५८।४)। **समाहर्तुमाहर्तुम्** अनुष्ठातुम्। समाहरणं हि यज्ञानुष्ठानार्थं संभारसमाचयनं भवति मुख्यया वृत्त्या, गौण्या तु यज्ञानुष्ठानमाह। **तादर्थ्यात्ताच्छब्द्यम्**। इह हि शास्त्रे दृष्टान्यष्टादश तीर्थानि राज्ञाम्। तद्यथा—मन्त्रिपुरोहित...समाहर्तृ...(तन्त्रा० ३।उपक्रमे)। प्रशास्ता समाहर्ता संविधाता लेखकः साक्षी च (कौ० अ० ) **। समाहर्ता प्रजाभ्यो द्रव्यमुद्गृह्यैकीकृत्य राज्ञेऽर्पयिता**।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। तस्मात्ते वर्तयिष्यामि तयोरेव (वाङ्मनसयोः) समाह्वयम् (भा० आश्व० २१।१३)। **सम्यक् सुखमाह्वयन्ते विजिगीषवोऽस्मिन्निति समाह्वयः संवादः** (नील०)। अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते। प्राणिभिः क्रियमाणस्तु स विज्ञेयः **समाह्वयः** (मनु० ९। २२३)॥ **प्राणिद्यूतं समाह्वयः** (अमरः)।

## समाव (सम्+आङ्+अव)

—इ (इण् गतौ)। तस्मिन्देवसमावाये (भा० अनु० ८३।११)। **समावाये=समवाये**। नानाशास्त्रसमावाये व्यतिषक्तरथद्विपे (भा० शल्य० ११।३)। **समावाये=सघट्टे**।

## समुद् (सम्+उद्)

—अञ्च् (अञ्चु गतिपूजनयोः)। समुदक्तोद्धृते समे (अमरः)। समुदक्तमुदकं कूपात्। **समुदक्तमुदक्तमुद्धृतम्।**

—इ (इण् गतौ)। राजर्षयश्च बहवः सर्वैः समुदिता गुणैः (भा० आदि० १।३६)। **समुदिताः=संहिताः, सहिताः।** मतङ्गो नाम नाम्ना वै सर्वैः समुदितो गुणैः (भा० अनु० २७।८)। **समुदितः समेतः।** लक्ष्म्या समुदितो ब्राह्म्या (रा० १।३४।४३)। साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः (रा० १।१८।१३)। रूपश्रिया समुदितां गुणतश्च युक्ताम् (स्वप्न० ५।२)। **उक्तोऽर्थः।** समुदितबलवीर्यं रावणं नाशयित्वा (प्रतिमा० ७।२)। **समुदितं प्रचितं प्रवृद्धम्।** आदित्यः समुद्यन् (भा० वन० २०७।५७)। **समुद्यन्=उद्यन्।** एककार्यसमुद्यन्तौ कृष्णौ (भा० सभा० २०।२४)। **एककार्य उत्तिष्ठमानावित्यर्थः।** महासमुदयं चक्रे शरैः सन्नतपर्वभिः (भा० भीष्म० ११६।४५)। **समुदयो युद्धम्। भवेत्समुदयः सङ्घे संयुगे च समुद्गमे** (मेदिनी)। **अमरस्तु युद्धपर्यायेषु समुदायं पठति**—समुदायः स्त्रियः सयत्समित्याजिसमिद्युध इति। स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च (मनु० ७।५६)। **समुदेत्यस्मादुत्पद्यतेऽतः, धान्यहिरण्याद्युत्पत्तिस्थानं समुदयः** (कुल्लूकः)।

—ईक्ष् (ईक्ष दर्शने)। मन्दप्राणो ह्ययं पक्षी कथं चिद्यदि जीवति। स्वरहीनश्च दीनश्च विस्फुरः समुदीक्षते (रा० ३।७३।३)॥ **समुदीक्षते=चक्षुरुन्मीलयति।** विचित्रवीर्यो धर्मात्मा मामेव समुदैक्षत (भा० उ० १७३।७)। **मां सहायमपैक्षत, मयि व्यस्रम्भत, मत्कृतां मार्गदेशनां प्रत्यैक्षतेत्याह।** तदल्पशेषं समुदीक्ष्य कार्यम्। (रा० ५।३७।२७)। **समुदीक्ष्य=आलोच्य।**

—ईर् (ईर गतौ कम्पने च, ईर क्षेपे)। ततस्तस्मिन्द्विजश्रेष्ठ समुदीर्णे तथाविधे। (भा० आदि० ३२।१)। **समुदीर्णे देवानीके सङ्ग्रामायोद्गते।** सर्वतः समुदीर्णस्य तव (रा० ६।६५।८)। **समुदीर्णस्य क्षुभितस्य।** समुदीर्णदोषाः (सुश्रुत० २।१६०।२१)। **प्रकुपिताः प्रवृद्धा दोषा इत्यर्थः।** पांसवोपि कुरुक्षेत्रे वायुना समुदीरिताः (भा०)। **समुदीरिताः=उद्धताः।**

—ईष् (ईष गतिहिंसादर्शनेषु)। दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति (छा० उ० ६।६।१)। **समुदीषति=उद्गच्छति।** ऊर्ध्वाधोगतिसभेदं समुदीष प्रचक्षते (भा० कर्ण० ४१।२६)। **निगदव्याख्यातम्।**

—कृष् (कृष विलेखने)। समुत्कृष्टे दुन्दुभिशङ्खशब्दे (भा० उ० २३।५)।

समुत्कृष्टे समुत्थिते (३६।१३)।

—कॄ (कॄ विक्षेपे) मणौ वज्रसमुत्कीर्णे (रघु०१।४)। **समुत्कीर्णमाविद्धम्।**
**—क्रम्** (**क्रमु पादविक्षेपे**)। समुत्क्रान्तस्ततो मुक्तस्तावुभौ राक्षसौ हतौ (रा० ३।३६।१३)। **समुत्क्रान्तः=पलायितः।**

**—क्रुश्** (**क्रुश आह्वाने रोदने च**)। ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष (भा० द्रोण० ८८।१)। **उच्चैराक्रोशत्सु, उच्चैर्नदत्सु।**

**—क्षिप्** (**क्षिप प्रेरणे**)। ततः केशान् समुत्क्षिप्य वेल्लिताग्राननिन्दितान् (भा० वि० ६।१)। **ऊर्ध्वं समीर्य। वेल्लिताग्रान्=कुञ्चिताग्रान्।** आविद्धं कुटिल भुग्नं वेल्लितं वक्रमित्यपि इत्यमरः। बन्धान्सर्वान्समुत्क्षिप्य (रा० ५।५६।१४०)। बन्धनात् समुत्क्षिप्य (पञ्चत० ३८।२१)। **विमुच्येत्यर्थः।** लङ्कामपि समुत्क्षिप्य सीता तामहमानये (रा० ५।३।६६)। **उत्क्षिप्य=उन्मूल्य=उद्वर्त्य=उद्वृह्य।**

**—खन्** (**खनु अवदारणे**)। समुत्खाय कुलं नृपाणाम् (प्रबोध० ५।१२)। **सुतरां समुत्साद्येत्यर्थः।**

**—ग्रन्थ्** (**ग्रन्थ सन्दर्भे**)। समुद्ग्रथ्य सितेन वाससा स्वमूर्धजान् (भा० कर्ण० ९०।४१)। **समुद्ग्रथ्य=बद्ध्वा।**

**—ग्रह्** (**ग्रह उपादाने**)। अथ कृष्णाजिनं च पुष्करपर्णं च समुद्गृह्णाति (श० ब्रा० ६।४।३।६)। **समुद्गृह्णाति=समुन्नयति=उच्चिनोति।** समुद्गृह्य (हविर्धाने) प्रवर्तयेयुर्यथा नोत्सर्जेताम् (श० ब्रा० ३।५।३।१७)। **उक्तोऽर्थः।**

**—चर्** (**चर गतिभक्षणयोः**)। समुच्चरच्चारुपतत्त्रिशिञ्जम् (भट्टि०)। **समुच्चरन्ती समुद्गच्छन्ती शिञ्जा यत्र तद्।**

**—जृम्भ्** (**जृभि गात्रविनामे**)। व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते (भर्तृ० नी० ५)। **समुज्जृम्भते=उद्युङ्क्ते=उत्सहते।**

**—त्रस्** (**त्रसी उद्वेगे**)। एतद्ध वै गृहपतेः प्रोषुष आगताद् गृहाः समुत्त्रस्ता इव भवन्ति (श० ब्रा० २।४।१।१४)। **समुत्त्रस्ताः=उद्विग्नाः, साशङ्काः। गृहाः=गृहस्थाः।**

**—दिश्** (**दिश अतिसर्जने**)। प्राय एव समुद्दिष्टा लक्षणानि तु मे शृणु (भा० शां० १०१।६)। **समुद्दिष्टाः प्रख्याताः।** एष सर्वः समुद्दिष्टः कर्मणां वः फलोदयः (व० बृ० सं० १२।८२।५१)। **समुद्दिष्टः=कथितः।** आज्यं तेजः समुद्दिष्टम् (व० बृ० स० ४७।५२)। **समुद्दिष्टम्=व्यपदिष्टम्=संज्ञितम्।** न रिपून्वै समुद्दिश्य विमुञ्चन्ति नराः शरान् (भा० आदि० ११८।१६)। **समुद्दिश्य=**

लक्ष्यं कृत्वा । धृतराष्ट्रं समुद्दिश्य ददौ सः...सुवर्णं रजतम् (भा० ३६।१७) । **समुद्दिश्य स्मृतिं निमित्तीकृत्य अर्हां वा प्रयोजनीकृत्य ।**

—**द्रु (द्रु गतौ)** । समुद्रात्सर्वे देवाः समुद्द्रवन्ति (श० ब्रा० १४।२।२।२) । **वेगेन समं निष्क्रामन्ति, सम्भूय पलायन्त इत्याह** । समुद्रः कस्मात् । समुद्द्रवन्त्यस्मादापः (नि० २।१०) । **वाष्परूपेणोद्गच्छन्तीत्याह ।**

—**धू (धूञ् कम्पने)** । समुद्धूतो यथा भूमिचलोऽचलः (रा० ६।३६।३८)। **उत्कम्पित इत्यर्थः ।**

—**नद् (णद अव्यक्ते शब्दे)** ययौ सुराणां पृतनोग्रतेजाः समुन्नदन्ती युधि सिंहनादान् (हरि० ३।५३।६२) । **उच्चैः समं नदन्तीत्याह ।**

—**नम् (णम प्रह्वत्वे शब्दे च)** । समुन्नेमुः पयोधराः (भट्टि० ७।१) । **उत्तस्थुरित्यर्थः** । श्रवणौ ते विराजेते प्रमाणेन समुन्नतौ (रा० ३।५२।३०) । त्वचः समुन्नम्य शनैः समन्ताद् विवर्धमानो जठरं करोति (सुश्रुत० १।२७५) ।

—**नह् (णह बन्धने)** । अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा । विचरत्यसमुन्नद्धो यः स पण्डित उच्यते (भा० उ० ३३।४०) ॥ **समुन्नद्धो गर्वितः ।** समुन्नद्धौ पण्डितम्मन्यगर्वितौ (अमर) । समुन्नद्धैः सुसन्नद्धैः सैनिकैः स्वैः समीयुषाम् (शि० भा० १६।१६) । **उक्तोऽर्थः** । वल्मीकवत् समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् (सुश्रुत० २।६।१३) । **समुन्नद्धम्=सर्वत उन्नतम्** । इति सर्वं समुन्नद्ध न निर्वाति कथंचन (भा० शल्य० ५।२१) ।

—**नी (णीञ् प्रापणे)** । परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् । कथमेनां समुन्नेष्ये इति दध्यौ धिया चिरम् (भा० पु० ३।१३।१६) ॥ **उत्थापयिष्य इत्यर्थः** । तस्य संशमनायाशु तत्कुलीन समुन्नयेत् (का० नी० सा० ८। ६६) । **समुन्नयेत्=उत्कर्षं गमयेत्** । ऋणमस्मिन्समुन्नयत्यमृतत्वं च गच्छति (मनु० ६।१०७ इत्यत्र कुल्लूकोद्धृता श्रुतिः) । **समुन्नयति=शोधयति ।** व्यसनेभ्यः समुन्नेता राजा यः स त्रिवर्गभाक् (का० नी० सा० १५।३) । **समुन्नेता=समुद्धर्ता** । इत्याद्यन्यत्समुन्नेयं स्वयं भावितबुद्धिभिः (सा० द० ३।१७३) । **समुन्नेयम्=उन्नेयम्=ऊहनीयम् ।**

—**पत् (पत्लृ गतौ)** । अन्यस्मिन्प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत् । अहं किं करवाणीति स राजवसतिं वसेत् (भा० वि० ४।४५) । **समुत्पतेत्=समुत्थितः स्यात्** । समुत्पतन्ति वल्मीकाद्यथा क्रुद्धा महोरगाः (भा० द्रोण० ११७।६) । **समुत्पतन्ति=निष्क्रामन्ति** । यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा । स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते (भा० आदि० ७६।२) । **समुत्पतितं समुत्पन्नम् । रश्मिषु लम्बते=प्रग्रहान् धारयति ।**

**—भू (भू सत्तायाम्)।** आपत्सु वैराणि समुद्भवन्ति । (पञ्चत० २।१७५) **स्पष्टोऽर्थः।** सन्नस्य कार्यस्य समुद्भवार्थम् (तन्त्रा० १।३।५६)। **नष्टस्यार्थस्य प्रतिसमाधानायेत्यर्थः।**

**—यम् (यम उपरमे)।** अष्टौ वै वीरा राष्ट्रं समुद्यच्छन्ति (तां० ब्रा० १९।१।४)। **उत्थापयन्ति, उन्नमयन्ति।** विराटद्रुपदौ वीरौ भीष्मं प्रति समुद्यतौ (भा० भीष्म० १११।२६)। **आस्कन्तुमुद्यतौ।**

**—या (या प्रापणे)।** न हि समरे शक्ताः समुद्यातुं सुरासुराः (भा० कर्ण० ३१।६६)। **समागन्तुम्, प्रतिमुखमागन्तुम् इत्यर्थः।** यच्च नः सहितान् सर्वान् विराटनगरे तदा । एक एव समुद्यातः (भा० भीष्म० ९८।६)। **समुद्यातः= आयोद्धुमुदस्थात्।**

**—लुप् (लुप्लृ छेदने)।** ते देवा असुरान् प्रतिदृश्य समुल्लुप्य (श० ब्रा० ६।५।१।२१)। **समुल्लुप्य=अन्तर्धाय।** समुल्लुप्य यज्ञमन्यत् कर्तुं दध्रिरे (श० ब्रा० ६।५।१।१६)।

**—वृत् (वृतु वर्तने)।** समुद्वर्तमानस्येव सलिलनिधेः...ध्वनिमश्रौषुः (अवदा० सुपरा० जा०)। **समुद्वर्तमानस्य उद्गच्छतः। उत्क्रामत्तरङ्गस्येत्यर्थः।**

**—वृह् (वृहू उद्यमने)।** (खड्ग) कोशात्समुद्ववर्हाशु बिलाद् दीप्तमिवोरगम् (भा० सौ० ६।१५)। **समुद्ववर्ह=आचकर्ष।**

**—श्रि (श्रिञ् सेवायाम्)।** महान्त्यनीकानि महासमुच्छ्रये (भा० )। **समुच्छ्रये=युद्धे। युद्धे समुच्छ्रयः पुमानिति मेदिनी।** एष भूतसमुच्छ्रयः (भा० आश्व० ५१।१०)।

**—सृ (सृ गतौ)।** प्रायश्चाद्यतने काले भृत्यास्तितउवृत्तयः। दर्शयन्ति समुत्सार्य सारं दोषतुषग्रहम् (राज० ८।११४२)॥ **समुत्सार्य=समुत्क्षिप्य।**

**—स्था (ष्ठा गतिनिवृत्तौ)।** दृश्यन्ते ह्यातुरा. केचिद् उपकरणवन्तश्च परिचारकसम्पन्नाश्चात्मवन्तश्च कुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः (चरक० सू० १०।४)। **समुत्तिष्ठमानाश्चेष्टमानाः, उल्लाघमानाः। अनुष्ठिताः =चिकित्सिताः।** दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययं दाप्यः...(याज्ञ० २।२२२)। **समुत्थानं व्रणनिरोपणम्।** देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान्। **समुत्थाप्य=सुप्तोत्थितवज्जीवयित्वा।** लघुसमुत्थानं सैन्यचक्रम् (दशकु०)। **क्षिप्रगामीत्यर्थः।**

**—हृ (हृञ् हरणे)।** वान्तान्ने **समुद्धरणम् (अमरः)।**

## समुदा (सम्+उद्+आङ्)

—इ (इण् गतौ)। तस्मिन्नभिजनविद्यासमुदेत समाहितं संस्कर्तारमीप्सेत् (आप० ध० १।१।१२)। **समुदेतम्=सम्पन्नम्।** अन्यं वाऽसमुदेतम् (आप० ध० २।२।५।७)। **असमुदेतो विद्यादिभी रहितः।**

—चर् (चर गतिभक्षणयोः)। न हि रागकाले क्रोधः समुदाचरति (यो० सू० भाष्ये २।४)। **समुदाचरति=आविर्भवति।** ते यद् ब्रूयुर्महाप्राज्ञास्तच्चैव समुदाचर (भा० अनु० ८४।३८)। **समुदाचर=समाचर=आचर।** अन्यथा खलु काकुत्स्थ तपस्वी समुदाचरन् (रा० ३।१२।२६)। **समुदाचरन्=आचरन्।** बालानपि च गर्भस्थान् सान्त्वेन समुदाचरन् (भा० शा० ३३।४४)। **उक्तोऽर्थः।** समुदाचारहीनाया न ते साधु भविष्यति (भा० आदि० ७८।८)। **समुदाचारः शोभन आचारः।** आर्ये सखीजनसमुदाचारेणातिक्रान्तः समुदाचारः। (स्वप्न० ६)। **सम्यगुदित आचारः समुदाचारः।** आश्रमपदविभवेनानुष्ठितो देवसमुदाचारः (प्रतिमा० ५)। **देवसमुदाचारः=देवपूजा।** तस्मै...चक्रिरे समुदाचारं पद्मकोषनिभैः करैः (बुद्ध० ४।२)। **समुदाचार आदरः।** समुदाचारलक्षणं सर्वमनुव्याख्यास्यामः (भा० शां० १६१।१०)। **समुदाचाराः सामयिका धर्माः।** प्रजानां समुदाचार बहुकर्मकृत वदन् (भा० वि० २।३०)। **समीचीनमुत्कृष्टतरमाचारम् इत्यर्थः।**

—नी (णीञ् प्रापणे)। महानयं कृष्णकृतः क्षत्रस्य समुदानयः (भा० उ० १४१।२८)। **समुदानयः=समुदायीकरणम्।** दुष्करशतसमुदानीतोऽयमस्मदर्थं तेन भगवता सद्धर्मः (अवदा० जा० २)। **समुदानीतः=उन्नीयोपस्थापितः।**

—हृ (हृञ् हरणे)। सिद्धैर्वा वसिष्ठाख्यैस्तैरहं समुदाहृतः (यो० वा० ६ (२)। ६५।६)। दीक्षां च समुदाहर (रा० १।६२।२२)। **कुर्वित्यर्थः।**

## समुप (सम्+उप)

—अर्ज् (अर्ज अर्जने प्रतियत्ने च)। तं तु वैवाहिकं दृष्ट्वा कन्येयं समुपार्जितम् (भा० उ० १७६।५०)। **समुपार्जितम्—संस्कृतम्। तम् (विचित्रवीर्यम्)।**

—आस् (आस उपवेशने)। यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते (का० प्र० २।१४)। **समुपास्यते=आश्रीयते।**

—ईक्ष् (ईक्ष दर्शने)। शत्रुपक्षं समृध्यन्तं यो मोहात्समुपेक्षते (भा० सभा० ५५।१६)। **अनर्थकः सम्शब्दः। उपेक्षत इत्येतावतैवोक्तो विवक्षितोऽर्थः।**

—उष् (उष दाहे)। तमग्निभिः समुपोषेत् (श० ब्रा० १२।५।१।१३)। समुपोषेत्=दहेत्। नार्थः समुपाभ्याम्। ओषेदित्यनेनैव विवक्षितार्थगतेः।

—ऊह् (ऊह वितर्के)। ध्वनयः समुपोहन्ते वृत्तिभेदे तु वैकृताः (वा० प० १।७७)। समुपोहन्ते कारणानि भवन्तीति (प० ल० म० स्फोट० नागेशः)।

—क्रम् (क्रमु पादविक्षेपे)। यथाय समुपक्रान्तः (रा० २।७८।१४)। समुपक्रान्तः=प्रारब्धः।

—जन् (जनी प्रादुर्भावे)। मम दुःखमिदं पुत्र भूयः समुपजायते (रा० २।७५।६१)। समुपजायते=उपजायते=जायते।

—ज्ञा (ज्ञा अवबोधने)। संवासात्परुषं किंचिदज्ञानादपि यत् कृतम्। तन्मे समुपजानीत (रा० २।३९।३८)। क्षान्तमित्यनुजानीतेत्याह।

—दिश् (दिश अतिसर्जने)। तत् किमर्थं विदर्भाणां पन्थाः समुपदिश्यते (भा० वन० ६१।३२)। उपदिश्यत इत्येवार्थः। नार्थः समा। अनेन कृतकृत्योस्मि यन्मां स पुरुषेश्वरः। मृत्युं समुपदेक्ष्यति (रा० ३।४५।१८)। मृत्यवे परादास्यतीत्यर्थः। समुपयोः सतोरपि शुद्धे धात्वर्थेऽतिसर्जने प्रयोगः।

—नी (णीञ् प्रापणे)। ऋषींश्च समुपानयत् (भा० आदि० १०७।१५)। इत आनयदित्यर्थः। अन्ये प्रधानवाससी समुपनीयेताम् (मृच्छ० )। सहानीयेतामित्यर्थः। (अश्वान्)। जवनानाशुगांश्चैव करार्थं समुपानयत् (भा० सभा० २७।२८)।

—रुध् (रुधिर् आवरणे)। रौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते (भा० अनु० ३५।७)। समुपरुध्यते=विघ्नितो भवति।

—वह् (वह प्रापणे)। सङ्ग्रामे समुपोढे च शत्रुपक्षभयङ्करे (रा० २।७५।३९)। समुपोढे=उपस्थिते, सन्निहिते सति। संग्रामे समुपोढे राजानं संनाहयेत् (आश्व० गृ० ३।१२।१)। यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी (उत्तर० ५।२६)। समुपोढे=उदिते।

—विश् (विश प्रवेशने)। तथेति ह समुपविविशुः (छां० उ० १।८।२)। आसाञ्चक्रिरे, आसेदुः।

—वृत् (वृतु वर्तने)। कामवृत्तोन्वयं लोकः कृत्स्नः समुपवर्तते (रा० २।१०९।९)। समुपवर्तते=संजायते, उपजायते।

—वृह् (वृह वृहि वृद्धौ)। इतिहासपुराणाभ्यां वेदं समुपवृंहयेत् (भा० आदि० १।२६७)।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। जुगुप्समानो धावन्स तं यज्ञं समुपासदत् (भा० आश्व ९२।५१)। प्राप्तवानित्यर्थः।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च) भक्षयित्वा समुपहूताः स्मः (श० ब्रा० ४।३।१।१)। समं निमन्त्रिताः स्म इत्यर्थः।

—क्रम् (क्रमु पादविक्षेपे)। खनन्तः समुपक्रान्ता दिश सोमवती तदा (रा० १।४१।२१)। समुपक्रान्ताः=उपेताः=प्राप्ताः।

## समुपाङ् (सम्+उप+आङ्)

—गम् (गम्लृ गतौ)। निदाघकालः समुपागतः प्रिये (ऋतु० १।१)। स ब्रह्मशापो नियतमद्य मां समुपागतः (रा० २।५३)। समुपागतः=आगतः प्राप्तः।

—घ्रा (घ्रा गन्धोपादाने)। त मूर्ध्नि समुपाघ्राय (रा० २।७२।४)। समुपाघ्राय=कुसित्वा (कोसित्वा)=चुम्बित्वा। समुपाघ्राय मूर्धानम् (भा० वि० ७१।३०)। उक्तोऽर्थः।

—चर् (चर गतिभक्षणयोः)। तथाप्यप्रियमस्माकं पुत्रस्ते समुपाचरत् (भा० स्त्री० १५।८)। समुपाचरत्=आचरत्=अकरोत्।

—दा (डुदाञ् दाने)। ज्वलनं समुपादाय ब्राह्मणेन महात्मना। हावयामास (कौसल्या) (रा० २।२५।२५)। समुपादाय=समर्प्य। यः पित्रा समुपात्तानि धनवीर्ययशांसि वै। न्यूनतां नयति (मार्क० पु० २१।६५)। तेजांसि समुपादत्ते (भा० वन० १६३।३६)। समुपादत्ते=हरति=आच्छिनत्ति। इत्युक्ताः समुपाजह्रुर्धनशेषमशेषतः। रामाज्ञया धनाध्यक्षाः समुपादाय सर्वशः (रा० गोरेसिओ० सं० २।३२।३५)। समुपादाय=समाहृत्य। मालां च समुपादाय (भा० आदि० १८५ आदि० ३०)। समुपादाय=भृत्वा, धृत्वा।

—दिश् (दिश अतिसर्जने)। अन्तः कोपं समुपादिशन्ति (का० नी० सा० १६।२०)। समुपादिशन्ति=उपदिशन्ति।

—धा (डुधाञ् धारणपोषणयोः)। एतानि काले समुपाहितानि कुर्वन्त्यवश्यं खलु सिद्धिविघ्नम् (का० नी० सा० १६।२७)। समुपाहितानि=विहितानि।

—नी (णीञ् प्रापणे)। सप्त विप्रांस्ततो भोज्ये युगपत् समुपानयत् (भा० अनु० ६१।१३)। समानयदित्यर्थः। श्रोत्रियांश्च विदेशस्थान्सत्कृत्य समुपानय (रा० गोरेसिओ सं० १।११।७)। उक्तोऽर्थः। धारयामास च प्राणानृषींश्च समुपानयत् (भा० आदि० १०७।१५)। ऋषीन् वेद सान्त्राधीनांश्चकार, न विस्मृतवानित्यर्थः।

—युज् (युजिर् योगे)। ऋषिभिः समुपायुक्तं तीरम् (भा० ३।१००९६)। आकीर्णमित्यर्थः।

**—रभ् (रभ राभस्ये)**। विग्रहः समुपारब्धो नहि शाम्यत्यविग्रहात् (भा० उ० ८८।६)।

**—विश् (विश प्रवेशने)**। स भुक्तवान्...तदन्नममृतोपमम्। प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत्। **तां रात्रिं सुष्वाप, स्वपन्नगमयदित्यर्थः।**

**—वृत् (वृतु वर्तने)**। समुपावर्त्यमानेषु...विचित्रेषु यानविशेषेषु (अवदा० जा० २)। **समुपावर्त्यमानेषु=उपनीयमानेषु।**

**—हृ (हृञ् हरणे)। पूर्वजो मे कथं ब्रह्मन्यज्ञं वै समुपाहरत्** (रा० १।३९।२)। **आहरत्, अनुष्ठितवानित्यर्थः।** शून्ये न खलु सुश्रोणि मयेदं समुपाहृतम् (रा० २।१३।२१)। **समुपाहृतम्=व्याहृतम्। अत्रार्थे समुपाङः प्रयोगोऽन्यत्र दुर्लभः।**

## संनि=सन्नि (सम्+नि)

**—अस् (असु क्षेपे)**। संन्यस्य सर्वकर्माणि सन्यसेदनृणो द्विजः (मनु० ६।९५-९६)। **प्रव्रजेदित्याह**। भरतः शिरसा कृत्वा संन्यासं पादुके ततः (रा० २।११५।१५)। **संन्यासम्=सद्वस्तुन्यासम्**। (तिलकः)। **ऋचीके** भार्गवे प्रादाद् विष्णुः संन्यासमुत्तमम् (रा० १।७५।२२)। **सन्न्यासशब्देन न्यास उच्यते। सम्शब्दोऽनर्थकः। संन्यस्य** सागरानूपे चचार विपुलं तपः (हरि० १।१२।२०)। **न्यासरूपेण स्थापयित्वेत्यर्थः**। बृस्यस्तेषां तु संन्यस्ताः (भा० शां० १७१।१३)। **संन्यस्ताः संनिवेशिताः स्थापिताः। व्रीडादनु देवीमुदीक्ष्य** मन्ये संन्यस्तदेहः स्वयमेव कामः (कु० ७।६७)। **संन्यस्तः=त्यक्तः।**

**—काश् (काशृ दीप्तौ)**। न सन्निकाशयेद् धर्मं विविक्ते चारजाश्चरेत् (भा० आश्व० ४६।२५)। **प्रकाशयेदित्यर्थः।**

**—कृष् (कृष विलेखने)**। सन्निकृष्टे च निकृष्टे कष्टं रज्यन्ति कुस्त्रियः (कथा० ६४।१२४)। **सन्निकृष्टः=समवस्थः=समानास्पदः।** सन्निकृष्टानिमान् सर्वान् अनुमन्त्य द्विजर्षभान् (रा० २।२।१०)। **सन्निकृष्टान् समीपवर्तिनः।** सन्निकृष्टश्च नो वीर जयः शत्रोः पराजयः (रा० ३।३०।८)। **सन्निहित इत्यर्थः।** यस्य नार्तो जनपदः सन्निकर्षगतः सदा (भा० शां० ११५।१९)। श्वसतां च शृणोम्येवं गोपुत्राणां प्रतोद्यताम्। वहतां सुमहाभारं सन्निकर्षस्वनम् (भा० अनु० ११७।११-१२)। **संनिकर्षः=कर्षणम् (अनसः)।**

**—कॄ (कॄ विक्षेपे)**। विरहशयने संनिकीर्णैकपार्श्वाम् (मेघ० ८७)। **संनिकीर्णं निषण्णम्।**

**—गम् (गम्लृ गतौ)**। यै. संनिगच्छति सर्वांस्तानतिरोचते (श० ब्रा०

१४।५।१।६) । **संगच्छते इत्याह । निशब्दस्य चारितार्थ्याय नितरां सङ्गच्छत इति व्याख्येयम् ।**

**—ग्रह् (ग्रह उपादाने)** । त्रैलोक्यं संनिगृह्यास्मांस्त्वां च (भा० वन० २२६।१६)। व० बृ० सं० ५२।२) । **सन्निगृह्य=आत्मसात्कृत्य, न्यग्भाव्य, अधिकृत्य ।** तेजस्तत् सनिजग्राह पुनरेवान्तरात्मनि (भा० शां० २५७।१३) । **सन्निजग्राह=संजहार ।**

**—दृश् (दृशिर् प्रेक्षणे)** । पक्षलम्भो ममायं वः प्रत्यक्षं सन्निदर्शितः (रा० ४।६३।१५) ।

**—धा (डुधाञ् धारणपोषणयोः)** । दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि सन्निधत्ते (रघु० १३।४४) । **सन्निधत्ते आसञ्जयति** । तेन (आदित्यः) सर्वान्प्राणान् रश्मिषु सन्निधत्ते (प्रश्न० उ० १।६) । दूरादाहृत्य समिधः सन्निदध्याद् विहायसि (मनु० २।१८६) । **निक्षिपेदित्यर्थः ।** संनिदधुस्तत्र पाण्डवा आयुधानि (भा० आदि० २।२०७) । **निचिक्षिपुरित्यर्थः ।** यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान्ग्रामान् एतान्ग्रामानधितिष्ठस्वेत्येवंम प्राणः । इतरान्प्राणान् पृथक् पृथगेव सन्निधत्ते (प्रश्न० उ० ३।४) । **सन्निधत्ते=प्रेरयति=प्रवर्तयति** । ऋषीन् गन्धर्वा उपनिषेदुः, ते ह स्म संनिदधतीदं वाऽत्यरीरिचन्निदमूनमकन्निति (श० ब्रा० ११।२।३।७) । **सन्निदधति=समीक्षन्ते ।** सङ्ग्रामो वा एष सन्निधीयते यः प्रयाजैर्यजेत (श० ब्रा० १।५।३।७)। सन्निधास्ये च ते स्मृतः (कथा० ५।५३) । **संनिधास्ये=उपस्थास्ये ।** स चाहं सह सख्या धनमित्रेण तत्र संन्यधिषि (दशकु०) । **उपास्थिषीत्यर्थः ।** तनू वरुणस्य गृहे संनिदधावहै (ऐ० ब्रा० १।२४) । **संनिधानं नीचैराधानम्)** । नोच्चैः संनिहितो हसेत् (भा० वि० ४।८८) । **सन्निधौ वर्तमान इत्यर्थः ।** नवं नेत्राद्वैत कुवलयदृशः सन्निदधति (विद्ध० ४।१४) । **सन्निधापयन्ति=उपस्थापयन्ति । इह धाञ् सकर्मकः ।** वाङ्मूर्तिर्मे देवता सन्निधत्ताम् (बालरा० १।१४ **सन्निहिता भवतु, सन्निधिं कुरुतादित्यर्थः** । देवा वै संग्रामं सन्निधास्यन्तः (श० ब्रा० १।२५।१८) । **सन्नह्यमानाः, सज्जा भवन्तः** । कायः सनिहितापायः (हितोप०) । **संनिहितः=सन्निकृष्टः ।** ततो वित्तं विविधं सन्निधाय यथोत्तमाहं कारयित्वा च कोशम् (भा० आश्व १०।३५) । **सन्निधाय=संगृह्य=समाहृत्य ।** पुत्रापेक्षी वञ्च्यते सन्निधाता (पञ्च० १।२२) । **संनिधाता=संग्रहीता ।** इह हि शास्त्रे दृष्टान्यष्टादश तीर्थानि राज्ञाम् । तद्यथा—मन्त्रिपुरोहितसन्निधातृ०...(तन्त्रा० ३ उपक्रमे) । तस्मादाप्तपुरुषाधिष्ठितः सन्निधाता निचयाननुतिष्ठेत् (कौ० अ० २।५।२३)। **सन्निधाता समाहर्ता** । सन्निधातृंश्च

मोपस्य हन्यात्...(मनु० ६।२७८) । **सन्निधातॄन्=अवस्थापकान् । मोषस्चौरधनम् ।**

—**नी (णीञ् प्रापणे)**। सर्पिर्मधुनी दध्युदके च सन्निनीय (शाङ्खा० गृ० १।२४, १।२४, शां० श्रौ० ४।१६।१०) । **सन्निनीय=संमिश्रय ।**

—**पत् (पत्लृ गतौ)** । बाणाः सनिपेतुरकुण्ठाग्रा नागेषु च हयेषु च (भा० भीष्म ५२।६)। **समं पेतुरित्याह** । ततः संन्यपतन् सर्वे गन्धर्वाः सह (भा० वन० २४१।२१) । **संन्यपतन्=प्रातिभट्येन समागच्छन्** । योग्यत्वे सत्यृताववश्यं संनिपतेत्, असंनिपतन् पुत्रोत्पत्तिं निरुन्धानः प्रत्यवेयात् (आप० ध० २।१। १।१७ इत्यत्र हरदत्तः) । **संनिपतेत्=संविशेत्, मिथुनी भवेत्** । छत्र ध्वज च समरे शराभ्यां सन्यपातयत् (भा० द्रोण० १६७।२७)। सन्यपातयत्=**अवापातयत्, प्राभ्रंशयत्** । तौ संनिपातयेत् (वा० गृ० १६।१) । **मिथुनी कुर्यादित्याह** । **वेदमौर्वीविपञ्चीनां** ध्वनयः प्रतिमन्दिरम् । यत्र सनिपतन्तोपि न बाधन्ते परस्परम् (बृ० श्लो० सं० १।३) ॥ **संनिपतन्तः समागच्छन्तः सङ्गच्छमानाः । साकमुत्तिष्ठन्ति इत्यर्थः** । धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः (मेघ० ५) । **सन्निपातः समुदायः** । एको हि दोषो गुणसन्निपाते निमज्जति (कु० १। ३) । **उक्तोऽर्थः** । प्राणानां सन्निपाताच्च सनिपातः प्रजायते (भा० शां० १८२।१५) । **सन्निपातात्=सङ्गमात्** । व्यपगतसुखदुःखसंनिपातः (यो० वा० ५।७४।६१) । **संनिपातः=संसर्गः=संश्लेषः** । प्रतीमो हि वयमक्षसंनिपातानन्तरमविविक्तसामान्यविशेषविभागं संमुग्धवस्तुमात्रगोचरमालोचनज्ञानम्(शा० दी० १।४) । **संनिपातः=संयोगः** । सनिपाते परस्य (गौ० ध० १।६।४) । **युगपत्समवाये, एकत्र मेलने इत्याह** । दर्शपूर्णमासयोर्विकृतेश्च सन्निपाते (भा० श्रौ० ६।१६।१) । **सन्निपाते युगपत् प्राप्तौ** । यदृच्छासंनिपाते उपसङ्गृह्य तूष्णीं व्यतिव्रजेत् (आप० ध० १।१८।८) । **यदृच्छासंनिपाते=समापत्तौ=अतर्किते समागमे** । संचिन्त्य तु पार्थेन संनिपातो न नः क्षमः । **संग्रामो न युक्त इत्याह** । सुमहान्संनिपातोऽभूद् धनञ्जयबृहन्तयोः (भा० सभा० २७।८) । **उक्तोऽर्थः** । स संनिपातस्तुमुलस्तस्य तेषां च भारत (भा० द्रोण० १५३।१४)। महता संनिपातेन क्षत्रियान्तकरेण ह (भा० सभा० २८।२) । सन्निपातो न मन्तव्यः शक्ये सति कथंचन (भा० शां० १०२।२२) । **न मन्तव्यः=नैष्टव्यः** । देवि ! उरभ्रसंनिपातं पश्यामः (माल० १)। न शक्या समाधातुं सन्निपाते महाचमूः (भा० भीष्म० ३।७८)। **सन्निपातः सङ्घर्षः** । मदीयेनाथ नागेन वेगेनापत्य दूरतः । सन्निपातो महान्दत्तो दन्तयोर्वनदन्तिनः (बृ० श्लो० सं०) । **सन्निपातः =प्रहारः** । ऋतौ च संनिपातो दारेणानुव्रतम् (आप० ध० २।१।१।१७) । **संनिपातः=संभवः, व्यवायः, मिथुनीभावः, मैथुनम्** । यावत् सम्पातं चैव सह

शय्या (आप० ध० २।१।१।२१)। सवर्णायामन्यपूर्वायां सकृत् सन्निपाते पादः पततीत्युपदिशन्ति (आप० ध० २।२७।११)। **उक्तोऽर्थः**। न सन्निपतितं धर्म्यमुपभोग यदृच्छया। प्रत्याचक्षे न चाप्येनमनुरुध्ये सुदुर्लभम् (भा०शां० १७९।२४)॥ संनिपतितमुपनतम्, स्वगोचरं गतम्। राक्षसस्त्रिशिरा नाम संनिपत्येदमब्रवीत् (रा० ३।२७।१)। **संनिपत्य त्वरया तत्समीपं गत्वा**। संनिपत्य प्रकृतिभिर्मातृगुप्तोऽभ्यषिच्यत (राज० ३।२३९)। **श्लेष्येत्यर्थः**। संनिपत्योपकारकः=**सद्यः साक्षाद्वाऽनुग्राहकः साधको वा**। एमण्त्रता तु तक्षाणः सन्निपात्य प्रचोदिताः (बृ० श्लो० सं० ५।१९६)। **संनिपात्य=एकीकृत्य समानाय्य**। अथ स राजा पौरजानपदान् संनिपात्य (अवदा० यज्ञजा०)। **उक्तोऽर्थः**। तस्य विद्यागुरून्योनिसम्बन्धांश्च संनिपात्य सर्वाण्युदकादीनि प्रेतकर्म्माणि कुर्युः (गौ० ध० ३।२।२)। **संनिपात्य=एकत्र समवेतान्कृत्वा**। स संनिपात्यावरजान् (रघु० १४।३६)। **उक्तोऽर्थः**। त्वत्कृते हि मया वीर राजानः संनिपातिताः (भा० वन० ५६।३)। **संनिपातिताः=समानायिताः**। मन्त्रान्तैः कर्मादिः सान्निपात्योऽभिधानात् (का० श्रौ० १।३।५)। **सन्निपात्यः। छान्दसो दीर्घः। सम्बन्धनीय इत्यर्थः। मन्त्रमुच्चार्य तत्समाप्तिकाल एव यागादिक्रियानुष्ठेयेत्याह**। इत्येतस्मिन्संनिपातिनो गुणा एकैकशोऽप्यन्यत्र दुर्लभाः (दशकु०)। **संनिपातिनः=समवायिनः=समुदायिनः**।

—**बन्ध्** (**बन्ध बन्धने**)। संसारे संनिबद्धानां निगडच्छेदकर्तरी (ब्रह्मवै० पु०)। भरते संनिबद्धाः स्मः सौनिके पशवो यथा (रा० २।४८।२५)। **संनिबद्धाः सन्दिताः, सन्दानिताः, शृङ्खलिताः**।

—**युज्** (**युजिर् योगे**)। ततो मां विपये ह्यद्य व्यसने संनियोक्ष्यति (मार्क० पु० ६६।२०)। **निपातयिष्यतीत्याह**। संनियोगशिष्टानामेकतरापाये तदितरस्याप्यपायः (परिभाषा)। **संनियोगः=एकक्रियान्वयः**।

—**रुध्** (**रुधिर् आवरणे**)। यद्यपि न सन्निरुध्यते दुःखं तथापि तदभिभवः शक्यः कर्तुम् (साङ्ख्य त० का० १ व्याख्यायाम्)। **सन्निरुध्यते=उच्छिद्यते**। श्रुतिश्च सन्निरुध्यते पुरा तवेह (भा० शां० ३२१।३६)। कामक्रोधस्य लोभस्य सन्निरुद्धस्य मेधया (हरि० ३।१८।५)।

—**वप्** (**डुवप बीजसन्ताने**)। न तु धर्मसन्निवापः स्यात् (आप० १।२८।२०)। **एकस्मिन्धर्मे सहान्वयः सन्निवापः**। अथैनौ संनिवपति (श० ब्रा० ७।१।१।६८)। **सममग्निना संयुनक्ति**। नानाग्नीनां संनिवापं वर्जयेत् (आप० ध० २।५।१२।१०)। **संनिवापः=समावेशनम्**।

—**विश्** (**विश प्रवेशने**)। यादृशैः संनिविशते यादृशांश्चोपसेवते (भा० (भा० उ० ३६।१३)। **संनिविशते=सहास्ते, संगच्छते**। उदात्तानुदात्तसंनि-

वेशात्स्वरितः (अपि० शि० ८।२२) । **संनिवेशः—मेलनम्** । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदि संनिविष्टः (कठ० उ० ६।१७) । **संनिविष्टः =स्थितः** । स्वसंनिवेशाद्व्यतिलङ्घिनि (रघु० ६।१९) । **संनिवेशः स्थानम्** । **संनिवेशो निकर्षणम्** (अमर०) । देशं कालं तथा स्थानं सनिवेशं तथैव च (याज्ञ० ) । इत्यत्र **विश्वरूपाचार्येण स्थानं पत्तनादिकं तत्रैव दिग्विभाग-परिच्छिन्नानि कियन्त्यपि गृहाणि सम्यङ् निविष्टानि संनिवेश इत्युक्तम्** । विनाद्भिरप्सु वाप्यार्तः शारीरं संनिवेश्य च (मनु० ११।२०२) । **शारीरं मूत्रं पुरीषं वा । संनिवेश्य=समुत्सृज्य** ।

—**वृत् (वृतु वर्तने)** । समानः संनिवर्तयेत् (हरि० १।८०।५८) । **अशित-पीतादिकं समी कुर्यात् । यथास्थानं प्रापयेदित्यर्थः** । अन्ये सम्बन्धिनो विप्र मृत्युना संनिवर्तिताः (मार्क० पु० ७६।३३) । **प्रतिप्रेषिता इत्याह** । संनिवर्त्यानुजान्सर्वान् (भा० वि० १।७) । **संनिवर्त्य=एकत्रानीय संगमय्य । अत्र वर्ततिर्गत्यर्थः । न च पुनरावर्तत इति प्रयोगदर्शनात्** ।

—**सद् (षद्लृ विशरणगत्यवसादनेषु)** । द्वौ सनिषद्य यन्मन्त्रयेते (अथर्व० ४।१६।२) । **संनिषद्य=उपोपविश्य** ।

## सम्परा (सम्+परा)

—**इ (इण् गतौ)** । युद्धायत्योः **सम्परायः** (अमरः) । न साम्परायः प्रतिभाति बालम् (कठ० उ०) । **साम्परायः । छान्दसो दीर्घः । सम्परायः परलोकः** । स्वैरेष्वपि न तेनाहं स्मरामि वितथं वचः । उक्तपूर्वं कुतो राजन् साम्पराये स वक्ष्यति (भा० आदि० ४८।२१) । **साम्परायः=सम्परायः=सङ्कटम् । सम्परायो मृत्युः प्रयोजनमस्येति साम्परायिकं युद्धम्** । मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम् (अमरः) ।

## सम्परि (सम्+परि)

—**अस् (असु क्षेपे)** । सन्तरां मेखलां पर्यस्तामेवैनामेतत् सतीं पर्यास्यन्त (श० ब्रा० ३।४।३।२) । **सम्पर्यास्यन्ततराम्=दृढतरामबध्नन्नित्यर्थः** ।

—**आप् (आप्लृ व्याप्तौ)** । सम्पर्याप्य मूलानि च प्रान्तानि च (कौ० सू० ९०) । **सम्पर्याप्य=सहादाय** ।

—**इ (इण् गतौ)** । दक्षिणं मण्डलं चोभौ त्वरया सम्परीयतुः (रा० ६।७६।३२) । **परिचक्रमतुरित्यर्थः** । स एव सं भुवनानि पर्यैत् (अथर्व० १९।५३।४) । **सम्पर्यैत्=अवाहरत्=अन्तरकरोत्** । श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य (कठ० उ० २।२) । **सम्यक् परिगम्य मनसालोच्येत्यर्थः** ।

—क्रम् (क्रमु पादविक्षेपे)। बहूनि सम्परिक्रम्य तीर्थान्यायतनानि च (भा० आदि० १।१२)। सम्परिक्रम्य=पर्यट्य।

—ग्रह् (ग्रह उपादाने)। स पादुके ते भरतः स्वलङ्कृते महोज्ज्वले सम्परिगृह्य धर्मवित् (रा० २।११२।२९)। सम्परिगृह्य=अवसाय्य=परिसमाप्य। एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः (कठ० उ० १।२।१३)। साध्ववबुध्य। यात्रां सम्परिगृह्य (भा० शां० ६९।६८)। सम्परिगृह्य=स्वीकृत्य।

—भू (भू सत्तायाम्)। एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत् (भा० शां० १९५।१९)। सून्मयाकारं नयेदिति नील०।

—वृत् (वृतु वर्तने)। श्रान्तान्हयान्सम्परिवर्त्य शीघ्रम् (रा० २।४५।३३)। श्रमापनुत्तये कृतविलुण्ठनान् कृत्वेत्यर्थः।

—श्रि (श्रिञ् सेवायाम्)। यजुषा वा एते सम्परिश्रियेते (ऐ० ब्रा० ५।३)। सम्परिश्रियेते=सम्परिश्रीयेते=छाद्येते। स यदैव हविर्धाने संपरिश्रिते मन्येत (ऐ० ब्रा०)। संपरिश्रिते=सच्छदिष्के।

—हृ (हृञ् हरणे)। अभाषमाणोऽनुनयं मुहूर्त्तं वचोऽब्रवीत् सम्परिहृत्य भूयः (भा० वि० ६६।२५)। सम्परिहृत्य=परिहृत्य=परिवृत्य।

सम्प्र+(सम्+प्र)

—आप् (आप्लृ व्याप्तौ)। सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके (मनु० ३।९९)। सम्प्राप्ताय=अभ्यागताय।

—इ (इण् गतौ)। यददः सम्प्रयतीरहावनदता हते (अथर्व० ३।१३।१)। सम्प्रयतीः=संभूय इतस्ततः प्रयान्त्यः।

—इष् (इष गतौ)। अथापि जानन्तं सम्प्रेष्यत्यग्नये समिध्यमानायानुब्रूहि (नि० १।१५।८)। सम्प्रेष्यति=प्रेष्यति=आदिशति=आज्ञापयति। यियासतस्ततः कृष्णः पार्थस्याश्वान्मनोजवान्। सम्प्रैषीद्धेमसंछन्नान्…… (भा० द्रोण० २८।१)। सम्प्रैषीत्=प्राजीत्=समयंसीत्। अथातः सम्प्रेष्यति (श० ब्रा० ९।२।३।१)। सम्प्रेष्यति=आदिशति=आज्ञापयति। न खल्वेषा मतिर्मह्यं यत्त्वां सम्प्रेषयाम्यहम् (रा० ५।४३।१२)। सम्प्रेषयामि। नियोजयामि। तामद्य सम्प्रेष्य परिग्रहीतुः (शा० ४।२२)। विसृज्येत्यर्थः। अथ सम्प्रेषितास्थानः सचिवानब्रवीन्नृपः (बृ० श्लो० सं० ५।१)। सम्प्रेषितास्थानः=विसृष्टसदाः।

—ईर् (ईर गतौ, ईर क्षेपे)। यानेवैषां तस्मिन्संग्रामेऽघ्नंस्तान् पितृयज्ञेन समैरयन्त (श० ब्रा० २।६।१।१)। समैरयन्त समजीवयन्। समिन्द्रेरय

गामनड्वाहं य आवहदनः (ऋ० १०।५६।१०)। **समीरय=आसुव=प्रयच्छ।** कूपोपकण्ठे विश्रान्तो ब्राह्मणस्तया सम्प्रेर्य कूपान्तः पातितः (पञ्चत०)। **सम्प्रेर्य=प्रणुद्य।**

—उक्ष् (उक्ष सेचने)। त्रिरेवाग्नीन् सम्प्रोक्षति (गो० ब्रा० पूर्व० १।१४)। **अभिषिञ्चतीत्यर्थः।**

—कृष् (कृष विलेखने)। सम्प्रकर्षन् विकर्षंश्च सेनाग्रं समलोडयत् (भा० द्रोण० १२७।३१) **सम्यक् प्रकर्षेण विलिखन् इति सम्प्रकर्षन्नित्यनेनाह।**

—क्रम् (क्रमु पादविक्षेपे)। शरीरप्रतिसंहारमात्मनः सम्प्रचक्रमे (भा० आदि०२४।१)। **प्रारेभ इत्याह।** व्यूहितुं सम्प्रचक्रमे (भा० वि० ५२।२१)। **उक्तोऽर्थः।**

—क्षुभ् (क्षुभ संचलने)। तस्मिन्निपतिते भूमौ तत्सैन्यं सम्प्रचुक्षुभे (रा० ६।७८।२४)। **=विव्यथे, विजह्वाल।**

—क्षै (क्षै क्षये)। अवक्षाणानि सम्प्रक्षाप्य (भा० श्रौ०)। **धूमायमानानङ्गारान् निर्वाप्य।** संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम् (रा १।६५।१४)। **सम्प्रक्षुभितं=विह्वलम्।**

—गाह् (गाहू विलोडने)। यथार्णवं महाघोरमप्लवः सम्प्रगाहते (भा० आश्व० ५०।२६)। **प्रविशतीत्यर्थः।**

—गॄ (गॄ शब्दे)। यदेवैनाः सम्प्रगीर्य होत्रा इत्याचक्षते तेन समाः (ऐ० ब्रा० ६।१३)। **सम्प्रगीर्य=संज्ञां कृत्वा, व्यपदिश्य।**

—गै (गै शब्दे)। या गाथाः सम्प्रगायन्ति (भा० कर्ण० ४०।२१)। **सम्प्रगायन्ति=गायन्तः कथयन्ति।** इकारान्तं चैवोपायं सम्प्रगायन्ति कुत्साः (लाट्या० श्रौ० ७।१८।१९)। **उक्तोऽर्थः।**

—ग्रह् (ग्रह उपादाने)। अथ जुहूं चोपभृतं च सम्प्रगृह्णाति (श० ब्रा० १।८।३।२३)। **सम्प्रगृह्णाति=गृह्णाति। नार्थः सम्प्राभ्याम्।** स ह वा अग्नये सम्प्रगृह्णाति (श० ब्रा० १।६।२।२)। **समं धत्ते।** अभीषून्सम्प्रजग्राह स्वयं कुरुपतिस्तदा (भा० सभा० २।१७)। **जग्राहेत्येवार्थः।** उपानहं सम्प्रगृह्य (स्वा) (व० बृ० सं० ८८।३)। राज्ञो वचनम्···सम्प्रगृह्य (भा० १.२६।४)। **सादरं स्वीकृत्य।**

—चक्ष् (चक्षिङ् व्यक्तायां वाचि)। दग्धस्योपशमार्थाय चिकित्सा सम्प्रचक्ष्यते (सुश्रुत० १।३७।१३)। **व्याख्यायत इत्याह।**

**—ज्ञा (ज्ञा अवबोधने)**। नेह विद्वान् इत्यनेन सम्प्रज्ञातवान् विवक्षितः किन्तर्हि श्रुतानुमितविवेकः (यो० भा०)।

**—दा (डुदाञ् दाने, दाण् दाने)**। लुब्धं हन्यात्संप्रदानेन नित्यम् (भा० शां० १२०।४७)। **सम्प्रदानेन=उपग्राह्यैः, उपदाभिः**। अहन्यहनि चाप्येवं याचतां सम्प्रदीयते (भा० वन० ६५।२१)। **सम्प्रदीयते=वितीर्यते, प्रविश्यते**। तस्मै वसवः प्रातः सवनं सम्प्रयच्छन्ति (छा० उ० २।२४।६)। **सम्प्रयच्छन्ति प्रददति**। कुमारं मातापितरौ त्रिः सम्प्रयच्छेते (कौ०सू० ५४)। **सम्प्रयच्छेते=अन्योन्यस्मै प्रदत्तः। दाणः प्रयोगे प्रशब्दः सम्प्रो वा प्रायेण समं व्यवह्रियेते**। हिरण्यं सम्प्रदायं षोडशिना स्तुवते (ताण्ड्य० १२।१३)। **सम्प्रदायम्=प्रदाय। सम्प्रदायमिति णमुलन्तम्**। सम्प्रदायैव तेषां (कर्म०) (भा० उ० २७।२५)। प्रणम्य भगवत्पादान् श्रीधरादींश्च सद्गुरून्। सम्प्रदायानुसारेण गीताभाष्यं समारभे ॥ **सम्प्रदायः=गुरुशिष्यानुक्रमेण प्राप्तः शास्त्रोपदेशः। असम्प्रदत्ता (कन्या)=पित्रा विवाहेऽदत्ता, अनूढेति यावत्**। दीयतां सम्प्रदानम् (रा० ४।११।३४)। **प्रीतिदानम् इत्याह**। आत्मनः सम्प्रदानेन मर्त्यो मृत्युमुपाश्नुते (भा० शां० २४६।८)। **सम्प्रदानेन=विषयेभ्यः समर्पणेन**। स तदानीं महाबुद्धिर्महमूदं मदोद्धतम्। तद्दुर्गद्वितयीदानसम्प्रदानममन्यत (शि० भा० १५।४६) ॥ **सम्प्रदानं सम्प्रदीयतेऽस्मा इति प्रतिग्रहीतोच्यते**। मरुद्भ्यः सम्प्रदित्सांचकार (नि० १।५।१३)। **दातुमियेष**।

**—दिश् (दिश अतिसर्जने)**। नवाक्षरा बृहती सम्प्रदिष्टा (भा० वन० १३४।१६)। **कीर्तिता**।

**—दृश् (दृशिर् प्रेक्षणे)**। अचिरात्तस्य धूमाग्रं चितायां सम्प्रदृश्यते (रा० २।६६।१८)। अविज्ञानान्मया कृष्ण रोषोऽयं सम्प्रदर्शितः (हरि० २।१२।३६)। त्वमात्मानं मृतवत् सम्प्रदर्श्य (हितोप०)

**—द्रु (द्रु गतौ)**। सम्प्राद्रवद्यत्र पार्था बभूवुः (भा० वन० ४।२१)। **प्राधावदित्यर्थः**।

**—धाव् (धावु गतिशुद्ध्योः)**। सैन्यानां त्वरतां सम्प्रधावताम् (भा० ५।५१४८)। **विप्रकृष्टं धावतामित्यर्थः**।

**—धृ (धृञ् धारणे)**। एभिरेव दत्ताधिकारैः सार्धं सम्प्रधारयतु भवान् (तन्त्रा० ३। उपक्रमे)। **मन्त्रयताम्, विमृशतु, चिन्तयतु इत्याह**। **सम्प्रधारणा** तु समर्थनम् (अमरः)। **समर्थनं चिन्तनम्। युक्तायुक्तपरीक्षा। इदमिह सम्प्रधार्यमित्यनेकत्र व्याकरणमहाभाष्ये**। दोषाणां गुणानां च सम्प्रधार्य बलाबलम् (रा० ३।३५।२)। अनार्यमार्यकर्माणमार्यं चानार्यकर्मिणम्। सम्प्रधा-

यान्ब्रवीद् धाता न समौ नासमाविति (मनु० १०।७३)॥ द्रौपदीमार्ष्टिषेणाय सम्प्रधार्य महारथाः (शैलमारुरुहुः) (भा० वन० १६१।३)। सम्प्रधार्य समर्प्य।

—नश् (णश अदर्शने)। घोरत्वं सम्प्रणश्यति (भा० वन० २०७।८०)। सम्प्रणश्यति=विनश्यति=नश्यति।

—नी (णीञ् प्रापणे)। यशो रक्षस्व विदुर सम्प्रणीतम् (भा० सभा० ६४।६)। सम्प्रणीतम्=चितम्=सञ्चितम्। (दण्डं) यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्तिषु (मनु० ७।१६)। सम्प्रणयेत्=सम्यक् प्रणयेत्=प्रवर्तयेत्=धारयेत्। त्रीणि श्लोकसहस्राणि...मुनिना सम्प्रणीतानि (भा० आदि० २। २६०)। सम्प्रणीतानि=रचितानि।

—नु—नू (णु णू स्तवने)। स दाता यत्र यत्रेति सर्वतः सम्प्रणूयते (भा० अनु० १२२।१३)। सम्प्रणूयते ऽभिष्टूयते।

—पद् (पद गतौ)। स्वप्याद्भूमौ शुची रात्रौ दिवा सम्प्रपदैर्नयेत्। सम्प्रपदैः=अटनैः संचरणैः परिक्रमणैः।

—मुष् (मुष स्तेये)। अनुभूतविषयासम्प्रमोषः स्मृतिः (यो० सू० १।११)। सम्प्रमोषः=मोषः=अपहारः।

—या (या प्रापणे)। तदनीकं विराटस्य शुशुभे सम्प्रयातम् (भा० वि० ३१।३५)। सम्प्रस्थितमित्यर्थः। येनासौ सम्प्रयास्यति (सू० सि० ६।१६)। चलिष्यति, संक्रमिष्यति,। नखरैः सम्प्रयातः (भा० शां० २४३।६)। नखैः सहायैः प्रवृत्त इत्यर्थः।

—याच् [टुयाचृ याच्ञायाम्)। तं गत्वा सहिताः सर्वे वरं वै सम्प्रयाचत (भा० वन० १००।८)। याच्ञायां साहित्यं तु 'सहिताः' इत्यनेनैवोक्तम्, तेन नार्थः समा।

—यु (यु मिश्रणामिश्रणयोः)। इति नवनीतेन पाणी प्रलिप्य सर्वान्केशान्सम्प्रयौति (वा० गृ० १६।७)। सम्प्रयौति=सम्पिण्डयति=संहतान् करोति।

—युज् (युजिर् योगे)। स्त्रियं सम्प्रयोक्ष्यामहे (नि० १।४।४०, उपो०(बुर्गः)। चेति समुच्चयार्थं उभाभ्यां सम्प्रयुज्यते (नि० १।४)। वाङ्मात्रमेव पश्यामि माधुर्यं सम्प्रयुज्यते (हरि० २।६६।५०)। सा सम्प्रायुज्यत मन्त्रिणा (राज० १।४६७)। सहाशेत, समभवदित्यर्थः। सम्प्रयुक्तः किलैवायं दिष्टैर्भवति पूरुषः (भा० द्रोण० २४।२)। सम्प्रयुक्तः=युक्तः। सम्बद्धः। ऐरावणमधिष्ठातुं प्रवरं सम्प्रयुक्तवान् (क्वचित्संनियुक्तवानिति पाठः) (हरि० २।६६।५४)।

प्रेरितवानित्यर्थः । श्येना यथैवामिषसम्प्रयुक्ताः (भा० वन० २६९।२६)। उक्तोऽर्थः। भारते (आश्व०१९।२०) य आत्मनात्मानं सम्प्रयुक्तं प्रपश्यति इत्यत्र सम्प्रयुक्त इति क्वचिदर्थे सातिशयं दत्तावधान इत्यर्थमाचष्टे । स्वाध्यायाद् इष्टदेवतासम्प्रयोगः (यो० सू०) । सम्प्रयोगः=सम्पर्कः। साक्षात्कार इत्यर्थः। उष्णत्वमग्न्यातपसम्प्रयोगात् (रघु० ५।५४)। सम्प्रयोगः संयोगः। हरिसम्प्रयुक्तं महेन्द्रवाहम् (भा० वन० १६५।१)। हरिणा युक्तमित्याह। नार्थः सम्प्राभ्याम् । रथं सम्प्रयुक्तम् (रा० २।४६।३३) । सम्यगानीय दर्शितमित्यर्थः। मृगयासम्प्रयुक्त : (का० नी० सा० १८।६२)। मृगयासक्त इत्यर्थः । तिङभिहितो भावः कर्त्रा सम्प्रयुज्यते, कृदभिहितः पुनर्न सम्प्रयुज्यते (पा० ३।१।६७ सूत्रे भाष्ये)। नियमेन युज्यत इत्यर्थ इत्युद्द्योतः। ईश्वरः स कथं भावैरनिष्टैः सम्प्रयुज्यते (याज्ञ० ३।१२९) । सम्प्रयुज्यते=युज्यते । द्राक्षाभयां माक्षिकसम्प्रयुक्ताम् (सुश्रुत० १।२४६।९) । सम्प्रयुक्ताम् =संमिश्रिताम् । लब्धा मही ब्राह्मणसम्प्रयोगात् । शोभनः प्रयोगः सम्प्रयोगः।

—युध् (युध सम्प्रहारे)। बाहुभ्यां सम्प्रयुध्यस्व यदि त्वं योद्धुमागतः (रा० ६।६५।३१)। युद्धमारभस्वेत्यर्थः। यौ तौ कर्णश्च भीमश्च सम्प्रयुद्धौ महाबलौ (भा० द्रोण० १३१।३)। सम्प्राहरेतामित्याह। सम्प्रयुद्धो धनुष्कोटया। कौन्तेयः परवीरहा (भा० वन ३९।५०)। सम्प्रयुद्धः=योद्धुमारब्धः।

—ली (लीङ् श्लेषणे)। अव्यक्ते पुरुषे ब्रह्मन्निष्क्रिये सम्प्रलीयते (भा० शां० ३३९।३१)। सम्प्रलीयते अभिसंविशति, अप्येति। एवं धर्मान्राजधर्मेषु सर्वान् सर्वावस्थं सम्प्रलीनान्निबोध (भा० शां० ६३।२५) । सम्प्रलीनान्= अन्तर्गतान्=निमग्नान्

—वद् (वद व्यक्तायां वाचि)। वरतनु सम्प्रवदन्ति कुक्कुटाः (पा० १।३।४८ सूत्रे भाष्ये)। सम्प्रवदन्ते ब्राह्मणाः। (तत्रैव काशिकायाम्) । सहोच्चारयन्ति शब्दान् इत्यर्थः।

—वृत् (वृतु वर्तने)। न वृषाः सम्प्रवर्तेरन् (भा० शा० ६८।२१) । न रेतः सिञ्चेरन्नित्याह। सायन्तने सवनकर्मणि संप्रवृत्ते (शा० ३।२५)। संप्रवृत्ते=प्रवृत्ते=प्रक्रान्ते। तोरमाणेन दीनाराः स्वाहृताः सम्प्रवर्तिताः (राज० ३।१०३)। प्रचारिताः।

—वृध् (वृधु वृद्धौ)। श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्संप्रवर्धते (भा० उ० ३५।५१)। वर्धत इत्याह।

—सञ्ज् (षञ्ज सङ्गे)। द्रुतप्रत्यर्पितपदं सम्प्रसज्य पुरः स्थितम् (शि० भा० २१।२२)। दृढं न्यस्येत्यर्थः।

**—सद्** (**षद्लृ विशरणगत्यवसादनेषु**) । श्रद्धा चेतसः सम्प्रसादः (यो० सू० १।२० भा०) । तपसां सम्प्रसादः । (उत्तर०) । **फलमिति तात्पर्यार्थः** ।

**—सृ** (**सृ गतौ**) । ता उभौ चतुरः पदः सम्प्रसारयाव (वा० स० २३। २०) । रेफः सम्प्रसार्यमाण ऋकारो भवति (नि० २।२।५) इत्यत्र दुर्गः) ।

**—स्था** (**ष्ठा गतिनिवृत्तौ**) । स पदेऽक्षरे सम्प्रतिष्ठते (प्र० उ० ४।६) । **सम्प्रतितिष्ठतीत्यर्थः** । गार्हस्थ्यस्य च धर्मस्य योगधर्मस्य चोभयोः । अदूर-सम्प्रस्थितयोः किंस्विच्छ्रेयः पितामह (भा० शां० २६८।२) ।। **सम्प्रस्थितयोः प्रवृत्तयोः** । **अदूरसंप्रस्थितयोः=अदूरविप्रकृष्टयोः** । नादेन तद्वन तस्य सम्प्र-स्थितमिवाभवत् (भा० वन० ११।११) । **सम्प्रस्थितम्=चलितम्=क्षुभितम्** । को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् । कर्तुमुत्सहते लोके दृष्ट्वा सम्प्र-स्थितं जगत् (भा० शां २२७।६२) । **सम्प्रस्थितं चलम्** ।

**—हृ** (**हृञ् हरणे**) । असिभ्यां सम्प्रजह्राते परस्परमरिन्दमौ (भा० द्रोण० १४२।३७) । **मिथ आजघ्नतुः** । सम्प्रहरन्ते राजानः (पा० १।३।१५३ इत्यत्र का०) । **परस्परं युध्यन्त इत्याह** । सम्प्रहारस्तु सुमहान् भविष्यति न संशयः (रा० ३।२४।६) । **सम्प्रहारो युद्धम्** । स सम्प्रहारस्तुमुलस्तेषां च मम भारत (भा० वन० १६६।२२) । **युद्धमित्यर्थः** ।

सम्प्रति (सम्+प्रति)

**—इ** (**इण् गतौ**) । किं तत्कथं वेत्युपलब्धसंज्ञा विकल्पयन्तोपि न सम्प्रतीयुः (भट्टि० ११।१०) । **सम्प्रतीयुः=निश्चिनुयुः=व्यवस्येयुः** ।

**—पद्** (**पद गतौ**) । नष्टं धनं स्वामी क्षिप्रं सम्प्रतिपद्यते (रा० ३।७३। १६) । **सम्प्रतिपद्यते=प्रतिलभते** । सर्वे त्वयि सम्प्रतिपत्स्यन्ते धर्मात्मा सत्य-वागिति (भा० उ० ७३।३२) । **सम्प्रतिपत्स्यन्ते=ऐकमत्येन ज्ञास्यन्ति** । यो वै व्रतं यथोद्दिष्टं तथा सम्प्रतिपद्यते । अखण्डं सम्यगारभ्य तस्य लोकाः सनातनाः (भा० १३।३६२६) ।। **समापयतीत्यर्थः** । भगवन् साधु मेऽद्यान्यत्स्थानं सम्प्रति-पादय (भा० वन० १८७।१४) । **प्रापयेत्यर्थः** । न मां परं सम्प्रतिपत्तुमर्हसि (कु० ५।३६) । **सम्प्रतिपत्तुम्=ज्ञातुम्, मन्तुम्** । तस्मै सम्प्रतिपन्नाय यथाव-त्परिपृच्छते । शिष्याय······(भा० आश्व० ३५।१३) **सम्प्रतिपन्नाय=विधि-वदुपेताय** । द्व्यामुष्यायणस्तु जनकप्रतिग्रहीतृभ्यामावयोरयमिति सम्प्रतिपन्नः (मनु० ८।५० इत्यत्र कुल्लूकः) । **सम्प्रतिपन्नः=अभ्युपगतः** । समवायेन वणिजां लाभार्थं कर्म कुर्वताम् (याज्ञ० २।२५६) । **सर्वे वयमिदं कर्म मिलिताः कुर्म इत्येवंरूपा सम्प्रतिपत्तिः समवायः** (मिताक्षरा) । **सम्प्रतिपत्तिः संवित्** । यदस्यामपत्यं जायेत तन्मम श्राद्धाद्यौर्ध्वदेहिकं कुर्यादिति कन्यादानकाले

जामात्रा सह **सम्प्रतिपत्तिरूपेण** विधानेन दुहितरं **पुत्रिकां** कुर्यात् इति (मनु० ९।१२७) इत्यत्र कुल्लूकः । शेषसम्प्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति (भा० उ० ३९।३०) । **शेषस्य तत्कालोचितस्यार्थस्य विचारः सम्प्रतिपत्तिः** । सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थसम्बन्ध इत्यागमिनः प्रतिजानते । (योग० १।२७) । **सम्प्रतिपत्तिर्बोधः ।**

**—मुच् (मुच्लृ मोक्षणे)** । वरुणपाशैः सम्प्रतिमुक्तः (भा० पु० ५।२४।२३) । **सम्प्रतिमुक्तः=बद्धः । समा नार्थः । अन्यत्र केवलः प्रतिः श्रूयते न समा सहचरितः** । यथा श्रीरामायणे प्रयोगः—नाराचमाला रामस्य ललाटे ······प्रत्यमुञ्चत (६।९९।३४) । **अबध्नादित्यर्थः ।**

**—श्रु (श्रु श्रवणे)** । ततः सा सम्प्रतिश्राव्य तव माता यशस्विनी (रा० २।१०७।५) । **सम्प्रतिश्राव्य=प्रतिज्ञां कारयित्वा ।**

**सम्प्रवि (सम्+प्र+वि)**

**—हृ (हृञ् हरणे)** । ततो दिशः संप्रविहृत्य पार्थः । (भा०वन० २६९।१) । **संप्रविहृत्य=विहृत्य । अथवोपसर्गद्वितयेनातिरिक्तेनातिरिक्तोर्थः प्रकर्षो गम्यते ।**

**सम्प्राङ् (सम्+प्र+आङ्)**

**—क्रुश् (क्रुश आह्वाने रोदने च)** । सम्प्राक्रुष्टे रुदितस्त्रीकुमारे (भा० द्रोण० २।२१) । **आङश्चारितार्थ्येपि सम्प्रयोरेकतरस्य वैयर्थ्यं विस्पष्टम् ।**

**सम्प्रोद् (सम्+प्र+उद्)**

**—म्ना (म्ना अभ्यासे)** । हविश्शेषान् संप्लोम्नाय **पिण्डान्कृत्वा** (आप० श्रौ० ८।४।१६।६) । **सम्प्लोम्नाय=सम्प्रमृद्य । रलयोरविशेषः । नलोपश्छान्दसः ।**

**संवि (सम्+वि)**

**—ईक्ष् (ईक्ष दर्शने** । **संवीक्षणं** विचयनम् (अमरः) । **विचयनं मार्गणं गवेषणमन्वेषणं** भवति ।

**—ज्ञा (ज्ञा अवबोधने)** । वर्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ (भा० शां० ६५।३५) । **संविजानामि=सुष्ठु जानामि** । संविज्ञातानि तानि (नि० १।१२।४) । **संविज्ञानपदमिह शास्त्रे रूढिशब्दस्य संज्ञेति दुर्गः । संविज्ञातपदानि तु** प्रधानस्तुतिभाग्देवताग्न्यादीनि (नि० ७।१ दुर्गवृत्तिः) । न पदार्थ**संविज्ञानार्थानि** मन्वादिवाक्यानि व्याकरणाभिधानकाण्डस्मृतिवत् (मनु० २।१० इत्यत्र मेधातिथिः) ।

—**धा (धाञ् धारणपोषणयोः)**। भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् (भा० वन० १०५।२)। **संविधीयताम्=निश्चीयताम्, व्यवसीयताम्**। वृत्तिं नः संविधत्स्व वै (सुश्रुत० २।३६४।१७)। **निश्चिन्वित्याह। कल्पयेति तात्पर्यार्थः**। तस्य पूजार्थमद्यैव संविधत्स्व परन्तप (भा० उ० ८५।६)। **उपचारसामग्रीं योजयेत्याह**। संविधास्यति कार्याणि सर्वथा (रा० ४।२५।५)। **सर्वात्मना कार्येष्ववधास्यतीत्याह**। श्रुत्वा त्वत्तः शुभं वाक्यं संविधास्याम्यहं तथा (भा० उ० १६०।१७)। **संविधास्यामि=आचरिष्यामि**। यथैनं नाभिसन्दध्युर्मित्रोदासीनशत्रवः। तथा सर्वं संविदध्यात्······(मनु० ७।१८०)॥ **संविदध्यात्=युञ्जीत, योगान् उपायान् आतिष्ठेत्**। सन्धिविग्रहयानासनसंश्रयद्वैधीभावानामेकतमेन संविधास्ये (पञ्चत० )। **कार्यं साधयिष्ये**। येषामामं च पक्वं च संविधत्ते (भा० सभा० ५२।४२)। पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात्स्वयम् (भा० सभा०४३।१७)। **न्यदधादित्यर्थः**। संविधाय हरिर्नटम्। नटवेषेण भैमानां प्रेषयामास (हरि० २।६२।५८)। **संविधाय=व्यादिश्य**। संविधाय पुरे रक्षाम् (भा० ३।१२०८६) ।**उक्तोऽर्थः**। सुसंविधाय स्वबलं सदृशं विक्रमस्य (रा० ५।७०।६)। **सुसंविधाय=सुप्रयुज्य**। इतो दुःखतरं किन्नु यदहं मातरं ततः। संविधातुं न शक्नोमि (भा० उ० ७२।१३) **तस्या लोकयात्रां निर्वर्तयितुम्, आवश्यकेनान्नाद्येन योजयितुम्। सम्यक् पोषयितुमिति तात्पर्यार्थः**। असंविहितराष्ट्रस्य देशकालावजानतः (भा० शां० १३०।४)। **असम्यग्रक्षितं राष्ट्रं येन सोऽसंविहितराष्ट्रः, तस्य**। रावणः संविधां चक्रे लङ्काया शास्त्रनिर्मिताम् (भा० वन० ३८४।२)। उद्भासितं मङ्गलसंविधाभिः सम्बन्धिनः सद्म समाससाद (रघु० ७।१६)। **संविधाभिः=रचनाभिः**। उपाचरत् कृत्रिमसंविधाभिः (रघु० १४।१७)। **संविधाभिः=भोग्यपदार्थैः**। यावद् गेहं गत्वा जानामि किं नु खलु संविधा विहिता नवेति (चारु० १)। **संविधा=अन्नपाकः**। कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् (रघु० १।९४)। **संविधाम्=कुशादिशयनसामग्रीम्**। संविधानं च विहितं रथाश्च किल सज्जिताः (भा० द्रोण० ७५। २५)। संविधानमथाज्ञाप्य द्वारकायां महाबलः (हरि० २।१२१।१४१)। **संविधानं पुररक्षणम्**।

—**भज् (भज् सेवायाम्)**। न देवा दण्डमादाय रक्षन्ति पशुपालवत्। यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तम् (भा० उ० ३५।४०)॥ **संविभजन्ति=संयुञ्जन्ति**। शमेऽभिरेमे विरराम पापाद् भेजे दमं संविबभाज साधून् (बुद्ध०२। ३३)। **साधुभ्यो ददावित्याह**। सम्बन्धायोग्यमपि तं कृतज्ञत्ववशंवदः। स संविभेजे स भुजगः कन्यया च धनेन च (राज० १।२४३)॥ **संविभेजे=सिषेवे। कन्यादानेन धनदानेन च। इदं द्वयं ददावित्यर्थः**। अतिरिक्तैः संविभजेद् भोगैर-

न्यानकिञ्चनान् (भा० शां २५९।२३)। **विभज्य संयोजयेदित्याह।** स्निग्धजनसंविभक्त हि दुःखं सह्यवेदन भवति (शा० ४)। संविभक्तम्=**विभज्य साधारणीकृतम्।** भवन्तमाश्रिताः कृष्ण संविभक्ताश्च सर्वशः (हरि० २।१२१।२१)। **संविभक्ताः=समीचीनविशिष्टभक्तिमन्तः। अत्रार्थेऽयं विरलः प्रयोगः।** मितं भुङ्क्ते संविभज्याश्रितेभ्यः। **संविभज्य=स्वभोग्यस्यार्थजातस्यैकदेशं प्रदाय।** सविभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः (भा० पु० १०।७०।१३)। **विभागपूर्वकं संयोज्य। स्रगादीनि विप्रेभ्यो दत्त्वेत्यर्थः।** स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु (गौ० ध० २।१।३९)। **संविभागः=भ्रात्रादीनां साधारणस्य परस्परविभाग.।** तपसः सविभागेन भवन्तमपि योक्ष्यते (भा० उ० ११४।१८)। **संविभागः=अंशः। एकदेशः।** संभाषणमपि संविभागमध्ये कुर्वन्ति (का० शुक०)। **संविभागः=उपहारः. दानम्, प्रतिग्रहः।** वत्सलं संविभक्तारमुपजीवन्ति तं नराः (भा० शा० ७५।३७)। **संविभक्तारम्=दातारम्।** संविभक्ता च दाता च भोगवान् सुखवान्नरः (भा० वन० २५९।२४)। **संविभक्ता=अन्नादेर्विभागकर्ता। सुखवानित्यस्य स्थाने सुखीति पाणिनीया इच्छन्ति।**

—वस् (**वस आच्छादने**)। नाश्रेयान्वै प्रावारान् संविवस्ते (भा० उ० २६।८)। **संविवस्ते=वस्ते, संवी अनर्थको।**

### संव्यव (सम्+वि+अव)

—**हृ (हृञ् हरणे)।** तेन जातं ततो जातमितीयं रचना गिराम्। शास्त्रसंव्यवहारार्थं न राम परमार्थतः (यो० वा० ४।४०।१७)॥ **शास्त्रसंव्यवहारः शास्त्रव्यवहारः।** संव्यवहारात् शौचं मैत्रतां दृढभक्तिं च परीक्षेत (कौ० अ० १।६)। **सव्यवहारः=इतरैः सह व्यवहारः, परेषु वृत्तिः।** याप्यो गर्ह्यः सर्वैरसंव्यवहार्य इति (गौ० ध० २।४।२३सूत्रे मिताक्षरायाम्)। **मिथो व्यवहारे वर्जनीय इत्यर्थः।**

### संव्या (सम्+वि+आङ्)

—**हृ (हृञ् हरणे)।** याचि-व्याहृ-संव्याहृ-व्रज-वद-वसां प्रतिषिद्धानाम् इति ग्रह्यादिषु (३।१।१३४) गणसूत्रम्। **असंव्याहारी परैर्न संव्याहरति संभाषते इत्येवंशीलः।**

## अनु

—**अञ्च् (अञ्चु गतिपूजनयोः)।** अग्नये क्षामवतेऽष्टाकपालं येषां पूर्वापरा अन्वञ्चः प्रमीयेरन् गृहदाहो वा (आप० श्रौ० ६।१।३६१)। **अन्वञ्चः=**

सन्तताः । त्वामन्वञ्चो वय स्मसि (ऐ० ब्रा०) । **त्वदनुगामिनो वयमित्याह ।**

—**अर्च्** (**अर्च पूजायाम्**) । अनु यदी मरुतो मन्दसानमार्चन्निन्द्रम् (ऋ० ५।२६।२) । **अनुशब्दोऽर्चने किं वैशिष्ट्यमाधत्त इति न ज्ञायते । अर्चायामनुक्रमं ब्रूयादुत ?**

—**अर्ज्** (**अर्ज अर्जने, अर्ज प्रतियत्ने**) । इदं वै यूपमुच्छ्रित्याध्वर्युरा परिव्ययणान्नान्वर्जति (श० ब्रा० ३।७।२।४) । **नान्वर्जति=न त्यजति ।**

—**अव्** (**अव रक्षणाद्यूनविंशतावर्थेषु**) । अनु त्रितस्य युध्यतः शुष्ममावन्नुत क्रतुम् (ऋ० ८।७।२४) । **अन्वावन्=आहर्षयन्, समुत्साहमैधयन् ।**

—**अस्** (**अस भुवि**) । यदि पत्नी नानुष्यात् (आप० श्रौ० ६।३।१२।५) । **नान्वासीना स्यात्, अन्तिकस्था न स्यात् ।** यदि यजमानो नानुष्यात् (भा० श्रौ० ६।११।३) । **उक्तोऽर्थः ।** अपि शर्वर्या अनुस्मसीति (ऐ० ब्रा० ४।५) । **अनुस्मसि=सज्जाः स्मः । परिदद्मः, उपहराम इति वा ।** अनुष्याम रोदसी देवपुत्रे (ऋ० १।१८५।४) । **अनुष्याम=अनुभवेम, आप्नुयाम ।**

—**अस्** (**असु क्षेपे**) । (मेखला) मुञ्जवल्शेनान्वस्ता भवति (श० ब्रा० ३।२।१।१३) । **अन्वस्ता=प्रोता ।**

—**आस्** (**आस उपवेशने**) । अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत (भा० वन० ५।४) । **अन्वास्यमानाः=उपास्यमानाः, उपस्थीयमानाः । समीपे वर्तमानैर्मुनिभिः परिगताः ।** अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् (रघु० १।५६) । **समीपे वर्तमानयाऽरुन्धत्या सेवितम् ।** सन्ध्यामन्वास्य पश्चिमाम् (रा०) । **सायंसन्ध्यासम्बन्धि देवतादिध्यानं कृत्वेत्यर्थः ।** अन्वास्यमानश्चिरजीवदोषैः (प्रतिमा० ३।१५) । **अन्वास्यमानः सेव्यमानः, युक्त इत्यर्थः ।**

—**आप्** (**आप्लृ व्याप्तौ**) । तद्विस्रस्तं नान्वाप्नोत्पूर्वं सवनम् (ऐ० ब्रा० ३।२७) । **नान्वाप्नोत् अनुगन्तुं नाशक्नोत् ।** तद्धीतरसं नान्वाप्नोत् पूर्वे सवने (=प्रातर्मध्यन्दिन) सवने । **इति च तत्रैव ।**

—**इ** (**इण् गतौ**) । गन्धर्वा एनं (ब्रह्मचारिणम्) अन्वायन् (अथर्व० ११।७।२) । **अनुगच्छन्तीत्यर्थः ।** विश्वे देवा अनु तत्ते यजुर्गुः (ऋ० १०।१२।३) । **अनुययुः=अनुजग्मुः । अन्वेष्टुमनुसस्रुरित्यर्थः ।** मा वालिपथमन्वगाः (रा० ४।३०।८१) । **मान्वगाः=माऽनुगाः=मानुसार्षीः, मा तत्र पदं निधा इत्यर्थः ।** देवा देवानामनु हि व्रताऽगुः (ऋ० ३।७।७) । **अन्वगुः=अन्वकार्षुः ।** मा मन्युवशमन्वगाः (भा० वन० १०।२८) । **मान्वगाः=माऽनुगाः=मा गमः ।** मैतं पन्थामनुगा भीम एषः (अथर्व० ८।१।१०) । अस्तं वा अस्तं यन्तं सर्वे **देवा अनुयन्ति** (श० ब्रा० ११।६।२।४) । **उक्तोऽर्थः ।** तं व्रजन्तं......**अन्वीयुर-**

नुसारिणः (रा० १।३३।१८) मम देवासो अनुकेतमायन् (ऋ० ४।२५।२)। **अन्वायन् = अन्वरुन्धन्**। यश्चित्तमन्वेति परस्य राजन् (भा० सभा० ६३।४)। **उक्तोर्थः**। तन्मा पितुर्गोतमादन्वियाय (ऋ० ४।४।११) **अनुक्रमेण प्राप। यद् दाय इत्यध्यगच्छम् इत्यर्थः**। धातुरादेशमन्वेति (महाभा०)। **धातोरादेशेनान्वयः सम्बन्धो भवति**। त्वमेकाकिनी भीरु निरन्वयजने वने (भट्टि०. ५।६६)। **अन्वयः = अनुगाः**। कतरकुलान्वयो भवतालङ्क्रियते (अवि० ४)। **अन्वयः = सम्बन्धः**। तपसाऽन्वितो वेषस्त्वं राममहिषी ध्रुवम् (रा० ५।३३।१३)। **अन्वितः युक्तः। योग्यः, सदृशः**। त्वन्मार्गमन्विते तस्मिन्राघवे (रा० ३।४०।३१)। **अन्विते = अनुगते**। तथापि तस्या लावण्यं रेखया किंचिदन्वितम् (शा०६।१४)। **किञ्चित् = मात्रया। अन्वितं संगतम्। रेखया = चित्रेण**। सम्पदिस्तु न गृह्यतेऽनन्वितार्थत्वात् (पा० ३।१।४० इत्यत्र वृत्तौ)। **अनन्वितार्थत्वात् = असामर्थ्यात्**। अन्वित्या दिवा दिवं जिन्व (वा० सं० १५।६)। **अन्वेति देहमनुगच्छतीत्यन्वितिरन्नम्**।

—**इष् (इष गतौ)**। अन्विष्यामि भर्तारमहं प्रेतवशं गतम् (भा० आदि० १२५।२४)। **अनुगमिष्यामि। प्रमीतं पतिमनुप्रमेष्य इत्यर्थः**। भवन्तमहमन्विष्ये मातरौ च यतव्रतः (भा० आश्रम० ३६।२४)। **अनुसरिष्यामीति प्रथमकल्पितोऽर्थः। सेविष्य इति तात्पर्यार्थः**। न रत्नमन्विष्यति मृग्यते हि तत् (कु० ५।४५)। **अन्विष्यति = मार्गति, मार्गयति, विचिनोति, गवेषयति**। कालमन्वेषयन्तौ (पञ्चत०)। **सदृशमवसरं प्रतीक्षमाणौ**। अन्विष्यन्तस्ततः सीतां सर्वे ते······(रा० ४।४७।१)। **विचिन्वन्त इत्यर्थः**। याम् (वृत्तिम्) अन्वेषयतां नृणां यान्ति सर्वे समाप्तिं गुणाः (भर्तृ० ३।९८)। **विचिन्वतामित्यर्थः**। न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः (भा० वि० २८।९)। **विचित्योपलब्धुमित्यर्थः**। दुर्बलाश्चैव सततं नान्वेष्टव्या बलीयसा (भा० आश्रम० ६।१७)। **नोच्छेत्तव्या इति** नील०। सारङ्गान्वेषण वने (भा० शां० १७८।७)। **अन्वेषणमनुगमनम्, तच्चरितानुकरणम्। सारङ्गो भ्रमरः**।

—**इष् (इष इच्छायाम्)**। यामन्वैच्छद् हविषा विश्वकर्मा (अथर्व० १२।१।६०)। **अन्वैच्छत् = विचेतुमैच्छत् = व्यचिनोत्**। हन्त तमात्मानमन्विच्छामः (छां० उ० ८।७।२)। **अन्विच्छामः = अनुसन्दध्मः**। आ मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् (मनु० ४।१३७)। **श्रियमन्विच्छेत् = श्रियः प्राप्तय उद्युञ्जीत**। तदेवासनमन्विच्छेद् यत्र नाभिपतेत् परः (भा० वि० ४।१३)। **अन्विच्छेत् = इच्छेत्**। अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यः (उत्तर० २।२३)। तदा प्रभृति वै भ्राता भ्रातुरन्वेषणं नृप। प्रयातो नश्यति क्षिप्रं तन्न कार्यं विपश्चिता (हरि० १।३।२६)।

—ई (इङ् गतौ)।…विद्याविद्भिश्च दारकैः। अन्वीतमेव ददृशुः (राज० ३। १११)। **अन्वीतं परिवृतम्।**

—ईक्ष् (ईक्ष दर्शने)। अन्वैक्षन्त मनसा चक्षसा च (अथर्व० २।३४।३)। **अन्वैक्षन्त=अवादधत। अवैक्षन्त।** अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम्। राजान मातरं चैव ददर्शानुगतौ पथि (रा० २।४०।३६)॥ **अन्वीक्षमाणः पृष्ठतोऽवलोकयमानः।** श्रवणादनु पश्चाद् ईक्षाऽन्वीक्षा (न्याये)। अन्वीक्षणमनु श्रेयो ह्यस्य विचिन्तयन् (रा० ७।३।४)। **अन्वीक्षणम्=शुभाशुभवीक्षणम्।**

—ऋ (ऋ गतौ)। अन्वारत् कुम्भकर्णं मरुत्सुतः (भट्टि० १५।५७)। **अन्वारत्=अन्वगच्छत्।**

—एष् (एषृ गतौ) व्यक्तमन्वेषते भूयो यद् वृत्तं तस्य धीमतः (रा० १।३।१)। **अन्वेषते=अन्विच्छति। कतकधृतः पाठः।** धर्मेणान्वेषते गतिम् (रा० १।३।२)। **काव्यस्यान्वेषत इति क्वाचित्कः पाठः।**

—कथ् (कथ वाक्यप्रबन्धे)। अन्वादिष्टोन्वाचितः कथितानुकथितो वा (पा० ६।२।१९० सूत्रवृत्तौ)। **अनुकथितः=पश्चात्कथितः। यस्य प्रामुख्येन कथनं कीर्तनं न। आदेशः कथनमन्वादेशोऽनुकथनम्।**

—कम् (कमु कान्तौ)। स देवान्नान्वकामयतैतुम् (ऐ० ब्रा० २।७)। **अन्वकामयत=अकामयत। नार्थोऽनुना।**

—कम्प् (कपि चलने)। सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे (भा० आश्व० २।१०)। **मां दयस इत्यर्थः।** सोऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् (भा० शां० २९।५१)। **उक्तोऽर्थः। अनुकम्पेः प्रयोगे विभक्तिद्वयं दृश्यते द्वितीया च सप्तमी च।** कथं ब्राह्मणी मामनुकम्पते (मृच्छ० ३)। किमुज्जिहानजीवितां वराकीं नानुकम्पसे (मालती १०)। व्यसने नानुकम्पन्ते सर्वभूतानि भूमिपम् (रा० ३।३७।१५)। शफरीं प्रथमा वृष्टिरिवान्वकम्पयत् (कु० ४।३९)। **अन्वकम्पयत्=अन्वकम्पत। स्वार्थे णिच्।** सर्वभूतानुकम्पकः (हरि० १।२४।१३)। **सर्वभूतेषु सानुक्रोश इत्याह।** वक्ता हितानामनुरक्त आर्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः (भा० उ० ३७।२५)। **अनुकम्प्यः=अनुग्राह्यः।**

—काङ्क्ष् (काक्षि काङ्क्षायाम्)। अतः प्रियं चेदनुकाङ्क्षसे त्वं सर्वेषु कार्येषु हिताहितेषु (भा० सभा० ६४।१५)। **अनुर्विशेषकृन्न।**

—काश् (काशृ दीप्तौ)। प्रकाशेनान्तरमनुकाशेन बाह्यं (प्रीणामि)

(मै० सं० ३।१५।२)। अमुनैवानूकाशेन यदद इन्द्रः सारथिरिव भूत्वोदजयत् (ऐ० ब्रा० २।२४)। **अनूकाशेन=दृष्टान्तेन।**

—कुष् (**कुष निष्कर्षे**)। तूलेनानुकुष्णाति अनुतूलयति। (पा० ३।१।२५ वृत्तौ) **अनुकुष्णाति=अनुकर्षति।**

—कूज् (**कूज अव्यक्ते शब्दे**)। पश्य लक्ष्मण संवादं मम मन्मथवर्धनम्। पुष्पिताग्रेषु वृक्षेषु द्विजानामनुकूजताम् (रा० ३।७९।२४)॥ **अनुकूजताम्=परस्परं कूजताम्।**

—कृ (**डुकृञ् करणे**)। शैलाधिपस्यानुचकार लक्ष्मीम् (भट्टि० २।८)। **अनुप्राप। अनुकृतवानित्यर्थः।** भीमस्यानुकरिष्यामि बाहुः शस्त्रं भविष्यति (मृच्छ० ६।१७)। **भीमवद् वर्तिष्ये।** सर्वाभिरन्याभिः कलाभिरनुचकार तं वैशम्पायनः (का०)। यां कृतां (सभां) नानुकुर्वन्ति मानवा (भा० सभा० १।११)। **नानुकुर्वन्ति तादृशीं निर्मातुं न पारयन्ति।** बन्धं ततोऽनुकुर्वीत (सुश्रुते)। **बन्धमासजेत्।** तदनुकृतवती सा यत्र वाचो निवृत्ताः (अमरु० ५०)। **अनुकृतवती=पश्चात् (कालान्तरे) कृतवती।** अनुकारिणि पूर्वेषां युक्तरूपमिदं तव (शा० २।१७)। **अनुकारिणि तत्सदृशव्यवहारिणि।** प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विलोभयामि (शा० ६)। **उक्तोऽर्थः।** सुलभानुकारः खलु जगति वेधसो निर्माणसंनिवेशः (मालती० ९)। **अनुकारः सादृश्यम्।** ननु कलभेन यूथपतेरनुकृतम् (माल० ५)। न वयं प्रभवामस्त्वामनुकर्तुं महेश्वरि। **अनुकर्तुम्=निष्कर्तुम्, प्रत्युपकर्तुम्।** अघशंसदुःशंसाभ्यां करेणानुकरेण च (अथर्व० १२।२।२)। **करः सहायः। अनुकरः सहायस्य सहायः।**

—कृत् (**कृती छेदने**)। क्षत्रियाश्च भृगून् सर्वान् वधिष्यन्ति नराधिप। आगर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः (भा० अनु ५६।३)॥ **अनुकृन्तन्तः=शकलानि कुर्वन्तः।**

—कृष् (**कृष विलेखने**)। तदास्य शबलां राजा विश्वामित्रोऽन्वकर्षत (रा० १।५४।१)। **स्वस्य पश्चादकर्षत् इत्युक्तं भवति।** अन्यथा चकारेण तृतीयानुकृष्येत (पा० २।३।७२ सूत्रवृत्तौ)। **तृतीयाऽग्रिमसूत्रे नीयेतेत्यर्थः।** गृहस्थधर्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत् (गौ० ध० १।९।१)। **आत्मानमनुप्रापयेदित्यर्थः।** दन्तच्छदं प्रियतमेन निपीतसारं दन्ताग्रभिन्नमनुकृष्य निरीक्षते च (ऋतु० ४।१३)। **अनुकृष्य=वितत्य। अपकृष्येति पाठान्तरम्। स एवार्थः।** नायमनुकर्षणार्थश्चकारः (२।२।४ सूत्रे भाष्यम्)। **अनुकर्षणम्=अग्रे नयनम्। अनुकर्षणम् मन्त्रैर्देवतानामावाहनमपि भवति।** चक्रं युगं च तूणीरं ह्यनुकर्षं च सायकैः (भा० द्रो० ३८।६)। **अनुकृष्यते स्वसम्बद्धेन**

**चक्रेणेत्यनुकर्षो रथतलम्** । **युद्धविमर्दे यस्य कस्यचिद् रथावयवस्य नष्टस्य प्रतिसमाधानार्थं यद् रथस्याधो दारु बध्यते तत्** । **अनुकर्षो रथाधःस्थदारुणीति मेदिनीति नील०** (भा० उ० १५५।३) । अनुकर्षं च निष्कर्षं व्याधिपावकमूर्छनम् (भा० सभा० १३।१३) । **दारिद्र्याद्राजकीयद्रव्यस्यातीतवर्षस्य धारणमनुकर्ष इति नील०** ।

—**कृ** (कॄ विक्षेपे) । यास्ते धाना अनुकिरामि (अथर्व० १८।३।६९) । **अनुक्रमेण किरामि विक्षिपामि** । वणिग्भिश्चान्वकीर्यन्त नगराणि (भा० आदि० १०६।४) । **व्याप्तान्यभूवन्नित्यर्थः** । मुस्ताप्ररोहकवलावयवानुकीर्णं (मार्गम्) (रघु ६।५६) । **अनुकीर्णम्=व्याप्तम्** । अनुकीर्णानि रक्षोभिः (भा० वन० ६३।१३) । **व्याप्तानि** । अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत (भा० वन० २६।१) । **उक्तोऽर्थः** । नानापुष्पफलैर्वृक्षैरनुकीर्णं सहस्रशः (रा० ३।३५।११) । **पूर्वोक्त एवार्थः** ।

—**कृत्** (कॄत संशब्दने) । वाचापि पुरुषानन्यान्सुव्रता नान्वकीर्तयत् (भा० आदि० ११०।१६) । **नान्वकीर्तयत्=नोदाहरत्** । **तेषां कथां नाकरोत्** । दिशामभिजयं ब्रह्मन् विस्तरेणानुकीर्तय (भा० सभा० २६।१) । **अनुकीर्तय=उपवर्णय** । असदाचरिते मार्गे कथं स्यादनुकीर्तनम् (भा० वन० १३३।१०) । **अनुकीर्तनम्=प्रख्यापनम्=घोषणम्** । जानन् द्विजोऽमुना दग्ध इति दोषानुकीर्तनात् (कथा० ४।१२१) । **उक्तोऽर्थः** । अलोभाच्छिद्यते सद्यो वेपमानोऽनुकीर्त्यते (हरि० ३।१६।४८) । **अनुकीर्त्यते=वाच्यो निन्द्यो भवति** ।

—**क्लृप्** (**कृपू सामर्थ्ये**) । आहुतीरेवास्य कल्पयति ता अस्य कल्पमाना राष्ट्रमनुकल्पते (तै० सं० ३।४।८।३) । **अनुसरतीत्याह** । देवविशं खलु वै कल्पमानं मनुष्यविशमनुकल्पते (तै० सं० ६।१।५।३) । तथा सतां शाट्यायनिनः षडहविभक्तीरनुकल्पयन्ति (लाट्या० श्रौ००४।५) । **कल्पयन्ति विदधतीत्यर्थः** । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते (मनु ११।३०)। **अनुकल्पेन प्रतिनिधिना** । अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः (मी० ६।३।३५ सूत्रे शाबर०) ।

—**क्रन्द्** (**क्रदि आह्वाने रोदने च**) । यं क्षोणीरनु चक्रदे (ऋ० ८।३।१०)। **प्रतिशब्दमकरोत्** । वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यमी कुक्कुटाः (मालती० ९।७) । **क्रन्दनस्य पश्चात्क्रन्दन्तीत्यर्थः** ।

—**क्रम्** (क्रमु पादविक्षेपे) । अनु प्रत्नास आयवः पदं नवीयो अक्रमुः (ऋ० २५।२५) । **अन्वक्रमुः=अनुजग्मुः** । श्रद्धा रतिर्भक्तिरनुक्रमिष्यति (भा० पु० ३।२५।२५) । **अनुक्रमिष्यति=अनुवर्तिष्यते** । **यच्चानुक्रान्तं यच्चानुक्रंस्यते** (पा० १।१।७२ सूत्रे भाष्यम्) । **यद् गणपाठमनुसृत्य क्रमेण चिन्तितं यच्चैवं**

चिन्तयिष्यत इत्याह। स संहितां भागवतीं कृत्वाऽनुक्रम्य च (भा० पु० १।७।८)। अनुक्रम्य=अनुक्रमण्या संयोज्य। अनुक्रम्य=पुनरावर्त्येति तु श्रीधरः। तथा चानुक्रान्तम् (ऋ० १।१०५ इत्यत्र भाष्ये सायणः)। अनुक्रमण्यां पठितमित्याह। नाराचाभिहतः शीघ्रमात्मत्राणपरो मृगः। गिरिपादपसबाधां सोन्वक्रामद् महाटवीम् (मार्क० २१।७)॥ अन्वक्रामत्=प्रातिष्ठत। अनुक्रामन्तश्च विकारान् व्याख्यास्यामः (सुश्रुते)। येन क्रमेण विकारा उद्दिष्टास्तं क्रममनतिहायेत्यर्थः। महर्षिभिरनुक्रान्तं धर्मपन्थानमास्थितः (रा० ५।४७।६)। अनुक्रान्तमनुसृतमिति तीर्थः। तीर्थयात्रामनुक्रामन् (भा०)। क्रमेण तानि तानि तीर्थानि यान् इत्यर्थः। व्यवसायमनुक्रान्ता कान्ते त्वमतिशोभनम् (रा०)। अनुक्रान्ता=प्राप्ता। प्रचक्रमे वक्तुमनुक्रमज्ञा (रघु० ६।७०)। अनुक्रमज्ञा=वाक्यपौर्वापर्याभिज्ञा। आश्रमानुक्रमः पूर्वैः स्मर्यते न व्यतिक्रमः (कि० ११।७६)। आश्रमाणां पौर्वापर्येणाश्रयणमनुक्रमः। मानेन रक्ष्यते धान्यमश्वान्रक्षत्यनुक्रमः (भा० उ० ३४।४०)। अनुक्रमो व्यायामशिक्षादिः (नील०)। न तर्हीदानीमवगल्भाद्यनुक्रमणं कर्तव्यम् (पा० ३।१।११ सू० भा०)। अनुक्रमणम् =क्रमिकः पाठसंनिवेशः। परिगणनमिति तात्पर्यार्थः। अनुक्रमणी ऋगादिप्रतिपाद्यसूची। उभे सन्ध्ये जपन्किञ्चित् सद्यो मुच्येत किल्बिषात्। अनुक्रमण्या यावत्स्यादह्ना राज्या च सञ्चितम् (भा० आदि० १।१।२६३)॥

—क्रीड् (क्रीड् विहारे)। अनुक्रीडन्ते कुमाराः सम्बाधेस्मिन्गृहाङ्गने। अनुक्रमेण क्रीडन्तीत्यर्थः। साध्वनुक्रीडमानानि पश्य वृन्दानि पक्षिणाम् (भट्टि० ८।१०)। अनुक्रीडमानानि विहरन्ति।

—क्रुश् (क्रुश आह्वाने रोदने च)। उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु (ऋ० ४।३८।५)। अनुक्रोशन्ति=आक्रन्दन्ति। किमनुक्रोश्य वैफल्यमुत्पादयसि मेऽनघ (भा० आश्व० ५।२३)। तावदिमान् बालवृक्षानुदकप्रदानेन अनुक्रोशयिष्यामि (प्रतिमा० ५)। दयिष्ये। अयि निरनुक्रोशस्य पुत्रो मा चापलम् (कुन्द०)। निरनुक्रोशो निर्दयः।

—क्षर् (क्षर सञ्चलने)। (सिन्धवः) अनुक्षरन्ति काकुदम् (ऋ० ८।५८।१२)। स्यन्दन्ते इत्यर्थः। मधोर्धारामनुक्षर (ऋ० ९।१७।८)। अनुक्षर=सततं स्रावयेत्यर्थः।

—क्षि (क्षि निवासगत्योः, क्षि क्षये)। यत्ते अन्नं भुवस्पते आक्षियति पृथिवीमनु (अथर्व १०।५।४५)। विद्यत इत्यर्थः। आपृच्छ्यं क्रतुमाक्षेति पुष्यति (ऋ० १।६४।१३)। आक्षेति आप्नोति। अनुक्षीयमाणविज्ञान० (भा० पु० ५।१४।२१)। शनैः शनैः क्षयं गच्छदित्यर्थः।

—ख्या (ख्या प्रकथने)। अनु पूर्वाणि चख्यथु र्युगानि (ऋ० ७।७०।४)।

**दूराद् ददृशुरित्यर्थः** । अन्वग्निरुषसामग्रमख्यत् (वा० सं० ११।१७) । यदुत्तमामदितिं यजति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै (ऐ० ब्रा० १।८) । **अनुख्यातिः=सम्यगुपलम्भः** (षड्गुरु०) । **अनुक्रमेण प्रकाशनम्** (भट्ट०) ।

**—गम्** (**गम्लृ गतौ**) । अनु स्वधामृभवो जग्मुरेताम् (ऋ० ४।३३।६) । **अनुजग्मुः=पश्चात् प्रापुरित्यर्थः** । परायतीं मातरमन्वचष्ट न नानुगान्यनु नू गमानि (ऋ० ४।१८।३) । **अनुगमानि=अनुगच्छानि** । माधुर्यद्रवशैत्यादि-जलधर्मास्तरङ्गके । अनुगम्याथ तन्निष्ठे फेने ह्यनुगता यथा ॥ साक्षिस्थाः सच्चिदानन्दाः सम्बद्धा व्यावहारिके । तद्द्वारेणानुगच्छन्ति तथैव प्रातिभासिके (बालबो०) ॥ **अनुगच्छन्ति=आविशन्ति** । आस्फालितं यत्प्रमदाकराग्रै र्मृद-ङ्गधीरध्वनिमन्वगच्छत् (अम्भः) (रघु० १६।१३) । **ध्वनिमन्वगच्छत्=ध्वनिना सदृशमभूत्** । पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते (रा० ३।३१।३६) । **अनुगम्यते=अनुस्त्रियते, अनुपद्यते** । काननं वापि शैलं वा यं रामोऽनुगमिष्यति (रा०) । **अनुक्रमेण प्राप्स्यति** । कृत्स्नां पृथिवीमनुगच्छत (रा०) । **सीता-न्वेषणार्थाय कृत्स्नां भुवं पर्यटत** । पशुं न नष्टं पदैरनुग्मन् (ऋ० १०।४६।२)। **अन्वविन्दन्, पदैश्चिह्नैर्मार्गित्वाऽऽसादयन्नित्यर्थः** । (पथिभिः) एतैरनुगच्छेम यज्ञम् (अथर्व० ११।१।३६) । **उक्तोऽर्थः** । नद्रासनं ततश्चित्रमृषिरन्वगमन्न-वम् (भा० अनु० १०।३) **भद्रासनं प्रति प्रासरद् इत्यर्थः** । अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते (पञ्चत० १।७३) । **यद्वशंवदा भृत्या न भवन्तीत्यर्थः** । यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वाति (श० ब्रा० १०।३।३।८) । अथात आहव-नीयोऽनुगच्छेत् (श० ब्रा० ११।५।३।८) । **उक्तोऽर्थः** । दुःखान्यसहती देवी मामेवानुगमिष्यति (रा० २।१२।८६) । **अनुमरिष्यतीत्यर्थः** । लक्ष्ये लक्षण-मनुगमयति । **व्याप्तिं दर्शयतीत्यर्थः** । शिवमिवानुगतं गजचर्मणा (कि० ५।४) । **अनुगतं पश्चाल्लम्बिना परिधानेनाच्छादितम्** । दिग्विजयप्रसङ्गेनानुगतो भूमिमिमाम् (का०) । **अनुगतः क्रमेणागतः** । परितुष्टोऽस्मि यत्पितरमनुगतो वत्सः (माल० ५) । **पितरमनुहरतीत्यर्थः** । सूत्रेणानुगतं भवति (वे० सू० शां० भा०) । **सूत्रानुकूलं भवतीत्यर्थः** । प्रस्तावानुगतं पृष्टः (पञ्चत० ५) । **प्रस्तावसदृशम् इत्यर्थः** । कालेनानुगतो ह्यसि (रा० ७।६८।६) । **अनुगतः=आसादितः** । वर्ष-वरकलमूकानुगतेन परिजनेन (का०) । **अनुगतेन=व्याप्तेन** । मद्यानुगतभोजनम् । (मनु० ११।७०) । **अनुगतं मिश्रितं सहानीतमिति वा** । तैलंक्षीरानुगतम् (सुश्रुत० २।४३।११) । **क्षीरेण सहितमित्यर्थः** । **अनेकरोगानुगतो** बहुरोगपुरोगमः (सुश्रुत० २।४४५।३) । **अनेकरोगसम्बद्धः** । अनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय (रघु० १२।१०२) । **अनुगतम्=अनुद्रुतम्** । दारिद्र्येणाभिभूतेन स्वत्स्नेहानु-

गतेन च (मृच्छ० ४।५) । **अनुगतेन=व्याप्तेन** । अग्नावनुगते (कौ० सू० ७२) । **शान्त इत्यर्थः** । गार्हपत्येऽनुगते (का० श्रौ० १६।१७।३) । **उक्तोऽर्थः** । तत्कार्यमनुगम्यान्तर्यथावदुपलभ्य च (रा० ३।३५।२) । **अनुगम्य=उद्दिश्य** । अथैकेऽनुगमय्यान्यं मन्थन्ति (श० ब्रा० १२।४।३।६) । न चापि कादम्बरीं लक्ष्मीरनुगन्तुमलम् (का०) । **सादृश्यमुपैतुं क्षमेत्याह** । रूढिरेषा यथाकथंचिदनुगन्तव्या (पा० ३।२।५६ सूत्रवृ०) । **अनुगन्तव्या=बोद्धव्या** । तद्युवाभ्यां क्षत्रधर्मोऽनुगन्तव्यः (हितोप०) । **अनुसर्तव्यः । आचरितव्यः** । तुजादिरपि स्वरूपतोऽनुगन्तव्यो न तु क्व चित्पठ्यते (पा० ६।१।७ सूत्रे क्वचिद् वृत्तौ पाठः)। **अनुगन्तव्यो ज्ञेयः** । श्रुत्यनुगमाच्च (शा० भा०) । **अनुगमात्=आनुकूल्यात्, संवादात्** । रसाद्यनुगमः (सा० द०) । **रसाद्यनुभवः** । आगमानुगमं कृत्वा (भा० शां० ८५।२५) । **पित्रागमनस्य पर्यनुयोगं कृत्वा यावन्तं कालं पिता नायाति तावन्तं पुत्रं बध्नीयाद् इति नील०)** । **अनुगमनं मरणेन मृतस्यानुगमनम्** । **अत्रार्थे स्मृतिषु बहुलः प्रयोगः** ।

**—गर्ज् (गर्ज शब्दे)** । सोऽनुगर्जन् धनुष्पाणिः (भा० ७।१७१४) । **अनुगर्जन्=आक्रोशन्** । अनुगर्जितसन्दिग्धाः······मुरजस्वनाः (कु० ६।४०) । **अनुगर्जितम्=प्रतिशब्दः** ।

**—गुप् (गुपू रक्षणे)** अवोचन्मां धृतराष्ट्रोऽनुगुप्तम् (भा० वन० ५।१२) । **अनुगुप्तं रहः, निःशलाकम्** । भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः (भा० वन० ९२।५) । **अनुः सर्वतो भावे । अनुगुप्तः=परिरक्षितः** ।

**—गॄ (गॄ शब्दे)** । पीयति त्वो अनु त्वो गृणाति (ऋ० १।१४७।२, वा० सं० १२।४२) । **अनु गृणाति=स्तौति । स्तुतिपूर्वमनुमन्यत इति वा । प्रोत्साहनेर्थे** होत्रेऽनुगृणातीति (पा० १।४।४१ सूत्रे वृत्तावुदाहरणम्) । **शंसितुः प्रोत्साहनमनुगरः प्रतिगरश्चोच्यत इति भट्टि० ८।७७ इत्यत्र मल्लिः । इत्थमेव काशिका** ।

**—गै (गै शब्दे)** । क्रीडन्तमनुगायन्तम् (भा० पु० ६।१।६०) । **अनुगायन्तम्=गायन्तम्** । अनुगायति काचिदुदञ्चितपञ्चमरागम् (गीत० १।३९) । **अनु गायति=पश्चाद् गायति** । (उग्रसेनः) अनुगीयमानो गन्धर्वैः (भा० आदि० २११।८) । **अनुशब्दः सामीप्ये वर्तते । उपगीयमान इति पाठान्तरम् । गन्धर्वैः साक्षादुपगीयमान इत्यर्थः** । श्रूयतां पृथिवीपाल यथैषोऽर्थोऽनुगीयते (भा० शां० ११४।२) । **अनुगीयते प्रकीर्त्यते** । अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः (कि० ३।६०) । **अनुजगुः=अनुरसितं चक्रुः** । अत्रायं क्षेमदर्शीय इतिहासोऽनुगीयते (भा० शां० १०७।२) । **अनुगीयते=वर्ण्यते=वर्त्यते** ।

—ग्रह् (ग्रह उपादाने)। इयं वै प्रजा पराभवन्तीरनुगृह्णाति (तै० सं० १।७।२।३)। **अनुगृह्णाति=रक्षति। तत्र शरण्या भवति।** सम्राडृतावोऽनु मा गृभाय (ऋ० २।२८।६)। **अनुगृभाय=अनुगृहाण। सुकृतिनं भाग्यवन्तं मां कुर्वित्याह।** अन्यो अन्यमनु गृभ्णात्येनो. (ऋ० ७।१०।३।४)। **एकोऽन्यस्यानुकूलं वदतीत्यर्थः।** दण्डेनोपनत शत्रुमनुगृह्णाति यो नरः। स मृत्युमुपगृह्णीयात् (भा० आदि० १४०।८३)। **अनुगृह्णाति शत्रुम्=शत्रुपक्षपाती भवति, शत्रुं परिपाति।** अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् (भा० सभा० ५।७१)। **अनुगृह्णासि=उपकरोषि, साह्यमाचरसि, सहायो भवसि।** आसनम् अनुगृह्णातु भवती (शा० ३)। **अध्यसनेनासनमनुगृह्यताम्, परम्परयाऽहमेवानुग्राह्य इत्युक्तं भवति।** शिलातलैकदेशमनुगृह्णातु वयस्यः (शा० ३)। अय विष्टरोऽनुगृह्यताम् (वि०५)। **उक्तोऽर्थः।** त्रिभिस्तीक्ष्णैर्महावेगैरन्वगृह्णाच्छिरः शरैः (भा० भीष्म० १२०।४५)। **अवालम्बत, अवास्तभ्नात्, उपास्तभ्नात्।** क्षिप्रं गोपान् समासाद्य गृह्णन्तु विपुलं धनम्। वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम् (भा०वि० ३०।२३-२४)। **गोपान् गोग्रहीतॄननुसृत्य गृह्णीमः।** आकृतिमनुगृह्णन्ति गुणाः (विद्ध० २)। **आकृत्यनुरूपा भवन्तीत्याह।** अनुगृहीतोहमनया मघवतः संभावनया (शा० ७)। **उपकृतोस्मीत्याह।** अग्निर्नित्यानुगृहीतः स्यात् (आश्व० गृ० १।९)। **अनुगृहीतः=परिरक्षितः=समित्समिद्धः।** क्षात्रधर्मश्चानुगृहीतो भवति (उत्तर० ५)। **अनुगृहीतोऽनुसृतः। आचरितः।** ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः (भा० पु० ५।२३।३)। **अनुगृहीताः समर्थिताः।** यदद्राक्षं तदेवाहं स्पृशामीत्यादि प्रत्यभिज्ञानुगृहीतेन……प्रत्यनुमानेन (का० प्र० १।३५ इत्यत्र टीकाकृद्वचनम्)। **उक्तोऽर्थः।** न वयमनुग्राह्याः प्रायो देवतानाम् (का० )। **अनुग्रहभाजनं नेत्याह।** ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा (शाङ्० श्रौ० १५।२७)। **अनुगृह्णन्तः=रक्षन्तः।** आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येव चाक्षुषं प्राणमनुगृह्णानः (प्रश्नोप० ३।८)। **अनुगृह्णानः=उपकुर्वाणः।** तिष्ठन् सव्येन पाणिनाऽनुगृह्याचार्य्यमाचामयेत् (आप० ध० ३।५।६)। **अनुगृह्य (करकादि) अधस्ताद् गृहीत्वा, बुध्ने समादायेत्यर्थः।** भुक्त एव तु कौन्तेयो नास्यादन्यत्र वर्तते। हस्तस्तेजस्विनस्तस्य अनुग्रहणकारणात् (भा० आदि० १३२।२४)। **अनुग्रहणमभ्यासः।**

—घट्ट् (घट्ट चलने)। तृणाग्रं तूलेनानुघट्टयति (सि० कौ० ३।१।२५)।

—घुष् (घुषिर् अविशब्दने, घुषिर् शब्दे)। परुष्परुरनुघुष्या वि शस्त (ऋ० १।१६२।१८)। **उच्चैः शब्दं कृत्वेत्यर्थः।**

—चक्ष् (चक्षिङ् व्यक्तायां वाचि)। परायतीं मातरमन्वचष्ट (ऋ० ४।१८।३)। **अन्वचष्ट=अदर्शत्। म्रियमाणां मातरं प्रति दृशं प्रैरयदित्यर्थः।** आदित्यो वा अनुख्याता (गो० ब्रा० उ० ४।६)। **अनुख्याता=अनुद्रष्टा।**

—चर् (चर गतिभक्षणयोः)। इदमुभयतः परिच्छिन्नं रक्षोऽन्तरिक्षमनुचरति (श० ब्रा० ३।८।२।१५)। **अनुचरति=संचरति।** ·यां मायाभिरन्वचरन्मनीषिणः (अथर्व० १२।१।८)। **अन्वैच्छन्नित्यर्थः।** अनुचरति शशाङ्कं राहुदोषेपि तारा (प्रतिमा० १।२५)। **अनुचरति=अनुगच्छति। तमनुव्रता भवतीति तात्पर्यार्थः।** तावत्तवाक्षया कीर्तिर्लोकाननुचरिष्यति (भा० शां० ५४।२८)। **अनुचरिष्यति=व्याप्स्यति।** शाश्वती खलु ते कीर्तिर्लोकाननुचरिष्यति (रा० २।८५।१३)। **उक्तोऽर्थः।** ततः सर्वांस्तदा लोकान्ब्राह्मणोऽनुचचार ह (भा० शां० २७१।५३)। **अनुचचार=विचचार=बभ्राम=पर्यटि।** तमाश्रमं सोऽनुचचार धीरः (बुद्ध० ७।१०)। **अनुचचार=अनुक्रमेण प्राप।** स्वस्ति पन्थामनुचरेम (ऋ० ५।५१।१५)। **अनुचरेम=सततं गच्छेम। अनुः सातत्ये।** आपो अद्यान्वचारिषम् (ऋ० १०।९।९)। अपोऽन्वचारिषम् (आप० श्रौ० ८।२।८।१८)। सावित्र्यनुचचारैका यमलोकं तपस्विनी (भा० वि० २१।१५)। **यमलोकमुद्दिश्य प्रतस्थे एकाकिनीत्याह।** पतिमन्वचरत्सीता महारण्यनिवासिनम् (भा० वि० २१।१२)। अत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति (चरक० सूत्र० २९।९)। विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् (रा० १।५९।१९)। **अनुचरन्तु=परिक्रामन्तु=परिभ्रमन्तु** (कतकः)। दिशः सर्वास्त्वनुचरन्स यथा पापकर्मकृत् (रा० २।३६।२५)। **अनुचरन्=विचरन्।** पित्रोः पादाननुचरन् (का० )। **अनुचरन्=सेवमानः।** अस्मिन्व्यालानुचरिते वने वसति दुर्मतिः (रा० ३।४९।१६)। **व्यालाः सरीसृपाः, तैरनुचरिते आक्रान्ते व्याप्ते।** अयमेवाश्रमो राम······ऋषिसङ्घानुचरितः (रा० ३।७।१७)। **अनुचरितः=व्याप्तः=आकीर्णः।** स प्रोक्षणीभ्यां काम्पीलशाखया निवेशनमनुचर्य (कौ० सू० ८३।१७)। विद्याधरानुचरितं किन्नरीभिस्तथैव च (भा० वन० १५८।३९)। **उक्तोऽर्थः।** यस्यैकापि गृहे नास्ति धेनुर्वत्सानुचारिणी (अत्रि० श्लो० २२०)। तेनानुचरेण धेनोः (रघु० २।४)। **अनुचरेण=अनुगेन।**

—चिन्त् (चिति स्मृत्याम्)। धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः (शा० २।१०)। **अनुचिन्त्य=मनसि कृत्वा।** परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् (गीता०)। **उक्तोऽर्थः।**

—छद् (छद अपवारणे)। तस्य वा एतस्य वाससः। अग्नेः पर्यासो भवति ·वायोरनुछादः (श० ब्रा० ३।१।२।१८)। **अनुछादः=वानम्। परिधानस्य**

**शाटकादेरेकदेशो यः कटिमारभ्यापादमवस्रस्यते पुरस्तात्सोऽनुच्छाद इत्याभिधानिकाः ।**

—**जन् (जनी प्रादुर्भावे)** । पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते (मनु० ९।१३४) । **अनुजायते=पश्चाज्जायते** । अनुजातो हि मां सर्वैर्गुणैः श्रेष्ठो ममात्मजः (रा० २।२।११)। एकस्त्वमनुजातोसि पितरं बलवत्तरम् (रा० ६।७६।७२) । **पितरमनुजातः=पितृसदृशो जातोसीत्याह । अनुरुपसर्गः, न कर्मप्रवचनीय** इति व्याकरणचन्द्रोदये प्रथमे खण्डे साधितम् । असौ कुमारस्तमजोऽनुजातः (रघु० ६।७८) । **तमनुजातः=तस्माज्जातः । तज्जातोपि तदनुजातः, जन्यजनकयोरानन्तर्यात्** । पुमांसमनुरुध्य जाता पुमनुजा । अनोः कर्मणि (पा० ३।२।१००) इत्यत्र वृत्तिः । दन्तजातेऽनुजाते च कृतचूडे च संस्थिते । अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते (मनु० ५।५८) ॥ **अनुजाते =जातदन्तानन्तरे । अजातदन्तोऽनुजातो भवतीति केचित्** । एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः (मनु० ९।११७) ।

—**जागृ (जागृ निद्राक्षये)** । अन्वजागस्ततो रामम् (रा० २।५०।३६) । **रामसमीपेऽजाग इत्यर्थः ।**

—**जीव् (जीव प्राणधारणे)** । ये च त्वामनुजीवन्ति नाहं तेषां न ते मम (रा० २। ) । **त्वामनुजीवन्ति त्वामाश्रित्य जीवन्ति** । स तु तस्याः पाणिग्राहकमनुजीविष्यति (दशकु०) । **तदायत्तवृत्तिर्भविष्यतीत्याह** । यां तां श्रियमसूयामः पुरा दृष्ट्वा युधिष्ठिरे । अद्य तामनुजीवामो भीष्मद्रोणवधेन ह (भा० द्रोण० ११।४७) ॥ **असूयाराहित्येन पश्याम इत्यापटेः कोषकारः । दद्मः इति तु नील०** । इति व्यवस्था भूतानां पुरस्तान्मनुना कृता । सर्वे तथाऽनुजीवेयुः ······(भा० शां० ८८।१६-१७) । **अनुजीवेयुः=जीवेयुः । व्यवस्थाया आनुकूल्येन जीवेयुरित्यर्थो न, तदर्थस्य तथाशब्देनोक्तत्वात्** । आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः । सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते (रा० ६।२९।९) ॥ **अनुजीव्यम्=यदनुवृत्य जीवनीयम्** । प्रेमदत्तवदनानिलः पिबन्नन्वजीवदमरालकेश्वरौ (रघु० १९।१५) । **अन्वजीवत्=अनुकृत्याजीवत् । अत्यजीवदिति पाठान्तरम्** । तस्मात्समानोदर्या स्वसाऽन्योदर्यायै जायाया अनुजीविनी जीवति (ऐ० ब्रा० ३।३७) । **अनुजीविनी=अनुसृत्य भुञ्जाना** ।

—**ज्ञा (ज्ञा अवबोधने)** । अनुजानीहि मां गमनाय । गम्यतां पुनर्दर्शनाय । **मम गमनमनुमन्यस्वेत्यर्थः** । यत्किञ्चानुजानात्योमित्येवाह (छां० उ० १।१।८)। यदि मां नानुजानासि (रा० २।) । विश्वेदेवा अनु तद् वामजानन् (अथर्व० १४।१।१५) । मन्त्रिणो वसिष्ठवाक्यमनुजानन्ति (रा० २।६८।८) इत्यत्र

तिलकः। **अनुजानन्ति=अनुमन्यन्ते=अनुमोदन्ते । उक्तोऽर्थः**। विभीषणं च पौलस्त्यमन्वजानाद् गृहान् प्रति (भा० वन० २९१।६७)। **गमनायानुज्ञामकरोदित्यर्थः**। तुभ्यं देवा अनुजानन्तु विश्वे (अथर्व० ६।११२।१)। तं नो देवासोऽनुजानन्तु कामम् (तै० ब्रा० ३।१।१।१३)। **वितरन्तु, प्रदिशन्त्वित्यर्थः**। यत्त्विद भवता किंचित् प्रीत्या समुपकल्पितम्। सर्वं तदनुजानामि नहि वर्ते प्रतिग्रहे (रा० २।५०।४३)॥ **अनुजानामि=अङ्गीकृत्य ददामि**। अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत्। अनुजानामि तत् सर्वमस्मिँल्लोके परत्र च (रा० २।४२।८)॥ **अनुजानामि=त्यजामि**। त्वां साहमनुजानामि न गन्तव्यमितो वनम् (रा० २।२१।२५)। **अनुजानामि=प्रार्थये**। मां जातमात्रामत्रत्यायैव कस्मै चिदिभ्यकुमारायान्वजानाद् भार्यां मे पिता (दशकु०)। **अन्वजानात्=दातुमन्वमन्यत प्रत्यशृणोदित्यर्थः**। अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम्। सर्वं तदनुजानामि (भा०)। **अनुजानामि=क्षमे**। कश्मलं प्राविशन्घोरं नान्वजानन् परस्परम् (भा० द्रोण० १४६।८५)। **अन्वजानन्=प्राजानन्**। सर्वाण्येवानुजानामि चीराण्येवानयन्तु मे (रा० २।३७।४)। **अनुजानामि=ददामि**। धर्मराजश्च पुत्रस्ते राज्यं प्राणान् धनानि च। अनुजानाति राजर्षे (भा० आश्रम० १३।४)। **ददातीत्याह**। नवे सस्ये प्राप्ते पुराणमनुजानीयात् (आप० ध० २।६।२२।२४)। **अनुजानीयात्=त्यजेत्**। न चानुजानाति भृशं च तप्यते (भा० उ० २४।४)। **सन्धिं नानुमोदत इत्यर्थः**। इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम्। इति त्वमनुजानीहि राम मा क्षत्रियाञ्जहि (भा० आश्व० ३०।३१-३२)। **अस्मदुपदेशं साक्षात्कुरु योगबलेनेत्याह**। ते मां वीर्येण यशसा तेजसा च बलेन च। अस्त्रैश्चाप्यन्वजानन्त सङ्ग्रामे विजयेन च (भा० वन० १६८।५४)॥ **वीर्यादिमान् भवेत्याद्याशीर्वादान्ददुरित्यर्थः**। एते वा मामहं वैनाननुजानीहि पार्थिव (भा० उ० १३०।२५)। **अनुजानीहि=जानीहि। नार्थोऽनुना**। अन्वजानात् स धर्मज्ञो मुनिर्दिव्येन चक्षुषा। आस्यतामिति चाब्रवीत् (भा० ३।११६३१)। **इहाप्यनु विशेषकृन्न। अजानादित्येवार्थः**। येनार्थिनो हि मे यूयं तन्माऽनुज्ञातुमर्हथ (वामन पु० ५२।२९)। **अनुज्ञातुम्=ज्ञापयितुम्। जानातिरिहान्तर्भूतण्यर्थकः। अनुश्चानर्थकः**। व्यलीकं वः सुतैर्मम। यदन्येन मदीयेन तदनुज्ञातुमर्हथ (भा० आश्रम० ९।१६)। **अनुज्ञातुम्=क्षन्तुम्**। अभिप्रेतांस्तु मे कामांस्त्वमनुज्ञातुमर्हसि (भा० वन० ११०।५६)। **कामितार्थवितरणमनुमन्तुमर्हसीत्याह**। स माधवमनुज्ञाय कुरुष्वेति धनञ्जयः (भा० द्रोण० १८६।७)। **कुरुष्वेत्याज्ञां लब्ध्वा**। तन्मया प्रीतिमता युवयोरनुज्ञातम् (शा० ५)। **अनुज्ञातम्=अनुमोदितम्, अनुमतम्**। अनुज्ञातश्च रामेण मत्समोसीति भारत (भा० उ० ५५।५४)। **अनुज्ञातः=अभ्युपेतः**।

योऽन्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानः······(शा० ब्रा०) । **अनुज्ञातः=परिचितः** । शिष्याणामखिलं कृत्स्नमनुज्ञातं ससङ्ग्रहम् (भा० शां० ३१८।२४) । **अनुज्ञातम्=शिक्षितम्** । स मातरमनुज्ञाप्य तपस्येव मनो दधे (भा०) । **अनुज्ञाप्य=अनुमान्य, तदनुमतिं लब्ध्वा** । तं चक्रधरमनुज्ञाप्य स्वगृहं गतः (पञ्चम० ४) । अनुजिज्ञासतेवाथ लङ्कादर्शनमिन्दुना ।···पूर्वस्यां दिश्युदैयत (भट्टि० ८।३५) ।। **अनुज्ञातुमिच्छतेत्याह** ।

—तन् (**तनु विस्तारे**) । या हृदयमुपर्षन्त्यनुतन्वन्ति कीकसाः (अथर्व० ६।८।१४) । **अनुतन्वन्ति=सन्तायन्ते** । केनापो अन्वतनुत (अथर्व० १०।२।१६) । **अन्वतनुत अनुतताः सन्तता व्याप्ता अकुरुतेत्याह** । ततोऽसि तन्तुरस्य नु मा तनुहि (का० श्रौ० ३।८।२५) । **माऽनुतनुहि=मां सन्तन्वित्याह** । धर्ममेवानुतन्वती (भा० ३।१२६८१) । **अनन्तरायं धर्ममनुतिष्ठन्तीत्यर्थः** ।

—तप् (**तप सन्तापे**) । कुम्भीमनुतप्ताम् (सुश्रुत० २।१८१।१४) । **अनुतप्ताम्=सन्तप्ताम्** । अनुतप्ये भृश तात तव घोरेण कर्मणा (भा० वन० १३७२०) । **अनुतप्ये=शोचामि, दुःख्यामि, दूये** । यस्त्वा······वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः (भा० ३।६९२) । **नान्वतप्यत=अनुतापं पश्चात्तापं नान्वभूत्, नान्वशोचत** । तेनानिमित्तेन तथा न पार्थस्तयोर्यथा रिक्ततयाऽनुतेपे (कि० १७।४०) । **उक्तोऽर्थः** । यानग्नयोऽन्वतप्यन्त धिष्ण्याः (अथर्व० २।३५।१) । **अन्वतप्यन्त=अस्पृहयन्त** । मा पुत्रमनुतप्यथाः (भा० ७) । **मा काङ्क्षीरित्यर्थः** । विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् (रघु० ८।८९) । **अनुतापयेत्=क्लिश्नीयात्** ।

—तर्क् (**तर्क भाषार्थः**) । देवमेषान्वतर्कयत् (भा० ३।१७२२) । **अचिन्तयदित्यर्थः** ।

—तृद् (**तृदिर् हिंसानादरयोः**) । ऋतस्य धारा अनुतृन्धि पूर्वीः (ऋ० ५।१२।२) । **अपोर्णुहीत्यर्थः** । अन्वपां खान्यतृन्तम् (ऋ० ७।८२।३) । **उक्तोऽर्थः** ।

—तृप् (**तृप प्रीणने, प्रीणनं तृप्तिः**) । ब्राह्मणेभ्योऽनुतृप्यन्ते पितरो देवतास्तथा (भा० अनु० २६।१०) । **अनुतृप्यन्ते=अनुतृप्यन्ति=पश्चात् तृप्यन्ति** ।

—तृष् (**ञितृषा पिपासायाम्**) । **अनुतर्षः=चषकः=पानपात्रम्** ।

—तॄ (**तॄ प्लवनतरणयोः**) । ततं तन्तुमन्वेके तरन्ति (अथर्व० ६।१२२।२) । **अनुतरन्ति=अन्तं यावदनुगच्छन्तीत्याह** । ते बाध्यमानाः समरे भार-

द्व्याजेन पार्थिवाः । मेदिन्यामन्ववतीर्यन्त वातनुन्ना इव द्रुमाः (भा० ७) ॥ **अन्ववतीर्यन्त=शरीरायामलक्षिता भूमिमवर्धयन्नित्यर्थः ।**

**—दा (डुदाञ् दाने)** । तुभ्यं देवा अनु विश्वे अददुः सोमपेयम् (ऋ० ५।२९।५) । **अन्वददुः=प्रादिशन्, भागधेयमकल्पयन् ।** तदद्याप्सरसावनुदत्तामृण नः (अथर्व० ६।११८।१) । **आनुकूल्येन प्रयच्छतामिति सायणः ।** यथास्मान्न बाधते तथा **ऋणान्मुञ्चतामिति तात्पर्यम् । ते अप्सरसौ प्रत्यनृणाः स्यामेत्युक्तं भवति ।** यदक्षवृत्तमनुदत्तं न एतत् । यः शर्धते नानुददाति शृध्याम् (अथर्व० २०।३४।११) । **शृध्यामुत्साहनीयं कर्म नानुददाति नानुजानाति ।** सूरश्चिदस्मा अनुदादपस्याम् (ऋ० ७।४५।२) । **अनुदात्=अन्वदात्=अतिरिक्तां ददात्वित्यर्थः ।** अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ तेन भग्नानरीन्सर्वान्मिद्भग्नान्मन्यते जनः । तेन भग्नानि सैन्यानि पृष्ठतोऽनुददाम्यहम् (भा० द्रोण० २०२।६) ॥ **पृष्ठतोऽनुददामि=पृष्ठतो यामि । अनुव्रजामीति पाठान्तरम् ।** न दूढ्ये अनुददाति वामम् (ऋ० १।१९०।५) । **अनुददाति=ददाति ।**

**—दिश् (दिश अतिसर्जने)** । यज्ञं देवेभ्योऽनुदिशति (तै० सं० १।५।४।३) । **अनुदिशति=निर्दिशति ।** गौरमारण्यमनु ते दिशामि (वा० सं० १३।४८) । **अनुदिशामि=ददामि ।** वायवे त्वा इति नष्टामनुदिशति (आप० श्रौ० १०।६।१८।८) । **मन्त्रसमवेतं देवतार्थतया सङ्कल्पनमनुदेशः ।** अन्यदन्यमनुदिशत्यन्नम् (आश्व० गृ० ४।८) । **अनुददाति=पश्चाद् ददाति ।** रामश्चाप्यनुदिश्यताम् (रा० ६।८९।३१) । तामु धीरासो अनुदिश्य यजन्ते (वा० सं० १।५८) । **अनुदिश्य=उद्दिश्य ।** नानुदेश्यं भुञ्जीत (आप० ध० १।१।२।२२) । **अनुदेश्यम् श्राद्धार्थं देवतार्थं वोद्दिष्टम् ।** यथासंख्यमनुदेशः समानाम् (पा० १।३।१०) । **अनुदिश्यत इत्यनुदेशः । पश्चादुच्चार्यत इत्यर्थः ।**

**—दुष् (दुष वैकृत्ये)** । अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषम् (भा० उ० १३४।५) । **अनुदुष्येयुः=विकारं भजेरन् । भग्नोत्साहा जायेरन्, आत्मलाघवमनुभवेयुरित्यर्थः ।**

**—दृभ् (दृभी ग्रन्थे)** । द्व्यङ्गुलं समिधोऽतिहृत्यानुदृभन्निवाभिजुहोति (शां० ब्रा० २।२) । **अनुदृभन्=गुच्छकान् शृङ्खला वा निर्मिमाणः ।**

**—दृश् (दृशिर् प्रेक्षणे)** । न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे (गीता० १।३१) । **नानुपश्यामि=आयत्यां न पश्यामि ।** रथे विलग्नाविव चन्द्रसूर्यौ घनान्तरेणानुददर्श लोकः (भा० वि० ५४।३०) । **अनुददर्श=स्वल्पं ददर्श, कथं चिदवलुलोके ।** न संसारोत्पन्नं चरितमनुपश्यामि कुशलम् (भर्तृ०

३।३)। **अनुर्व्याप्तौ। अनुपश्यामि=कात्स्न्र्येन पश्यामि।** आददानं महेष्वासं सन्दधानं च सायकम्। विसृजन्तं च कौन्तेयं नानुपश्याम वै तदा (भा० द्रोण० १४६।४६-४७)। **नानुपश्याम=नान्वपश्याम। अनुक्रमेण नादर्शाम।** सेनापतिः पुत्रमग्निमित्रं परिष्वज्यानुदर्शयति (माल० ५)। **अनुदर्शयति=वेदयति।** (महीं) स्फीतां राष्ट्रावृतां रामो वैदेहीमन्वदर्शयत् (रा० २।४९।१२)। **अनुक्रमेणादर्शयदित्यर्थः।** सौभ्रात्रमनुदर्शयन्। **(सुमित्रानन्दवर्धनः)** (रा० १।१।२५)। **अनुदर्शयन्=विवृण्वन्, आविर्भावयन्।** पूर्वेषां पन्थानमनुदृश्य धीराः (ऋ० १०।१३०।७)। **अनुदृश्य=अन्वीक्ष्य। अनुशब्दः पथोऽतिक्रान्ततामाह।** इदं महर्षेर्वचनं महात्मनो यथावदुक्तं मनसाऽनुदृश्य च (भा० शां २४०।३६)। **अनुदृश्य=पर्यालोच्य।** अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः (रा० २।१००।११)। **अनुद्रष्टा=उपकारकः।** जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् (गीता १३।८)। **अनुदर्शनम्=साकल्येन दर्शनम्।**

—**दॄ (दॄ विदारणे)।** आपस्तस्तम्भिरे चास्य (नृपस्य) समुद्रमभियास्यतः। सरितश्चान्वदीर्यन्त ध्वजभङ्गश्च नाभवत् (भा० शां० २९।१४२)॥ **अन्वदीर्यन्त=स्वयमेव बिभिदिरे आसां धाराः, येन ताः सुप्रतरा बभूवुः।** (सेनां) तां दीर्णामनुदीर्यन्ते योधाः शूरतरा अपि (भा० भीष्म० ३।७६)। **अनुदीर्यन्ते=विकीर्यन्ते।**

—**द्रु (द्रु गतौ)।** अन्वद्रवन्त तं पश्चाद् राजानः (भा० उ० १५०।२)। **अन्वधावन्नित्यर्थः।** ताभिः स बलवान्नादः क्रोशन्तीभिरनुद्रुतः। येन स्फीतीकृतो भूयस्तद्गृहं समनादयत् (रा० २।६५।२६)॥ **अनुद्रुतः=अनुसृतः=आवर्तितः।** अश्वेति विद्रुतमनुद्रवताऽश्वमन्यम् (शिशु०५।५९)। **अनुद्रवता=अनुसरता=अनुधावता।** पञ्चहोतारं मनसाऽनुद्रुत्य (भा० श्रौ० ८।१।१)। **मनसाऽनुद्रुत्य मनसा जपित्वा।** पित्र्यमन्त्रानुद्रवणे आत्मालम्भेऽधमेक्षणे (गो० गृ० १।३।१२) सूत्रटीकायां मुकुन्दशर्मकृतायां स्मृतिवचनम्। **तत्रानुद्रवणमुच्चरणम्** इति मुकुन्द०।

—**धा (डुधाञ् धारणपोषणयोः)।** अथान्यान् (तण्डुलान्) हुतास्वाश्वत्थीषु (समित्सु) अनुदधीरन् (लाट्या० श्रौ० ४।९।१४)। **अनुशब्दः पश्चादर्थे।** अनु प्र येजे जन ओजो अस्य सत्रा दधिरे अनु वीर्याय (ऋ० ६।३६।२)। **अनुदधिरे=समीरयामासुः।**

—**धाव् (धावु गतिशुद्धयोः)।** अन्वेकं धावसि पूयमानः (ऋ० ९।९७।५५)। **अनुधावसि=अनुस्यन्दसे।** कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रमनुधावति (रा० २।१०९।१३)। **निर्भिन्नः सन् सर्वासु दिक्षु न प्रसरति, सर्वस्य**

**विदितो न भवतीत्यर्थः** । रक्षांस्यमित्राननुधावत (अथर्व० ११।१०।१) । **शत्रूननुसरतोत्सारणायेत्याह** । ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति (उत्तर० १।१०) । **ऋषिभिराद्यैरुदितां वाचमनुरुध्यार्थास्त्वरितं सत्तां लभन्ते इत्युक्तं भवति । अनुसरति शैघ्र्येणेत्यक्षरार्थः** । वत्सलत्वाद्यथा धेनुः स्वपुत्रमनुधावति (रा० २।२५।८) । **पुत्रम् प्रति त्वरत इत्यर्थः** । मामिह वने ग्रस्यमानां…ग्रहेणानेन विजने किमर्थं नानुधावसि (भा० वन० ६३।२३) । **परित्राणार्थं किं नाभित्वरस इत्याह** ।

**—धी (धीङ् आधारे)** । वनस्थमपि तापस्ये यस्त्वामनुविधीयते (रा० ३।१६।३३) । **अनुविधीयते=अनुकरोति** ।

**—ध्मा (ध्मा शब्दाग्निसंयोगयोः)** । ये द्रप्सा इव रोदसी धमन्त्यनु वृष्टिभिः (ऋ० ८।७।१६) । **अनुधमन्ति अभिवर्षन्तीत्यनर्थान्तरम्** ।

**—ध्यै (ध्यै चिन्तायाम्)** । नानुध्यायाद् बहूञ् छब्दान् वाचो विग्लापनं हि तत् (श० ब्रा० १४।७।२।२३) । **नानुध्यायात्=नानुध्यायेत्=नानुचिन्तयेत्** । मामनुध्याय भावेन (भा० आदि० ८५।२९) । **मां हृदयेन संततं चिन्तयेत्याह** । (पशवः) एतमालभ्यमानमनुध्यायन्ति (काठसं० ३०।९) । **कृपयन्ते, दयन्ते, अनुशोचन्तीति वार्थः** । अप वा अस्यैप धिष्णियो हीयते सोऽनुध्यायति (तै० सं० ३।१।३।६) । **अनुध्यायति=कुप्यति, कोपस्तमाविशति** । प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति (रघु० १४।७०) । **शिवमस्त्वति चिन्तयतेत्यर्थः** । अनुदध्युरनुध्येयम् (रघु० १७।३६) । **अनुध्यानमनुग्रह इत्युत्पलमाला** । या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसम्भवा (कु० ६।२१) । **अनुरत्र विशेषकृन्न** । सा त्वमम्ब स्नुषायामरुन्धतीव शिवानुध्यानपरा भव (उत्तर० १) । **इहापि तथैव** । नहि कार्यमनुध्याति नारी पुत्रवती सती (भा० आदि० २३३।३१) । **अनुध्याति=अनुध्यायति=मनसि करोति** । अननुध्यायिनं लोकं जयति (ऐ० ब्रा० ३।४७) । **अनुध्यायी=चिन्तितार्थप्रदायी, तस्य निषेधः, अननुध्यायी** । प्रेतो यन्तु व्याध्यः प्रानुध्याः प्रो अशस्तयः (अथर्व० ७।११४।२) । **अनुध्याः=अनुध्यानानि । इहानु शब्दो वैपरीत्ये प्रातिकूल्ये सामर्थ्याद् वर्तते । अनुध्यानमनिष्टचिन्तनम्** । वनवासमनुध्याय गृहाय प्रतिनेष्यति (रा० २।९७।२२) । **अनुध्याय=विचिन्त्य** ।

**—नद् (णद अव्यक्ते शब्दे)** । तथा च तेषां रुदतां महात्मनां दिशं च खं चानुननाद निःस्वनः (रा० गोरेसिओ सं० २।१११।५३) । **अनुननाद=व्याप । शब्दनक्रियाया निःस्वनेनैवोक्तत्वादनुना व्याप्तिरुच्यते** । पृथिवीं चान्तरिक्षं च सागरांश्चानुनादयन् (भा० उ० १५१।७१) । **अनुनादयन्=प्रतिध्वनयन्** ।

गुरुतरकलनूपुरानुनादम् (शिशु० ७।१८) । **अनुनादः प्रतिशब्दः प्रतिश्रुत् ।**

—**नम् (णम प्रह्वत्वे शब्दे च)।** अनु स्वधाव्ने क्षितयो नमन्त (ऋ० ५।३२।१०) । **स्वधावानमिन्द्रं प्रति प्रह्वीभूताः ।**

—**नी (णीञ् प्रापणे) ।** मान्यान् मानय विद्विषोप्यनुनय (भर्तृ० २।७७) । **विद्विट्स्वपि प्रीयस्व, तत्रापि प्रीतिमान् भवेत्याह ।** अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते (भा० आदि० १७०।४६) । **अनुनेष्यामि=पश्चात् प्रापयिष्यामि । वितरीष्यामीत्यर्थः ।** अनुनयति समर्थः खङ्गदीर्घः करोयम् (चारु० १।१४) । **अनुनयति=प्रसादयति ।** भवतोऽनुनयाम्येवं पुरू राज्येऽभिषिच्यताम् (भा० १। ३५२८) । **अनुनयामि=सम्प्रार्थये । प्रसीदन्तु भवन्तः पुरुं राज्येभिषिञ्चन्त्विति ।** न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् (रा० १।८। २०) । अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् (ऋ० ४।३०।१९) । **अन्वनयः=अन्वगच्छः=सहचरोऽभूः ।** तं रजिष्ठमनु नेषि पन्थाम् (ऋ० १।९१।१) । **रजिष्ठन्=ऋजिष्ठम् । ऋजुतमेन पथा नयसीत्यर्थः । गङ्गां चानुनयन्ति स्म** दुहितृत्वे महात्मनः (रा० १।४३।३७) । **अनुनयन्ति=प्रापयन्ति । गङ्गां चापि नयन्तीति पाठान्तरम् ।** अनुनीयमानो दुर्बुद्धिरनुनेतुं न शक्यते (हरि० १।२०। ६६) । **अनुनीयमानः=प्रसाद्यमानः ।** विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे (रघु० १९।३८) । **उक्तोऽर्थः ।** अनुनीता त्वमस्माभिश्चिरं सान्त्वेन मैथिलि । न च नः कुरुषे वाक्यम् (रा०५।२५।३५) । **अनुनीता=आनुकूल्याय प्रेरिता ।** पादास्त एव शशिनः सुखयन्ति गात्रं संरम्भरूक्षमिव सुन्दरि यद् यदासीत् । त्वत्सङ्गमेन तत्तदिवानुनीतम् (विक्रम० ३।२०) । ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा । (भा० पु० ६।६।१) । **अनुनीतः=आनुकूल्यं नीतः ।** स चानुनीतः प्रणतेन पश्चात् (रघु० ५।५४) । **अनुनीतः=शमितः, समाहितः ।** अनुनीता हि भीष्मेण द्रोणेन विदुरेण च । न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु (भा० वि० ३।११) ॥ **अनुनीताः=सामवचनैः प्रयुक्ताः ।** कथं नु शक्योऽनुनयो महर्षेर्विश्राणनादन्यपयस्विनीनाम् (रघु० २।५४) । **अनुनयः क्रोधापनयः ।** प्रकृतिवक्रः स कस्यानुनयं ग्रहीष्यति (शा० ४) । **अनुनयः क्षमाप्रार्थना ।** विविधैरनुतप्यन्ते दयितानुनयैर्मनस्विन्यः । (विक्रम० ३।५) । **अनुनयैः प्रसादनयत्नैः, सामप्रयोगैः ।** भद्र प्रियं नः किन्तु त्वदभिप्रायापरिज्ञानान्तरितोऽयमस्मदनुनयः (मुद्रा० २) । **अनुनयः=प्रणयः, याच्ञा ।** तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणोऽनुनयं वचः (रा० ४।२७।३३) । **अनुनयमानुकूल्यसम्पादकम्, अनुनेतृवचनम् । कर्तव्यं च ।** अदत्तानुनयो युद्धे यदि त्वं पितृभिर्मम (भा० आश्व० ८२।७) । **अनुनयः शिक्षा । अनुशब्दो वेरर्थे ।** अनु-

**नयो विनय इत्यनर्थान्तरम्** । इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु (भा० वन० १८३।७) । **अनुनयः सिद्धान्त** इति नीलकण्ठः । भजते कुपितो प्युदारधीरनुनीतिं नतिमात्रकेण सः । **अनुनीतिं भजते प्रसादाभिमुखो भवतीत्यर्थः** । अनुनेयानि जल्पन्तमनयान्नान्वपद्यत (भा०द्रोण ८५।२५) । **अनुनेयानि वचनानि=अनुकूलयितुं प्रवृत्तानि वचांसि** । अहं तु तान् शितैर्बाणैरनुनीय रणे बलात् (भा० उ० ३।१९) । **अनुनीय=अनुकूलान्सम्पाद्य । वशे कृत्वेत्यर्थः** ।

**—नु (णु स्तुतौ)** । **शतैनमन्वनोनवुः** (ऋ०१।८०।९) । **अन्वनोनवुः=अनुक्रमेण पुनः पुनरस्तुवन्** । त्वामिद्धि त्वायवोऽनुनोनुवतश्चरान् सखाय इन्द्र कारवः (ऋ० ८।९२।३३)। **अनुनोनुवतः=अनुक्रमेण पुनः पुनः स्तुवन्तः । अनुपूर्वान्नौते यङ्लुगन्ताच्छतरि रूपम् । चरान् इति लेटि । परिचरन्त्वित्यर्थः** ।

**—नृत् (नृती गात्रविक्षेपे)** । पश्य लक्ष्मण नृत्यन्तं मयूरमनुनृत्यन्ति । मयूरी (रा० ३।७९।१५) । **अनुनर्तनं पश्चान्नर्तनम्** । तथैनमन्वनृत्यन्त देवकन्याः (भा० शल्य० ४४।१९) । **एनमन्वनृत्यन्त=अस्य पुरोऽनृत्यन्** ।

**—पच् (डुपचष् पाके)** । अन्तः समुद्रेऽनुपचन् स्वधातून् (भा० पु० ८।५।३५) । **अनुपचन्=अनुक्रमेण (मन्दमन्दम्) पचन्** । शुभानामशुभाना च नेह नाशोस्ति कर्मणाम् । प्राप्य प्राप्यानुपच्यन्ते क्षेत्रं क्षेत्रं तथा तथा (भा० आश्व० १८।१) ॥ **अनुपच्यन्ते=अनुक्रमेण फलानि प्रसुवते । शनैर्विपच्यन्त इत्यर्थः** ।

**—पठ् (पठ व्यक्तायां वाचि)** । कृतानुपाठाः स्वापत्यैः प्राह्णे लोकानहासयन् (राज० ८।१०१) । **अनुपाठः स्वाध्यायः** । आत्मनाऽनुपठेत् (सुश्रुत० १।१३।४) । **अनुपठेत्=पाठमावर्तयेत्** । यत्तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च (भा० पु० ७।५।३) । **गुरुमनुकुर्वन्पश्चात्पपाठेत्यर्थः** ।

**—पत् (पत्लृ गतौ)** । न यत्र प्रत्याशामनुपतति नो वा विरहयति (चेतः) । (मालती० ८।९) । **अनुपतति=अनुबध्नाति** । अनुपतति रजनीं पूर्वसन्ध्या (शिशु० ११।४०) । **अनुयातीत्यर्थः** । रजश्चाश्वोद्धूतं पतति नानुपतति (प्रतिमा० ३।२) । **नानुपतति=पृष्ठतो न पतति** । धर्ममन्वपतद् द्रुतम् (कथा० ७।८९) । **अन्वपतत्=अन्वसरत्=अन्वतिष्ठत्** । खमेवानुपतन् (भा० पु० ३।११।५) । **खमुत्पतन्निति विवक्षति** । मुहुरनुपतति स्यन्दने दत्तदृष्टिः (शा० १।७) । **अनुपतति=अनुसारं कुर्वंति (स्यन्दने)** । कथमनुपतत एव प्रयत्नप्रेक्षणीयः संवृत्तः (शा० १) । **अनुपततः=(मम)** । मदनुपातिनामेष पन्थाः (दशकु०) । **ममास्कन्तॄणाम्, मदाक्रमणकारिणाम् इत्याह** । प्राग्वीराननुपत्य (मालती० ८।९) । **अनुपत्य=आक्रम्य**

—पद् (पद गतौ)। तं तु विश्वामित्रोऽन्वपद्यत (भा० आदि० १७६।१५)। वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी (भा० विराट० २१।१०) ।अनुसृतवतीत्याह। वसुधामन्वपद्येतां वातनुन्नाविव द्रुमौ (भा० द्रोण० ९३।२४)। भूमिमगच्छताम्, भूमौ न्यपतताम्। अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः। अन्वपद्यन्त=अन्वगच्छन्। हत्वा श्रुतायुधं वीरं धरणीमन्वपद्यत (भा० द्रोण० ९२।५५)। अन्वपद्यत=अपतत्, न्यपतत्, अवापतत्। अहमक्षानन्वपद्यं जिहीर्षन्राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् (भा० वन० ३४।३)। अक्षानन्वपद्यम् =अक्षेषु प्रावर्ते। अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः (भा० महाप्र० १।४)। अन्वपद्यत=अन्वरुध्यत=अन्वमन्यत। अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा (भा० आदि० २२०।३२)। अनुमोदितवन्त इत्यर्थः। ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः (भा० वन० १२।७१)। नान्वपद्यन्त=नान्वगृह्णन्। पुत्रौ दृष्ट्वा सुसंभ्रान्ता नान्वपद्यत किंचन (भा० आदि० १३६।२९)। नान्वपद्यत= न प्रत्यपद्यत, नाचरत्। उतथ्यस्य यवीयांस्तु ममतामन्वपद्यत (भा० आदि० १०४।१०)। तत्रान्वरज्यत, तामकामयत। हिमवान् वा महाशैलः समुद्रो वा महोदधिः। महत्त्वान्नान्वपद्येतां नभसो नान्तरं तथा (भा० शां० १२६।१३) ॥ अन्वपद्येताम्=अभ्रंशेताम्। पदिरिह पतने वर्तते। जितमित्येव तानक्षान् पुनरेवान्वपद्यत (भा० सभा० ६५।४५)। अन्वपद्यत=आसेवत, उपाचरत्, व्यवाहरत्।

—पा (पा पाने)। उष्णोदकं वा मद्यं वा शृतं वाऽनुपिबेत् पयः (का०सं० कल्प० लशुन० श्लो० ५१)। अनुपिबेत्=औषधसेवनादनन्तरं पिबेत्। एताभिर्वा इन्द्रस्तृतीयसवनमन्वपिबत् (ऐ० ब्रा० ३।३८)। कल्माषान्भक्षयेन्मधु चानुपिबेत् (सुश्रुत० ३।७७।४)। मधु पीत्वा रसवत् कथं नु मे। अनुपास्यसि बाष्पदूषितं परलोकोपनत जलाञ्जलिम् (रघु० ८।६७)। उक्तोऽर्थः। भेषजेन सह पश्चाद्वा यत्किंचिन्मधुरादि पीयते तदनुपानम्। हन्तानुपानम्। इत्युच्छिष्टं वै मे पीतं स्यात् (छां० उ० १।१०।३)। इह संनिहितं पानीयमनुपानशब्देनोच्यते।

—पाल् (पा+लुक् चुरादिः)। बालदायादिकं रिक्थं तावद्राजाऽनुपालयेत् (मनु० ८।२७)। अनुपालयेत्=सततं रक्षेत्, स्वसकाशे रक्षितं स्थापयेत्।

—पुष् (पुष पुष्टौ)। अनु वीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः (वा० सं० २६।१९)। अनुशब्दो व्याप्तिवचन इह पोषणक्रियाया अविच्छेदमाह।

—प्लु (प्लुङ् गतौ)। इदमन्यतो वानरद्वयमार्यस्य पार्ष्णिग्राहमिव संश्रया-

दनुप्लवते ( ) । अनुगच्छति, अनुधावतीत्याह । अनुगा वायवो वान्ति तथाश्राणि वयांसि च । अनुप्लवन्ति मेघाश्च तथैवेन्द्रधनूंषि च (भा० भीष्म० ३।७३) ॥ **आनुकूल्येन संचरन्तीत्यर्थः** । तं...त्रिपर्वाणस्तापा अनुप्लवन्ते (यो० भा० २।१५) । **अनुप्लवन्ते=अनुगच्छन्ति, अनुबध्नन्ति** । अनुप्लवन्तो मेघाश्च तथादित्यरश्मयः (भा० शां० १०२।६) । **अनुप्लवन्तः=अनुगच्छन्तः=आनुकूल्येन वर्तमानाः** । यश्चाधर्मं चरेल्लोभात्कामक्रोधावनुप्लवन् (भा० शां० २१२।७) । अनुप्लवन्=अनुप्लवमानः=अनुगच्छन् । **वश्यो भवन् । कामक्रोधवक्तव्यः सन् इत्यर्थः** । जिघांसवः शीघ्रमनुप्लुतास्तम् (पाण्डवविजये) । **अनुप्लुताः=अनुद्रुताः=अनुधाविताः** । सानुप्लवः प्रभुरपि क्षणदाचराणाम् (रघु० १३।७५) । **अनुप्लवः सहायो वा भवत्यनुगो वा** । सानुप्लवाः क्वापि याताः स्त्रिमूर्धखरदूषणाः (महावीर० ७।१६) । **उक्तोऽर्थः** । समुह्यानुप्लवैरुह्यमानाः प्राणावनार्थिनः । (१४।३२) ।

—**बन्ध् (बन्ध बन्धने)** । यां मृतायानुबध्नन्ति कूद्यं पदयोपनीम् (अथर्व० ५।१६।१२) । राष्ट्र एव विशमनुबध्नाति (तै० ब्रा० १।८।३।२) । **उभयत्रानुशब्दो धात्वर्थे विशेषं न करोति** । उभयोरपि राजेन्द्र सम्बन्धेनानुबध्यताम् । इक्ष्वाकुकुलम्...(रा० १।७२।८) । **इहापि तथैव** । सीमन्तं निजमनुबध्नती कराभ्याम् (शिशु०८।६६) । **अनुबध्नती=बध्नती । अनुशब्दो धात्वर्थानुवादी** । तथा ते वृषल विक्षेपो भूयाद्यथा हिंसामनुबध्नातीति हिंसायां प्रतेश्च (६।१।१४१) **सूत्रे प्रतिस्कीर्णं हं ते वृषल भूयादित्युदाहरणं व्याचक्षाणस्य वृत्तिकारस्य वचनम् । अनुबध्नातिरत्र जननेन समानाभिधेयः** । भारतेप्यत्रार्थे प्रयोगः—अहो ममोपरि विधेः संरम्भो दारुणो महान् । नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् (भा० वन० ६५।३१) ॥ न शिष्याननुबध्नीत (भा०पु०) । तथा चानुबध्यमानस्तां बकुलमालामात्मनः कण्ठादवतार्य दत्तवान् (मालती० प्रथमाङ्के माधवोक्तिः) । **अनुबध्यमानः साग्रहं प्रार्थ्यमानः** । भूयो भूयश्चानुबध्यमाना दुःखेन कथं कथमप्याचक्षते (हर्ष० पञ्चमे उच्छ्वासे) । **प्रेर्यमाणा अनुयुज्यमाना इत्यर्थः** । मनुष्येण शौटीर्यमनुबध्नता (रा० ५।७१।६) । **दर्पं शौर्यं वाऽऽविष्कुर्वतेत्याह** । पुनः पुनश्चानुबध्यमाना (का०) । **सनिर्बन्धं पृच्छ्यमाना** । सत्योऽयमाभाणकः सम्पत्सम्पदमनुबध्नाति विपद्विपदम् । **नैरन्तर्येणानुसरतीत्यर्थः** । ते च विकाराः परस्परमनुवर्तमानाः कदाचिदनुबध्नन्ति कामादयो ज्वरादयश्च (चरक० वि० ६।८) । **अनुबध्नन्ति=सम्बध्यन्ते अनुगच्छन्ति** । न तत्सुनीतं हि वदन्ति तज्ज्ञा यन्नानुबध्नन्ति यशःसुखार्थाः (अवदा०सुतजा०श्लो० ५५) । **यत्सुनीतं सुनयं यशःसुखार्थाः फलमिति नानुसरन्तीत्याह** । भङ्गेऽपि हि मृणालानामनुबध्नन्ति तन्तवः (हितोप० १।६१) । संलग्ना **भवन्तीत्यर्थः** । तेषु किं भवतः स्नेहमनुबध्नाति

मानसम् (मार्क० पु०) । **अनुबध्नाति=धत्ते** । को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः (शा० ७) । **अनुबध्यमानः=अव्यवहितमनुस्रियमाणः** । मधुकरैः फलैरनुबध्यमानम् । (का०) । दिष्ट्या तावदयमनङ्गो मामिव तमप्यनुबध्नाति (का०) । अनुबध्नता तुरगमुखमिथुनम् (का०) । **अनुबध्नता=आसादयितुमनुसरता** । अथान्वबध्नामां वेगात् पटुश्वसितसन्ततिः (बृ० श्लो० सं० ६।१६) । **अन्वबध्नात् अन्वसरत्** प्रातरारभ्य मामनुबध्नन् किष्किन्धायाः प्रस्थाप्य प्रतिनिवृत्तः (महावीर० ५) । तदेवानुबध्यतां तपः । **सन्तायताम्, अविच्छेदेन चर्यतामित्यर्थः** । चक्षुरसीत्यनुबध्नीयात् (गो० गृ० ३।४४।२२) । **चक्षुरसीति मन्त्रं पश्चादुच्चारयेदित्यर्थः** । चिकित्सेदनुबन्धे तु सति हेतुविपर्ययम् (अ० हृ० सूत्र० ८।२३) । **अनुबन्धः सातत्यं नैरन्तर्यम्** । शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान् (ध्वन्या २।१४) । **उक्तोऽर्थः** । बाष्पं कुरु स्थिरतया विरतानुबन्धम् (शा०४) । **अनुबन्धः प्रवाहः** । मुच्यतां देवि शोकानुबन्धः (का०) । **अनुबद्धः सन्ततः शोक इत्यर्थः** । विरम विरम वह्ने मुञ्च धूमानुबन्धम् (रत्ना०४।१६) । सानुबन्धाः कथ न स्युः सम्पदो मे निरापदः (रघु० १।६४) । **सानुबन्धाः=निरन्तराः=अव्यवहिताः=सानुस्यूतयः** । अयं सोऽर्थोऽनर्थानुबन्धः संवृत्तः (विक्रम० ५) । **अनिष्टपरम्परागामीत्यर्थः** । रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि (रा० २।७।२६) । **अनुबन्धः पुत्रादिपरिकरः** । सानुबन्धो विनङ्क्ष्यसि (भा० पु० ८।१५।३१) । **सानुबन्धः=सान्वयः** । **अनुबन्धो वंशसन्तानः** । तेन पापानुबन्धेन वचनं न प्रतीच्छता (रा० १।३३।४) । **अनुबन्धोऽभिनिवेशः** । **पापानुबन्धेन=अधर्माभिनिविष्टेन चित्तेन** । एतस्येदृशेन दर्शनेन मे कीदृशो हृदयानुबन्धः (शा०) । **हृदयानुबन्धः=हृदयसमवस्था** । विषयप्रयोजनाधिकारिसम्बन्धा **अनुबन्धाः** । इदमेवानुबन्धचतुष्टयमित्याख्यया प्रथते । **प्रकृतिप्रत्ययादिषु वर्तमान इत्संज्ञको वर्णो व्याकरणशास्त्रेऽनुबन्ध इति व्यपदेशं भजते । स च परिनिष्ठिते प्रयोगार्हे शब्दे न श्रूयते । कार्यविशेषायोपात्तः सद्यो लुप्यते** । रिपुराय पराभवाय मध्यं प्रकृतिप्रत्यययोरिवानुबन्धः (किरात० १३।१६) । **पराभवो नाशः** । **मुख्यानुयायिनमप्रधानमप्यर्थमनुबन्धशब्दो वक्ति**—यथा 'खे यथा निपतत्युल्का उत्तरान्ताद् विनिःसृता । दृश्यते सानुबन्धा च' (रा०५।१।६३) । इत्यत्र । मूर्च्छानुबन्धा विषमज्वराः (सुश्रुते) । **विषमज्वरेषु मूर्छा सहचारिणी भवतीत्याह** । सानुबन्धा विनङ्क्ष्यन्ति पौराश्चैवेति नः श्रुतम् (भा० आदि० १२८।१०) । **उक्तोऽर्थः** । भूमेः सुतां भूमिभृतोऽनुबन्धात् (विश्वगुणा०) । **अनुबन्धः सम्बन्धः** । आत्मदोषानुबन्धेन (का०) । **अनुबन्धः फलम्** । अनुबन्धमजानन्तः कर्मणामविचक्षणाः (रा० ३।५१।२६) । **अनन्तरोदीरित एवार्थः** ।

नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे (भा० वि० ४९।१) अर्थानारभते बालो नानुबन्धमवेक्षते (भा० सभा० १५।१४)। निहत्य च मुदा युक्तः सोऽनुबन्धं न दृष्टवान् (भा० शां० १७२।३)। त्रिवर्गे त्रिविधा पीडा ह्यनुबन्धस्तथैव च (भा० आदि० १४०।६६)। **अनुबन्धः फलम्।** केवलं वीर्यमत्तेन नानुबन्धो विचारितः (रा० ६।४०।८)। **परिणतिर्नावधारितेत्याह।** अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु (भा० उ० ३४।८)। **सानुबन्धानि कर्माणि=साभिप्रायाणि =साभिसन्धि कृतानि।** अनुबन्धं च सम्प्रेक्ष्य विपाकं चैव कर्मणाम् (भा० उ० ३४।८)। **उक्तोऽर्थः।** अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः (मनु० ८।१२६)। **अनुबन्धोऽभिप्राय इति वर्तमाना अचिरातीता वा सम्प्रदायानभिज्ञा विवरीतारः।** कुल्लूकस्त्वाह—**पुनः पुनरिच्छातोऽपराधकरणमनुबन्ध इति।** पुरुषशक्त्यपराधानुबन्धविज्ञानाद् दण्डनियोगः (गौ० ध० सू० २।४।४८)। **अनुबन्धोऽभ्यास इति हरदत्तः।** एतेन कुल्लूकोक्तं समर्थनां लभते। यदग्रे चानुबन्धे च सुखम् (गीता १८।३९)। **अनुबन्धे पर्यन्ते।** विरात्रे चागत कस्मात्कोऽनुबन्धश्च तेऽभवत् (भा० सावित्री०)। **अनुबन्धः=प्रतिबन्धः। अनुबन्धेन** पुष्पाणाम् (रा० ५।३।४३-४४)। **अनुबन्ध उद्गमः।** न बन्धुष्वनुबन्धस्ते (भा० शां० ३२६।४९)। **अनुबन्ध आसक्तिः।** तेनानुबन्धं मन्यते धार्तराष्ट्रः शक्यं हर्तुं पाण्डवानां ममत्वम् (भा० उ० २६।२४)। **बध्नातीति बन्धो राज्यादिः, तमनुसृत्य वर्तमानं पाण्डवानां ममत्वम् इत्येवं विवृणुते नीलकण्ठः।** अथानुबन्धं कुर्वीत स रोगी च बली भवेत् (का० सं० चि० मदा० श्लो० ४९)। अनुबन्धपरे जन्तावसंसक्तेन चेतसा (यो० वा० ५।७७।१३)। **अनुबन्ध आनुलोम्यम्। मुख्यानुयायी शिशुरप्यनुबन्ध इत्याभिधानिकाः। अनुबन्धी तु** हिक्कायां तृष्णायामपि योषिति इति मेदिनी। **अनुबन्धिका गात्रसन्धिपीडा भवति, तथा च हर्षचरिते चतुर्थे उच्छ्वासे कवेः प्रयोगः**—अनुबद्धमनुबन्धिकाभिः। अपि त्वदर्पितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् (कु० ५।३४)। **अनुबन्धोऽस्यास्तीत्यनुबन्धी नैरन्तर्यवान्। अविघ्न इत्यर्थः।** आर्यासहायमहमद्य गुरुं दिदृक्षुः प्राप्तोस्मि तुष्टहृदयः स्वजनानुबद्धः (प्रतिमा० ७।३)। **अनुबद्धोऽनुगतः।** अनुबद्धमनुबन्धिकाभिः (हर्ष० ५)। **अनुबद्धमनुगतं व्याप्तम्।** रामवित्रासितान्सर्वाननुबद्धानिवेषुभिः (रा० ४।१९।७)। **अनुबद्धान्=अनुसृतान्।** सखीजनानुबद्धां कथाम् (दशकु०)। **सखीसक्तां सखीसम्बद्धाम्।** अनुबद्धमुग्धकाकलीहसितम्। (उत्तर० ३)। **अनुबद्धदिवसयुद्धपरिश्रान्तः** (प्रतिज्ञा० १)। **अनुबद्धमविरतम्।** भर्ता शङ्कितो देवीं पुनरप्यनुबन्द्धुं प्रवृत्तः (मालविका १)। **निर्बन्धेन प्रष्टुमित्यर्थः।** गौरनुबन्ध्योऽजोऽग्नीषोमीयः। **वधार्थं बन्ध्योऽनुबन्ध्यः। कर्मणि ण्यत्। अनुबन्ध्येति** स्त्रियां

ष्टाबन्तस्तल्लक्षणां गामाह—यथा नियोगधर्मो नानुबन्ध्यावधोपि वा इति याज्ञवल्क्ये (२।११७)। मिताक्षरायामुद्धृतमन्यदीयं वचः। **अनुबन्ध्यो मुख्यः**, यथानुबध्यो रोगो धातुर्वा। विषयेच्छानुबन्धिन्यो निसर्गात्प्राणिनां धियः (वा० कामसू० टी०)। **विषयाद्यभिलाषानुसारिण्य इत्यर्थः**। दुःखं दुःखानुबन्धि (विक्रम० ४)। **दुःखेन संसक्तं दुःखान्तरमित्यर्थः**। गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव (रघु० १।२२)। **अनुबन्धित्वात् सहचारित्वात्। गुणा गुणान्तरैः (विरुद्धैः) संसृज्यन्त इत्यत इत्यर्थः**। नीलकण्ठकेकानुबन्धिना मन्द्रहुङ्कृतेन मामनुमन्यते (मालती० ६)। **केकानुबन्धिना=केकामिश्रितेन**। सुखानुबन्धी (सुश्रुत० १।४७।८)। **सुखसंवित्तिजनकः। रोग एष सुदुस्तरो वर्षगणानुबन्धी** (सुश्रुत० १।२८७।१६)। **बहुवर्षाणि भावीत्याह। वर्षपूगमभिव्याप्य स्थातेत्यर्थः।**

**—बुध्** (**बुध अवगमने**)। सर्वो हि कृतमनुबुध्यते (श० ब्रा० २।२।३।१७)। **कृते जागर्ति, कृतं सम्यगनुभवति, संवेत्ति**। यस्य वीर्यं प्रथमस्यानुबुद्धम् (अथर्व० ४।२४।६)। **अनुबुद्धम्=प्रतीतम्, अवगतम्=विदितम्। सार्वलौकिकमित्यर्थः**। नान्वबुध्यत संसुप्तमुत्सङ्गे स्वे वृकोदरम् (भा० आदि० १३३।१७)। **नान्वबुध्यत=नाजानात्। अनुशब्दोऽकिञ्चित्करः।** अये सम्यगनुबोधितोस्मि (शा० १)। **स्मारितोस्मीत्याह। अथ प्रबोधनमनुबोध इत्यमरः। स्नानादिना गतस्य गन्धस्य यत्नेनोद्बोधनमनुबोध उच्यते।**

**—ब्रू** (**ब्रूञ् व्यक्तायां वाचि**)। अथ यदेवानुब्रुवीत तेनर्षिभ्य ऋणं जायते (श० ब्रा० ५।१।७।२)। **अनुब्रुवीत=अधीयीत (वेदमिति शेषः)**। ता एता नवानन्तरायमन्वाह (ऐ० ब्रा० २।२०)। **अनुवचनमध्ययनमुच्चारणं भवति। अनुशब्दोऽनुक्रममावृत्तिं वाऽऽह। यो जुष्टं देवेभ्योऽनुब्रवत्** (श० ब्रा० १।५।१।१८)। **अनुब्रवत्=स्वाध्यायमधीयीत।** यो वेदमनुब्रूते (शिष्येभ्यः) (शां० श्रौ० १५।१६।६)। **अध्यापयतीत्यर्थः।** इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहि (का० श्रौ० ६।७।१६)। **अनुब्रूहि=आवह**। अनुब्रुवाणो अध्येति न स्वपन् (ऋ० ५।४४।१३) **गुरुमुखाच्छ्रुत्वा पश्चाद् ब्रुवाणः, कण्ठतः शिक्षमाण इत्याह।** एकः शास्ता न द्वितीयोस्ति शास्ता यो हृच्छयस्तमहमनुब्रवीमि (भा० आश्व० २६।१)। **अनुब्रवीमि=इति स्वं मतमुदाहरामि।**

**—भाष्** (**भाष व्यक्तायां वाचि**)। यथा यथा नरोऽधर्मं स्वयं कृत्वानुभाषते (मनु० ११।२२८)। **अनुभाषते ख्यापयतीत्यनर्थान्तरम्।** यथा यथा नरः सम्यगधर्ममनुभाषते (भा० अनु ११२।७)। **अनुभाषते पुनः पुनः सनिन्दं वक्ति।** सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च (मनु० ३।३०)।

**नियम्येति** कुल्लूकः। अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम् (भा० उ० ५८।२६)। **पुनरुक्त्वेत्यर्थः। अनुभाषाऽनुलापो** भवति। दूताः किमपराध्यन्ते यथोक्तस्यानुभाषिणः (भा० उ० १६२।३६)। **अनुभाषिणः=अनुदेष्टारः, परप्रणीतानि वचांस्युदाहरन्तः।** अस्मान्वेत्थ परान्वेत्थ वेत्थार्थाननुभाषितुम्। यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः (भा० उ० ७२।६२)॥ **अनुभाषितुम्=अन्वाख्यातुम्, पौर्वापर्येण यथावद् भाषितुम्।**

—भुज् (भुज पालनाभ्यवहारयोः)। मेघमुक्तविशदां स चन्द्रिकामन्वभुङ्क्त (रघु० १६।३६)। **क्रमेणाभुङ्क्तेत्याह।** सा मण्डनान्मण्डनमन्वभुङ्क्त (कु० ७।५)। **उक्तोऽर्थः।**

—भू (**भू सत्तायाम्**)। उभे यत्त्वा भवतो रोदसी अनु (ऋ० १०।१४७।१)। **त्वाऽनुभवतः=त्वदभिमुखीभवतः।** न ते महित्वमनु भूदध द्यौर्यदन्यया स्फिग्या क्षामवस्थाः (ऋ० ३।३२।११)। **तव महिम्नः पारमयादित्याह।** यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति (छां० उ० ७।३।१)। **अनुभवति=अन्तर्भावयति=संभवति=समावेशयति।** य एवैतमनुभवति यो वै तमनु भार्यान्बुभूर्षति (बृह० उ० १।३।१८)। **अनुभवति=साध्वाचरति, तस्मिन्सद् व्यवहरति।** अथो व उशती कीर्तिर्लोकाननुभविष्यति (भा० पु० ४।३०।११)। **आ लोकानां स्थितेः स्थास्यति, लोकानभिव्याप्स्यतीति वार्थः। (पा० ५।२।१०) सूत्रं व्याचक्षाणो वृत्तिकारः पुत्रपौत्रीणा लक्ष्मीरिति उदाहरति व्याख्याति च पुत्रान्पौत्रांश्चानुभवतीति। तत्रानुभवतिर्व्याप्त्यर्थ इति स्पष्टम्।** वेदान्नानुभवसि (छां० उ० ६।७।३)। **अनुभवसि=स्मरसि, अवगच्छसि।** अनुभूयतामयं वीराः स्वयंवर इति प्रभो (भा० वन० ५४।६)। **साक्षात्क्रियताम् इत्याह।** वक्तव्याश्चापि राजानः सर्वे सहसुहृज्जनैः······युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम् (भा० आश्व० ७६।२३)॥ **उक्तोऽर्थः।** करसादोऽम्बरत्यागस्तेजोहानिः सरागता। वारुणीसङ्गजावस्था भानुनाप्यनुभूयते॥ अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम् (शा० ५।७)। **अनुभवति=सहते।** न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ। अनुभूता मया चासौ तेन चान्वभविष्यहम् (भट्टि० ५।३५)॥ **अत्रानुभूतिः परीक्षणार्थकः।** आमोदो नहि कस्तूर्याः शपथेनानुभाव्यते। **अनुभाव्यते=अनुमीयते।** तस्मात्परोक्षवृत्तीनां फलैः कर्मानुभाव्यते (हितोप० ४।१०१)। **अनुमीयते, उन्नीयते, तर्क्यत इत्यर्थः।** मनसा तमेव वृत्तान्तमन्वभावयत्। **अचिन्तयदित्यर्थः।** अनुभाविनां च परिवापनम् (आप० ध०

सू० १।३।१०।६)। **अनुभाविनां शावं दुःखमनुभवताम्। मृतमपेक्ष्य पश्चाज्जातानामवरवयसामित्येके।** अनुभावविशेषात्तु सेनापरिवृताविव (रघु० १।३८)। **अनुभावविशेषात्=तेजःप्रकर्षात्।** संभावनीयानुभावाऽस्याकृतिः (शा० ७)। **अनुभावः प्रभावः, अधिकारः। भावस्य बहिः प्रकाशनमनुभावः।** भावं मनोगतं साक्षात्स्वगतं व्यञ्जयन्ति ये। ते**ऽनुभावा** इति ख्याताः......॥ **अनुभावः** प्रभावे स्यात् सतां च मतिनिश्चये इत्यमरः। **अनुभावो** निश्चये स्यादिति विश्वप्रकाशः पठति। अनुभावांश्च जानासि ब्राह्मणानां न संशयः। प्रभावांश्चैव वेत्थ त्वं सर्वेषामेव पार्थिव (भा० वन० २४।८)॥ **अनुभावस्तेजो निश्चयो वा। कर्तव्याकर्तव्यविषयकान्निश्चयानिति** नीलकण्ठः। गर्भमाधत्त राज्ञी। गुरुभिरभिनिविष्टं लोकपालानुभावैः (रघु० २।७५)। **अनुभावैस्तेजोभिरिति मल्लिः। लक्ष्मभिरित्यपरे।** अनुभावात्तु जानामि महर्षेर्भावितात्मनः (रा० ४।६३।२०)। **अनुभावः प्रभावः।** आश्चर्यमपरित्याज्यो दृष्टनष्टापदामपि। अविवेकान्धबुद्धीनां स्वानुभावो दुरात्मनाम् (कथा० ३।३७)॥ **अनुभावो मनोवृत्तिः, अभिनिवेशो विस्रम्भो वा। महानुभावः पुरुषः, महनीयाकृतिः, महाप्रतापो वा।** जनार्दनस्मरणानुभावः (वि० पु० १।१७।४४)। अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् (याज्ञ० २।२९२ इत्यत्र मिताक्षरायां नारदवचनम्)। **अनुभूय=उपभुज्य।** संवत्सरमात्रं प्रेष्यभावमनुभूय (माल०)। **अनुभूय=निर्विश्य, निषेव्य।** यावदहं स्नानभोजने अनुभूय सज्जो भवामि गन्तुम्, तावत्प्रतिपालय। **अनुभूय=कृत्वा=निर्वर्त्य।** अनुभूता भविष्यामि यच्छ कोपं महाद्युते (हरि० १।५।५४)। ब्रह्मणि एकभक्त्यनुभाविते (भा० पु० ३।१४।४३)। **अनुभाविते=अपरोक्षीकृते।** स्नानभोजनादिकमनुभावितोस्मि (दशकु०)। **कारितोस्मीत्यर्थः।** वयं च सर्वे भवताऽनुभाविताः (भा० पु० १०।६२।३७)। **रक्षिता इत्यर्थः।** अनुभावी तु यः कश्चित्कुर्यात्साक्ष्यं विवादिनाम् (मनु० ८।६९)। **अनुभावी प्रत्यक्षदर्शी, साक्षाद् द्रष्टा।**

**—मद् (मदी हर्षे)।** वाग् हैवानुममाद प्रहर जहीति (श० ब्रा० २।५।४।६)।

**—मन् (मन ज्ञाने, मनु अवबोधने)।** तत्र नाहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम् (रघु० ११।३९)। **अनुमन्तुम्=अनुज्ञातुम्।** इमां स्वसारं च यवीयसीं मे कुमुद्वतीं नार्हसि नानुमन्तुम् (रघु० १६।८५)। **अनुमन्तुमभ्युपगन्तुम्। न नार्हसि=अर्हस्येव।** अनुमान्यतां महाराजः (विक्रम० २)। **तदनुज्ञालाभः क्रियतामित्याह।** भूयोपि सखीजनमनुमानयिष्यामि (शा० ३)। **सखीजनमनुमानयितुमनुज्ञापयितुं यतिष्य इत्युक्तं भवति।** अन्नमादाय तृप्ताः

स्थ शेषं चैवानुमान्य च (याज्ञ० १।२४१)। **शेषमनुमान्य=शेषोपभोगेऽनुमतिं प्राप्य।** धर्मार्थविभिसन्त्यज्य संरम्भं योऽनुमन्यते (भा०)। **अभ्युपैति सेवत इति वार्थः।** द्वारे नियुक्तपुरुषानुमतप्रवेशः (माल० १।१२)। **अनुमतोऽनुज्ञातः।** कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम् (वेणी० ३।२४)। **अनुमतमनुमोदितम्।** प्रथमं कस्यानुमते चोरितमेतत् त्वया हृदयम् (विक्रम० ३।१७)। **कस्यानुमते =कस्यानुमत्या, केनानुज्ञातः, कस्यानुरोधेन।** उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते। तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः (रा० २।७५।४४)॥

**—मन्त्र् (मत्रि गुप्तपरिभाषणे)।** विसृष्टश्च वामदेवानुमन्त्रितोऽश्वः (उत्तर० २)। **अनुमन्त्रितः=अभिमन्त्रितः=मन्त्रैः संस्कृतः।** मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्। शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥ इति शौनकेन स्मर्यत इति (ऐ० ब्रा० २।२१) षड्गुरुशिष्यः।

**—मा (मा माने, माङ् माने)।** अनु ते द्यौर्बृहती वीर्यं ममे (अथर्व० २०।१५।५)। **अनुममे=अनुक्रमेण परिमाति मिमीते परिच्छिनत्ति।** अलिङ्गां प्रकृतिं त्वां लिङ्गैरनुमिमीहे (भा०)। **अनुमितिविषयतामुपनयामः।** नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः। **प्रत्यक्षदृष्टोऽर्थोऽविषयोऽनुमानस्येत्यर्थः।** पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते (कु० २।२५)। **अनुमीयते =तर्क्यते, उन्नीयते।** आकृतिरेवानुमापयत्यमानुषताम् (का०)। **अमानुषताया अनुमां जनयति।** आत्मनो हृदयानुमानेन प्रेक्षसे (शा० ५)। **हृदयसादृश्येनेत्याह।** स्वानुमानात् कादम्बरीमुत्प्रेक्ष्य (का०)। **उक्तोऽर्थः।** मर्तव्यमिति यद् दुःखं पुरुषस्योपजायते। शक्यस्तेनानुमानेन परोपि परिरक्षितुम् (हितोप० १।६१)॥ **अनुमानेन=सादृश्यानुमानेन।**

**—मुद्** (मुद हर्षे)। यं प्रजा अन्वमोदन्त पिता पुत्रानिवौरसान् (भा० द्रोण० ५९।५)। **अन्वमोदन्त=प्रत्यनन्दन्, दृष्ट्वा प्राहृष्यन् इत्यर्थः।** नैतत्पूर्वं जनाश्चक्रुर्न करिष्यन्ति चापरे। इत्यम्बरीषं नाभागिमन्वमोदन्त दक्षिणाः (भा० शां० २९।१०२)। **अन्वमोदन्त=अस्तुवन्। दक्षिणा विचक्षणा दाक्ष्ययुक्ता लोकाः।** अनुमोदस्व मामरण्यगमनाय (महावीर० ४)। **अनुमोदस्व =अनुजानीहि।** न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा (रघु० १४।४३)। **अनुमोदितुम्=साध्विदमनुष्ठीयतामित्यनुमतिवचनेन स्वं हर्षं व्यङ्क्तुम्।** तदेव राममातृभिश्चानुमोदितम् (उत्तर० २)। **प्रतिनन्दितम्, अभिनन्दितम्, सहर्षमभ्युपेतम् इत्यर्थः।**

—मृज् (**मृजू शुद्धौ**)। लोमान्यनुमार्ष्टि अनुलोमयति। अपि वा इषे त्वेत्याच्छिनत्त्यूर्जे त्वेति सन्नमयन्ननुमार्ष्टि वा (आप०श्रौ० १।१।११)। **मूलादारभ्या-**

ऽऽग्रात्स्पर्शनमनुमार्जनमिति धूर्तस्वामी भाष्यकारः । विष्णोः स्तूपोऽसीति कर्षन्निवाहवनीयं प्रति प्रस्तरमपादत्ते न प्रतिमार्ष्टि नानुमार्ष्टि (आप० श्रौ० २।३।८।५) । उक्तोऽर्थः । जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च (भा० शां० ८१।१६) । अनुमृज्य प्रीतिगुणमाधाय ।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः) । भद्रे हृदयमप्येतदनुमृश्योद्धरस्व मे (रा० २।११।६) । अनुचिन्त्य, अनुमायेत्यर्थः ।

—यज् (यज देवपूजासंगतिकरणदानेषु) । तमग्निष्टोमेनानुयजति (का० श्रौ० १६।१४ इत्यत्र टीकाकृतो वचनम्) । अनुयजति=अन्वर्चति ।

—यत् (यती प्रयत्ने) । अनु जनान् यतते पञ्च धीरः (ऋ० ६।६२।३) । जनाननुयतते=जनार्थं यतते चेष्टते ।

—यम् (यम उपरमे)। मनः पश्चादनु यच्छन्ति रश्मयः (ऋ० ६।७५।६) । रथस्य पृष्ठभागे वर्तमाना रश्मयः पुरतो वर्तमानान् वाजिनः सारथेर्मनोऽनुकूलं नियच्छन्तीत्याह । तां (सीताम्) पूषानुयच्छतु (ऋ० ४।५७।७) । अनुयच्छतु= नियमयतु । क्षुभा मर्तमनुयतं वधस्नैः (ऋ० ५।४१।१३) । त्वरयाऽनुक्रान्तमायुधैरित्युक्तं भवति । पितॄणां शक्तीरनुयच्छमानाः (ऋ० १।१०६।३) । अनुयच्छमानाः स्वस्मिन्दधतः ।

—या (या प्रापणे) । तिष्ठन्तमनुतिष्ठन्ति यान्तं यान्ति दिवौकसः (मार्क० पु० १८।२४) । अनुयान्ति=अनुचलन्ति । एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः (हितोप०) । गङ्गां चैवानुयास्यामः (भा० आदि० १२८।३६) । उपैष्याम इत्यर्थः । न किलानुययुस्तस्य राजानो रक्षितुर्यशः (रघु० १।२७) । न प्रापुरित्यर्थः । नानुचक्रुः, न तुलयामासुरिति तात्पर्यम् । अस्य वीर्यवतो वीर्यं नानुयास्यन्ति पार्थिवाः (भा० सभा १६।७) । तेषां कश्चरितं शक्तस्त्वनुयातुम् (मार्क० १३३।६) । उक्तोऽर्थः । अनुयातः स्ववीर्येण वासुदेवम् (भा० वन० १४१।२०) । अनुयातः=तुल्यतां गतः ।

—याच् (टुयाचृ याच्ञायाम्) । अदित्या देवतानां च मम चैवानुयाचितम् (रा० १।२६।१५) । अनुयाचितं क्रमेण याचितम् (वरम्) ।

—युज् (युजिर् योगे) । नैव प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते । युञ्जानमनुयुञ्जीत न श्रियः संक्षये वसेत् (भा० वन० २६७।१८) ।। अनुयुञ्जीत=तेन योगं सम्बन्धं भजेत् । प्राड्विवाकोऽनुयुञ्जीत विधिना तेन सान्त्वयन् (मनु० ८।७६) । अनुयुञ्जीत=पृच्छेत् । शकुने वयं स्म देवा वै साध्यास्त्वामनुयुङ्क्ष्महे (भा० शां० २६६।४) । उक्तोऽर्थः । किं वस्तु विद्वन्गुरवे प्रदेयं त्वया कियद्वेति

तमन्वयुङ्क्त (रघु० ५।१८)। ता त्वया नानुयोक्तव्या कासि कस्यासि चाङ्गने (भा० आदि० ६७।२२)। यद्वै राजन्यात्पराग्भवति रथेन वैतदनु-युङ्क्ते (श० ब्रा० ५।४।३।२)। **तदनुयुङ्क्ते=तदवाप्नोति, तद् गृह्णाति।** वसुन्धरायाः साह्यार्थमंशं स्वं नानुयुञ्जसे (=नानुयुङ्क्षे) (हरि० १।५४।१७)। **नानुयुञ्जसे=न नियोजयसि।** यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः (भा० शां० २९९।२३)। **अनुयुञ्जकाः—सासूया लोकाः। मत्सरिण इत्यर्थः। स्पर्धावन्त** इति तु **नीलकण्ठः।** अनुयोक्ता च यो विप्रोऽनुयुक्तश्च भारत (भा० अनु० २३।१७)। **अनुयोक्ता भृतकाध्यापकः। अनुयुक्तो भृतकाध्यापित इति नीलकण्ठः।** यास्मि सास्म्यनुयोगो मे न कर्तव्यः कथंचन (भा०अनु० ९३।८२)। **अनुयोगः प्रश्नः।** अनियन्त्रणानुयोगस्तपस्विजनो नाम (शा० १)। **उक्तोऽर्थः।** नानुयोगा ब्राह्मणानां भवन्ति (भा० वन० १९२।५६)। **अनुयोगो धिक्कारो दण्डो वा।** अनुयोगं विना तैलं तिलानां नोपजायते (पञ्चत० २।१४०)। **अनुयोगोभियोगो यत्नः।** पूर्ववैरानुयोगेन स्नेहयोगेन वै पुनः (देवी-भा० ४।२।११)। **अनुयोगेन=अनुबन्धेन।** तदा तप्स्यस्यर्जुनस्यानुयोगात् (भा० कर्ण० ३९।१४)। **अनुयोगः पार्थविषया पृच्छा क्वासाविति।**

—**रक्ष्** (**रक्ष पालने**)। के पृष्ठतोऽन्वरक्षन्त (भा० द्रोण० १५५।५)। **के चास्य पृष्ठतोऽगच्छन्** इति पाठान्तरम्। **अनुशब्दो व्याप्तौ।** शाङ्खायन-श्रौतसूत्रे (१६।१०।११) ऽनुरक्षे रिरक्षिषयाऽनुसरणेऽर्थे प्रयोगः।

—**रञ्ज्** (**रञ्ज रागे**)। अन्वरज्यदतुषारकरः(शिशु० ९।७)। **रक्तोऽभव-दित्यर्थः। अनुशब्दः सादृश्ये।** सन्ध्यानुरक्ते नभसि (व० बृ० सं २४।१८)। **उक्तोर्थः।** यथेयमनुरज्यते प्राची दिक्, विध्वंसते च तम इति निरुक्ते (१।५।४) दुर्गः। **अनुरज्यते=रक्ता भवति। नार्थोऽनुना।** तापानुरक्तमधुना कमल ध्रुवमीहते जेतुम् (नागा० ३।१०)। **उक्तोऽर्थः।** समस्थमनुरज्यन्ति विषमस्थं त्यजन्ति च (रा० ३।६।१६)। **अनुरज्यन्ति=अनुरक्ताः प्रीतिमत्यो भवन्ति।** भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः (मनु०३।१७३)। **अनुरज्येत =कामप्रवेदनीं चेष्टामाविष्कुर्यात्।** तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च (गीता ११।३६)। **भक्तिमान् भवतीत्यर्थः।** पित्रापरञ्जितास्तस्य प्रजास्तेनानु-रञ्जिता. (हरि०१।५।३०)। **अनुरञ्जिताः=स्वस्मिन्ननुरक्ताः कृताः।** सर्वलोकोऽनुरज्येत कथ त्वनेन कर्मणा (रा० २।५८।२८)। **अनुरज्येत= प्रसीदेत्।** कष्ट जनः कुलधनैरनुरञ्जनीयः (उत्तर० १।१४)। **उक्तोऽर्थः।**

—**रम्** (**रमु क्रीडायाम्**)। क्षत्रधर्मेष्वनुरतः (रा० ३।४।६)। **क्षत्रधर्मेषु प्रहृष्टः।**

—राज् (राजृ दीप्तौ)। उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानुराजति (ऋ० २।४३।१)। अनुराजति=अनुकरोति। सोमो विराजमनु राजति ष्टुप् (ऋ० ९।९६।१८)। उक्तोऽर्थः।

—राध् (राध साध संसिद्धौ)। अन्वेषामरात्स्म (तै० ब्रा० १।५।२।८)। राद्धा इमेऽस्माभिरित्युक्तं भवति।

—री (रीङ् स्रवणे)। वर्त्मान्येषामनु रीयते घृतम् (ऋ० १।८५।३)। अनुप्रवहतीत्यर्थः। अहिं बुध्न्यमनुरीयमाणः (वा० स० १०।१९)। उक्तोऽर्थः।

—रु (रु शब्दे)। चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः। अनुरौति स्म (भा० पु० १०।१५।१३)। अनुरौति स्म तेषां रुतमनुकरोति स्म।

—रुद् (रुदिर् अश्रुविमोचने)। गुरुशोकामनुरोदितीव माम् (कु०४।१५)। अनुशोचतीवेत्यर्थः।

—रुध् (रुधिर् आवरणे, अनो रुध कामे)। शिलाभिः शङ्कुभिर्वापि श्वभ्रैर्वा भरतर्षभ। ये मार्गमनुरुन्धन्ति (भा० अनु० २३।७७)। अनुरुन्धन्ति =रुन्धन्ति=उपरुन्धन्ति। अनुशब्दोऽस्थाने।...आर्षेण वर्त्मना प्रस्थिता नानुरुन्धन्ति श्रोतृचित्तानुवर्तनम् (राज० ३।९५)। अनुरुन्धन्ति=अनुसरन्ति। यत्त्वमद्यापि राममेवानुरुध्यसे (भा०वन०२८१।२८-२९)। अनुरुध्यसे=कामयसे। नानुरुध्ये विरुध्ये वा न द्वेष्मि न च कामये (भा० शां० २६२।१०)। अनुरुध्ये=अनुकूलमाचरामि। नानुरोत्स्ये जगल्लक्ष्मीम् (भट्टि० १६।२३)। न कामयिष्ये, नैषिष्यामि। श्रुतवानसि यत्कर्म कृतवानसि भार्गव। अनुरुध्यामहे ब्रह्मन् पितुरानृण्यमास्थितम् (रा० १।७६।२)॥ अनुरुध्यामहे=अङ्गीकुर्मः, आद्रियामह इति तिलककारो रामः। इष्टान् भोगान्नानुरुध्येत् सुखं वा (भा० शां० २८६।१३)। अनुरुध्येत्=अनुरुध्येत=कामयेत। समस्थमनुरुध्यन्ते विषमस्थं त्यजन्ति च (रा० ३।९।१६)। अनुरुध्यस्व भगवतो वसिष्ठस्यादेशम्। अनुरुध्यस्व=अनुवर्तस्व=अनुतिष्ठ। अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे (ऋ० ८।४३।९)। अनुरुध्यसे=स्वस्मिन्नन्तर्धत्से। अनुरुन्ध्यादघं त्र्यहम् (मनु० ५।६३)। त्रीण्यहान्यघमनुगतः स्यात्। अर्वाग् दिवसत्रयान्नाशौचान्मुच्यत इत्यर्थः। धर्मार्थावनुरुध्यन्ते त्रिवर्गासम्भवे नराः (भा० उ० १२४। ३४)। अनुरुध्यन्ते=अनुसरन्ति=सेवन्ते। इमाममूलां गोविन्दराजोक्तिं नानुरुन्ध्महे (मनु० ४।७) इत्यत्र कुल्लूकवचनम्। नानुमन्यामहे=नाभिनन्दामः, नाभ्युपेमः। नियाति लोक इवानुरुध्यते (कि०२।१२)। अनुरुध्यते=अनुसरति। यदि भवाननुरुध्यते (महावीर० ४)। अनुमन्यत इत्यर्थः। हन्त तिर्यञ्चोपि

परिचयमनुरुध्यन्ते (उत्तर० ३)। **परिचयस्यानुकूलमाचरन्तीत्यर्थः**। यदि गुरुष्वनुरुध्यसे (महावीर०३)। **यदि गुरूनाद्रियस इत्याह**। इत्यादिभिः प्रियशतैरनुरुध्य मुग्धाम् (उत्तर०३।२६) **अनुरुध्य=उपच्छन्द्य, अनुनीय, प्रसाद्य**। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते (वा०प० ३।३२९)। **अनुरुध्यते=अनुसरति**। विशेषणं गुणत्वाद्विशेष्यकालमनुरुध्यते (पा० ३।४।१ इत्यत्र काशिका)। **उक्तोऽर्थः**। भूयोऽर्थं नानुरुध्यत् स (मुनिरत्रिः) धर्मव्यक्तिनिदर्शनात् (भा० वन० १८५।२)। **फलाभिव्यक्तेर्दर्शनात् फलेन हि धर्मो नश्यतीति दृष्ट्वा भूयोऽत्यन्तमर्थं नाकामयतेत्याह**। निजप्रतिज्ञामनुरुध्यमाना महोद्यमाः कर्म समारभन्ते। **अत्रानुरोधोऽनुसरणमाह**। आश्रमे वासमनुरुध्य (रा० ७।४८।५)। **आश्रमवासे सुखं निर्विश्येत्यर्थः**। तया चाहमनुरुध्यमानस्तां बकुलमालां दत्तवान् (मालती० १)। **अनुरुध्यमानः—सम्प्रार्थ्यमानः प्रचोद्यमानः। अनुबध्यमान इति पाठान्तरम्**। न पिताऽप्यनुरोद्धव्यः स्वामिसेवापरात्मभिः (शि० भा० ११।३३)। **अनुरोद्धव्यः =अनुसर्तव्यः=अनुवर्तितव्यः**। मनोऽनुरुन्धती भर्तुरिति मां विद्ध्यरुन्धतीम् (भा० अनु० ९३।१००)। **अनुरुन्धती=आद्रियमाणा**। लोकगाथामनुरुन्धानः (सर्वद० २,१)। **उक्तोऽर्थः**। अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः (भा० शां० २७८।१४)। **अनुरोध आनुकूल्यम्**। धर्मानुरोधात् (का०)। **अनुरोधः =अनुसारः**। कविश्रमानुरोधाद्वा (वेणी० १)। **अनुरोध आदरः, सम्भावना**। दत्तोत्सेकः प्रलपति मया याज्ञवल्क्यानुरोधात् (महावीर० ३।२८)। नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि (मनु० २।१०५)। **अनुरोध आदरः**। गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् (रा० २।३०।३६)। **गुरुशुश्रूषानुसरणेनेत्याह**। **अनुरोधोऽनुसरणम्**। वदेद् विपश्चिद् महतोऽनुरोधात् (पञ्चत० १।११३)। **महतोऽनुरोधात्=महत्या प्रत्यवेक्षया। अदभ्रेण प्राक्चिन्तनेन**। को विनतेऽनुरोधः (पा० ८।३।६१ इत्यत्र काशिकायाम्)। **अनुरुध्यत आनुकूल्येन प्राप्यत इत्यनुरोधः प्रयोजनम् इति पदमञ्जरी**। विनाऽनुरोधात्स्वहितेच्छयैव (शिशु० २०।८१)। **अनुरोधः प्रार्थना**।

—लप् (लप व्यक्तायां वाचि)। मिथ्यानुलापिना नित्यं निजच्छद्मापलापिना (शि० भा० २३।३७)। **अनुलापो मुहुर्भाषा** (अमरः)। **तेनानुलपता बावद्यमानेनेत्युक्तं भवति**।

—लभ् (डुलभष् प्राप्तौ)। पराञ्चं धावन्तमनुलिप्सेत (श० ब्रा० ३।२।१।३६)। **पराङ्मुखं धावन्तमासादयितुमिच्छेदित्यर्थः**।

—लिप् (लिप उपदेहे)। हरिभिरचिरभासां तेजसा चानुलिप्तैः। (शा०७।७)

अनुलिप्तैरुपदिग्धैः । स्नातानुलिप्तः । **पूर्वं स्नातः पश्चात् कृतचन्दनादिलेपः** (पा० २।१।४६ इत्यत्र काशिकायामुदाहरणम्)। स्नापयित्वाऽनुलिप्य च (कथा० ६२।३६)। **उक्तोऽर्थः ।** चन्दनानुलिप्ता ब्राह्मणी (पा० ४।१।५१ इत्यत्र काशिकायां प्रत्युदाहरणम्) । **अनु शब्दो व्याप्तौ सर्वतो भावे ।** गात्रानुलेपनी वर्तिः (अमरे) ।

—**वच्** (**वच व्यक्तायां वाचि, ब्रूञ आदेशो** वा) । एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः (काठक-संहिता) । **अधीतवानसीत्यर्थः ।** दधन्वे वा यदीमनु वोचद् ब्रह्माणि (ऋ० २।५।३) । **अनुवोचत्=अनुवक्ति । शस्त्राणि शंसतीत्यर्थः ।** तदु हैतदेवारण्ये ब्रह्मवर्चसकामाय तक्षानूवाच (श० ब्रा० २।३।१।३१) । **अनूवाच=प्रोक्तवान्=व्याख्यातवान् ।** येषां द्विजानां सावित्री नानूच्येत यथाविधि (मनु० ११।१६१) । **उपनयननिमित्तं नोच्चार्येतेत्याह ।** सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते (आप० ध० १।१।१।१०) । **प्रतिवेदं पादं पादमुद्धृत्य समुदिता गायत्री पठ्यत इत्यर्थः ।** तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसाऽनाशकेन (बृ० उ० ४।४।२२) । **वेदानुवचनेन=वेदाध्ययनेन।** वेदानुवचनाच्च (गौ० ध० १।१।११) । **अनुवचनमध्यापनम् ।** अहं ते नानुवक्तव्यो विशेषेण कदाचन (रा० २।२६।२६) । **अनुवक्तव्यः=स्तोतव्यः ।** अनूच्यमानास्तु पुनस्ते मन्यन्तु महाजनात् । गुणवत्तरमात्मानम्...॥ (भा० शां० २८७।२७) । **अनूच्यमानाः शिक्ष्यमाणाः ।** यो ब्राह्मणो विद्यामनूच्य न विरोचते (तै० सं० २।१।२।८) । **अनूच्य=अधीत्य ।** वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति (तै० उ० १।११) । **अनूच्य=अध्याप्य । योऽनूचानः स नो महान्** (मनु० २।१५४) । यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । गृणन्ति सत्यकर्माणम्...(भा० शां० ४७।२६) । **अनुवाकेषु मन्त्रार्थविवरणभूतेषु ब्राह्मणवाक्येषु इति नीलकण्ठः ।** अनुवाचय तावत् । यद्यविरुद्धं श्रोष्यामि (मुद्रा० १) । **आत्मानं प्रति वाचयेत्याह । अनुच्चैरात्मानं श्रावयन्पठेत्यर्थः ।** अनुवाचितलेखममात्यमवलोक्य (मुद्रा० १) । **उक्तोऽर्थः ।** उभे नाम मुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः (शा० १) । स यावदस्य वचः स्यात् । एवमेवानुविवक्षेत् (श० ब्रा० १।३।५।१४) । **अनुविवक्षेत्=सततं ब्रूयात् ।**

—**वद्** (**वद व्यक्तायां वाचि**) । अनुवदते **कठः** कलापस्य (पा० १।३।४६) । **यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः । अनुः सादृश्ये ।** अनुवदति वीणा गायकस्य (वृत्तौ प्रत्युदाहरणम्)=**गायकस्य स्वरमनुकरोति, अनुहरति ।** चित्तं वा इदं मनो वागनुवदति (श० ब्रा० ३।२।४।१६) ।

उक्तोऽर्थः । अनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः (रघु० ५।७४) । पूर्वमेवोदितमनुवदति (ऐ० ब्रा० २।४० इत्यत्र सायणः) । अनुवदति=पुनर्वक्ति । परिम्लानप्रायामनुवदति दृष्टिः कमलिनीम् (भोज० १।७२) । तया संवदतीत्यर्थः । अवान्तरप्रलयानन्तरं तु मनःप्रभृतिसृष्टावभिधानक्रमेणैव प्राथम्यप्राप्तिरित्येषा सृष्टिरादित इति निष्प्रयोजनोऽनुवादः स्यात् (मनु० १।७४ इत्यत्र कुल्लूकः) । अनुवादः पुनर्वचनम् । अनुवादे चरणानाम् (पा० २।४।३) । प्रमाणान्तरावगतस्यार्थस्य शब्देन संकीर्तनमात्रमनुवादः (काशिका) । ये त्वाऽनुवादेऽयुरवृत्तिकर्शिताः (भा० वि० ८।१७) । अनुवादे इति निमित्ते सप्तमी । अनुवादनिमित्तमित्यर्थः । पूर्वं देहीत्युक्त ाददत्तस्यैव क्षेत्रारामादेः प्रतिवर्षं पुनर्देहीति राजवचनं यदधिकारिणं प्रति तदनुवाद इति नीलकण्ठः । विधिविहितस्यानुवचनमनुवादः । नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः (न्याय० २।६५।६६) । कालानुवादं परीत्य (नि० १२।१३) । विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददात्पुमान् (भा० पु०) । अनुवादः=वचनोपक्रमः । आरम्भश्च साहसानुवादी (दशकु०) । उपक्रमः (आरम्भे चेष्टा) साहससदृशो भवति भविष्यत् साहसमनुमापयति । सदृक्सदृशसंवादिसजातीयानुवादिनः (काव्यादर्श २।५८) । एते पर्यायाः । गीतं शङ्खवादानुवादि (पञ्चत०) । शङ्खनादसदृशम् इत्यर्थः । प्रियवचनशतानुवादिनः (रा० ४।६२।२५) । प्रियवचनशतानां पुनः पुनर्वक्तार इत्यर्थः । अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् । अनुवाद्यमुद्देश्यम् ।

—वप् (डुवप् बीजसन्ताने) । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च) । अनूपा अनुवपन्ति लोकान्स्वेन स्वेन कर्मणा (नि० २।२२।१) । अनुगृह्णन्तीत्यर्थः । अयमपीतरोऽनूप एतस्मादेवाऽनूप्यत उदकेन । अनुप्रकीर्यतेऽभिषिच्यत इत्यर्थः ।

—वस् (वस निवासे) । युद्धार्थिनश्चानुवसन्ति पार्थान् (भा० उ० २२।२०) । अनुसरन्तीत्यर्थः ।

—वह् (वह प्रापणे) । तां वहन्त्वगतस्यानु पन्थाम् (अथर्व० १४।२।७४) । पन्थां पन्थानमनुवहन्तु=पथा प्रापयन्तु ।

—वा (वा गतिगन्धनयोः) । पर्णं न वेरनु वाति (रथः) (वा० सं० ६।१५) । अनुवाति=अनुक्रमेण वाति । अनुवृत्तगतिर्भवतीत्यर्थः । आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु द्यून् (ऋ० १।१४८।४) । अस्याग्नेः शोचिरर्चिरनुवाति अनुप्रविश्य वाति । वातस्य प्रवामुपवामनुवात्यर्चिः (का० श्रौ० १२।१३) । वातस्य प्रवामनुसरन्गच्छत्यग्नेरर्चिरित्यर्थः । अनुवाति शुभो

वायुः सेनाम् (रा० ५।७३।५२)। सेनामनु वाति=सेनायां वाति।

—वाश् (वाशृ शब्दे)। वामे वशित्वाऽऽदौ दक्षिणपार्श्वेऽनुवाशते यातुः (व० बृ० सं० ६५।२६)। **पश्चाच्छब्दायत इत्यर्थः।** हस्त्यश्ववश्वादयोऽनुवाशन्ते (व० बृ० सं० ५३।१०७)। **उक्तोऽर्थः।**

—वास् (**वास उपसेवायाम्**)। अवश्यं स्थापनीयाश्च नानुवास्याः कथं चन (सुश्रुते)। द्विधा वस्तिः परिज्ञेयो निरूहश्चानुवासनम्। कषायाद्यैर्निरूहः स्यात्स्नेहाद्यैरनुवासनम् (सुश्रुते)॥ पारिजातपुष्पस्य संस्पर्शेनानुवासितः (हरि० २।६६।१५)। **अनुवासित उपसेवितः, सुरभीकृतः, सौरभयुक्तः कृतः।** अनुवासनं च मतिमान् इति शास्त्रविनिश्चयः (का० सं० खिल० अन्तर्वत्नी० श्लो० २७)।

— **विद् (विद ज्ञाने)**। गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा (ऋ० ४।२७।१)। **अन्ववेदम्=साकल्येनाजानाम्।** यस्तमात्मानमनुविद्य विजानाति (छां० उ० ८।७।१)। **अनुविद्य=अन्विष्य।** पूषेमा आशा अनुवेद सर्वाः (ऋ० १०।१७।५)। यद्यप्येकोऽनुवेत्त्येषां भावानां चैव संस्थितिम् (याज्ञ० ३।१०४)। **उक्तोऽर्थः।**

—**विद् (विद सत्तायाम्)**। तस्मात् त्रयोदशो मासो नानुविद्यते (ऐ० ब्रा० ३।१)। **नानुविद्यते शुभकर्मानुकूलो नास्तीत्यर्थ इति सायणः।**

— **विद् (विद्लृ लाभे)**। अत्रयस्तमन्वविन्दन् न ह्यन्ये अशक्नुवन् (ऋ० ५।४०।६)। **अन्वविन्दन्=अन्विष्याविन्दन्।** सुपर्णस्त्वाऽन्वविन्दत् (अथर्व० २।२७।२)। **उक्तोऽर्थः।** पदं ध्रुवं चाव्यभिचारि सद्गुणम्। त्रैविष्टपेयादिषु नान्वविन्दत (भा० पु० ८।८।१९)। **अनन्तरोदीरित एवार्थः।** अनु स्वर्गं लोकं वेत्स्यसि (तै० ब्रा० ३।१२।२।२)। **अन्विष्य लप्स्यसेऽधिकरिष्यसि वा।** तदाहुर्न चातुर्मास्ययाजिनमनुविन्दन्ति (श० ब्रा० २।६।४।६)। **अनुविन्दन्ति, अनुप्राप्नुवन्ति, तत्साम्यमश्नुवते, तेन समानकक्षतां भजन्त इत्यर्थः।** यस्यानुवित्तः प्रतिबुद्ध आत्मा (श० ब्रा० १४।७।२।१७)। **अनुवित्तः प्राप्तः।** अयं पन्था अनुवित्तः पुराणः (ऋ० ४।१८।१)। **अनुवित्तः=सुप्रथितः।**

—विश् (**विश प्रवेशने**)। यवीयसोऽनुवेशो हि ज्येष्ठस्य विधिलोपकः (भा०)। ज्येष्ठातिक्रमेण **कनिष्ठस्य विवाहोऽनुवेशः।** अन्तर्भावितो **बुद्ध्यानुवेशितो** ण्यर्थः प्रयोज्यप्रयोजकभावो यस्येति उपाच्च (१।३।८४) सूत्रे न्यासः।

—**वृ (वृञ् वरणे)**। तानसुरा रक्षांस्यन्ववारयन्त (ऐ० ब्रा० ५।१)। **अनुद्रुत्यारुधन्नित्यर्थः।** अनुवृतः पलाशैः (शां०ब्रा० १०।२)। **अनुशब्दः**

सर्वतो भावे। शरैर्घोरैस्तमेकमनुवव्रिरे (भीष्म० ७७।१३)। अनुवाव्रर=आचकरिरे। ताः कृष्णमनुवव्रिरे (हरि० २।२०।३०)। परिजग्मुः, परिवेष्टयामासुरित्यर्थः।

—वृत् (वृतु वर्तने)। मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः (गीता ४।११)। अनुवर्तन्ते=अनुसरन्ति। लौकिकानां हि साधूनामर्थं वागनुवर्तते (उत्तर० ११।१०)। अनुवर्तते=अनुगच्छति। भूतार्थं न व्यभिचरति। नित्यं सत्यमेवोपन्यस्यति नासत्यम्। पञ्चवर्षसहस्राणि सूर्यमेवान्ववर्तत (रा० ७।१०।८)। अन्ववर्तत=असेविष्ट। आर्चत्। एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः (गीता ३।१६)। अनुवर्तयति=अविच्छेदेन प्रवर्तयति। अनुः सातत्ये। एवं सत्त्वरजस्तमांसि मिथो विरुद्धान्यप्यनुवर्त्स्यन्ति। आनुगुण्यं सहकारितां करिष्यन्तीत्याह। बलं धर्मोऽनुवर्तते (भा० शां० १३४।७)। धर्मो बलमन्वायत्तो भवतीत्यर्थः। सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः (ऋ० ४।३०।२)। अनुवावृतुः=परिवर्तन्ते। कृतः पुरुषकारस्तु दैवमेवानुवर्तते (भा० अनु० ६।२२)। फलप्रसवे दैवायत्तो भवतीति तात्पर्यम्। अनिर्वेदो हि सततं सर्वार्थेष्वनुवर्तते (रा० ५।१२।११)। अनुवृत्तोऽनुस्यूतो भवतीत्यर्थः। सर्वार्थेषु प्रवर्तक इति पाठान्तरम्। शैथिल्याद्देहधातूनां ज्वरो जीर्णोऽनुवर्तते (चरक० चि० ३।२६१)। अविच्छेदेन वर्तत इत्याह। तैत्तिरीयब्राह्मणे (१।५।५।१) केशानामनुवर्तनमित्यानुलोम्येन मर्दनमाह। केचिद् विजायत इति नानुवर्तयन्ति (पा० ५।२।१३ इत्यत्र काशिका)। पूर्वसूत्रान्नानुकर्षन्ति। क्रव्यादानुवर्तयन्मृत्युना च पुरोहितम् (अथर्व० ११।६।१८)। अनुवृत्तिमनुसारं कारयन्नित्यर्थः। वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् (रा० २।२१।४६)। अनुवर्त्यताम् अनुमन्यताम्, प्रतिनन्द्यताम्। यद् यद् भर्ताऽनुयुञ्जीत तत्तदेवानुवर्तयेत् (भा० ४।१०५)। अनुवर्तयेत् प्रतिब्रुवीत=उत्तरयेत्। व्याहृतीः सर्पराज्ञी घर्मशिरांसीति सर्वेष्वाधानेषु यजमानोऽनुवर्तयते (आप० श्रौ० ५।४।१६।२)। अनुकूलाभिः कथाभिरनुवर्तमानः। सेवमान इत्यर्थः। अनुरोधोऽनुवर्तनम् (अमरे)। तमपराधमनुवृत्त्या प्रमार्ष्टुमागतः (दशकु०)। अनुवृत्तिः सेवा। तत्र किमनुवृत्तिर्न फलति (महिम्नः स्तोत्रे १०)। उक्तोऽर्थः। वाचानुवृत्तिः खल्वतिथिसत्कारः (प्रतिमा० ५)। आसेदुषां गोत्रभिदोऽनुवृत्त्या (कि०१८।१८)। अनुवृत्तस्त्वया भगीरथगृहे प्रसादः (उत्तर०७)। सानुबन्धमनुग्रहो दर्शित इत्याह। स मेरुमनुवृत्तः सन्पुनर्गच्छति पाण्डव (भा० वन० १६३।३१)। अनुवृत्तः=वचने स्थितः। सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् रा० ६।६०।६५)। अनुवृत्तं क्रमशो वर्तुलाकारम्। अनुवर्तितुमिच्छन्ति मातरं सततं सुताः (रा० ४।१६।२५)। चित्तज्ञानानुवर्तिनोऽनर्था अपि

प्रियाः स्युः (दशकु०)। **अनर्था अनिष्टा दुर्जनाः। चित्तज्ञानानुरूप्येणाचरन्त इत्यर्थः।** इह नेता च विगुणः सहायाश्चानुवर्तिनः (रा० ५।८६।१६)। **अनुवर्तिनः=तादृशाः। तत्समाना इत्यर्थः।** अनुवर्तिनि कलत्रे (पञ्चत० १।१०१)। **अनुवर्तिनि=वशंवदे वचनकरे।** भृत्यानामनुवर्तिनाम् (पञ्चत०)। **उक्तोऽर्थः।**

—**वृध् (वृधु वृद्धौ)।** आशुं जयन्तमनु यासु वर्धसे (ऋ० ५।४४।१)। **पश्चाद् वृद्धिमुपैषीत्यर्थः।** न वै जातं गर्भं योनिरनुवर्धते (श० ब्रा० १०।२।३।६)। **अनुवर्धते=मन्दमन्दं वर्धते।**

—**वृष् (वृषु सेचने)।** सर्गा वर्षस्य वर्षतो वर्षन्तु पृथिवीमनु (अथर्व० ४।१५।४)। **अनुवर्षन्तु=अनुषिञ्चन्तु।**

—**वेष्ट् (वेष्ट वेष्टने)।** भित्त्यादिकमननुवेष्ट्योपविष्ट आसीत (मनु० ११।११० इत्यत्र कुल्लूकवचनम्)। **भित्तिः कटः। अननुवेष्ट्य=अनास्तीर्य।**

—**व्यध् (व्यध ताडने)।** नश्यतीषुर्यथाऽऽविद्धः खे विद्धमनुविध्यतः (मनु० ९।४३)। **अनुविध्यतः=पश्चाद् विध्यतः। शत्रन्तात्षष्ठी।** मृत्तिका तद्रसेनानुविध्यमाना (भा० पु० ५।१६।२१)। **अनुविध्यमाना =संगम्यमाना=सन्नीयमाना=सम्पृच्यमाना।** सरसिजमनुविद्धं शैवलेनापि रम्यम् (शा० १।१८)। **शैवलेन जम्बालेनानुगतं वेष्टितम्।** न तत्सत्यं यच्छलेनानुविद्धम् (भा० उ० ३५।५८)। **अनुविद्धम्=युक्तम्=व्यामिश्रम्। यच्छलेनाभ्युपेतम् इति पाठान्तरम्।** रत्नाङ्गुलीयकप्रभयानुविद्धान्... अक्षान् (रघु० ६।१८)। **अनुविद्धान्=व्याप्तान्।** न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते (वा० प० १।१२४)॥ **अनुविद्धम्=अनुस्यूतम्।** क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा (रघु० १३।५४)। **अनुविद्धा=सहगुम्फिता।** देशवार्तानुविद्धा संकथा (दशकु०)। **अनुविद्धा=सम्बद्धा।** उद्गूर्णलोष्टलगुडैः परितोऽनुविद्धम् (शिशु० ५।२५)। **अनुविद्धम्=आसादयितुमनुसृतम्।** कोपानुविद्धां चिन्तां नाटयन् (मुद्रा० ३)। **कोपानुविद्धाम्=कोपसमन्विताम्।** न हि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः (सा० द० १)। **अनुवेधः समुत्कीर्णता।** मुखामोदं मदिरया कृतानुव्याधमुद्वमन् (शिशु० २)। **अनुवेधार्थकोऽनुव्याधशब्दः सम्मतः पाणिनेः। अनुवेधस्तु दुःसमाधानः। इहानुव्याध इति संस्पर्शमात्रमाह।**

—**व्रज (वज व्रज गतौ)।** यमिच्छेत्पुनरायान्तं नैनं दूरमनुव्रजेत् (रा० २।४०।४८)। **अनुव्रजेत् पृष्ठतो गच्छेत्।** ओदकान्तादा वनान्तात् प्रियं

प्रोष्यमनुव्रजेत् । उक्तोऽर्थः । आसनावसथौ शय्यामनुव्रज्यामुपासनम् (मनु० ३।१०७) । **अनुव्रज्या गच्छतोऽनुगमनम् ।**

**—शास् (शासु अनुशिष्टौ) ।** राजपत्नीनियोगस्थमनुशाधि पुरीजनम् (भट्टि० २०।१७) । **अनुशाधि=विधेयीकुरु ।** यस्ते शरीरे हृदयं दुनोति कामः कुरूनसपत्नोऽनुशिष्याम् (भा० उ० ३०।४८) । **अनुशिष्याम्=कुरूणां शासनं कुर्याम्, तान् प्रशिष्याम्, तांस्तन्त्रयेय ।** मैवं मामनुशाधि हि (रा० २।९०।१५) । **मैवं कठोरं ब्रूहीत्याह ।** स प्रैति क्षेत्रविदानुशिष्टः (ऋ० १०।३२।७) । **अनुशिष्टः=उपदिष्टः ।** तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः (बृ० उ० १।४।१७) । **अनुशिष्टम्=उपात्तविद्यम्=गृहीतशास्त्रम् ।** इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयत् (रा० ६।३०।४) । **अनुशिष्टः=पृष्टः ।** इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात् (कु० ५।५) । **अनुशासती, उपदिशती, प्रयुञ्जाना ।** इयमेव तावत् प्रथममनुशासनीया (वेणी० २) । **दण्डनीयेत्यर्थः ।** अरिकुलमनुशासनीयम् (वेणी० ३)। **उक्तोऽर्थः ।**

**—शी (शीङ् शये) ।** सूतिका अनुशेरते (अथर्व० ८।६।१९) । **ये रक्षः-पिशाचाद्या अभिनवप्रसवा योषितो भूत्वा स्वयमपि (तदन्तिके) शेरत इति सायणभाष्यम् ।** भूमौ निपतितं वीरमनुशेते मृतं पतिम् (भा० आश्व० ८०।२१) । **समीपे शेत इत्यर्थः ।** श्वो युद्धमिति कृतोपवासः शस्त्रवाहनं चानुशयीत (कौ० अ० १०।३।३४) । **उक्तोऽर्थः ।** भर्तारं द्विषती स्त्री…भर्तारमन्यया सह शयानमनुशयीत (कौ० अ० ३।३।१२) । **सानुशयं सपश्चात्तापं शयीत उपतिष्ठेतेति गणपतिः । अनुजानीयादित्यन्ये । तज्ज्यायः ।** यदविद्यया वस्त्वाकार्यते तदेवानुशेरते (क्लेशाः) (यो० सूत्र २।४ भाष्ये) । यज्जातीयस्य कर्मणो यो विपाकस्तस्यानुगुणा या वासनास्ताः कर्मविपाकमनुशेरते (यो०सू० ४।८ भाष्ये) । **उभयत्रानुशेरत इत्यस्य 'अनुगता भवन्ति, अनुकुर्वन्ती'त्यर्थः ।** अजो ह्येको जुषमाणोऽनुशेते (श्वेता० उ० ४।५) । **अनुशेते=तत्तादात्म्यापन्नो भवति ।** अपि वा शिर आदित्यो भवति । यदनुशेते सर्वाणि भूतानि (नि०४।२।१३) । **अनुशेते=अनुप्रविश्यास्ते ।** यच्च यच्चानुशेतेऽस्य तत्तदेवोपचारयेत् (का० सं० चि० मदात्यय० श्लो० ३७) । **अनुशेते=उपशेते=सात्म्यं भवति ।** दत्तमिष्टमपि नान्वशेत सः (शिशु० १४।४५) । **दत्तेर्थे इष्टे च नान्वतप्यतेत्यर्थः ।** पुरानुशेते तव चञ्चलं मनः (कि० ७।८) । **पुराऽनुशेते=अचिरादेव सानुशयं सानुतापं भविष्यतीत्यर्थः ।** नन्वनुशयस्थानमेतत् (मालती० ८)। **अनुशयः=अनुतापः=अनुशोकः ।** कुतस्तेऽनुशयः (मालती०

३)। **उक्तोऽर्थः**। शिशुपालोऽनुशयं परं गतः (शिशु० १६।२)। **अनुशयो वैरम्**। **अथानुशयो दीर्घद्वेषानुतापयोः (अमरे)**। यस्मिन्नमुक्तानुशया सदैव जागर्ति भुजङ्गी (मालती० ६।१)। **उक्तोऽर्थः**। अयं त्वन्यो गुणः श्रेष्ठ-श्च्युतानां स्वर्गतो मुने। शुभानुशययोगेन मनुष्येषूपजायते (भा० वन० २६१।३३)॥ **अनुशयः पक्षपातः=आदरविशेषः=सङ्गप्रकर्षः**। शुभानुशय-बुद्धिः (भा० वन० २५६।२६)। **शुभमनुशेते शुभपक्षपातिनी बुद्धिर्यस्य सः**। स्वर्गार्थकर्म्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेह-वदिति **वेदान्तशास्त्रे**। अशक्तः कुत्सिते कर्मणि व्यसने वा अनुशयं लभेत, परेण वा कारयितुम् (कौ० अ० ३।१४।३)। विक्रेत्रा च महार्घनिबन्धनं पण्यक्षयमपश्यता नानुशयितव्यम् (याज्ञ० २।२५८ इत्यत्र मिताक्षरायाम्)। **मया न साधु विक्रीतमिति नानुतप्तव्यम्**। क्रयविक्रयानुशयः (मनु० ८।५)। **क्रयविक्रये कृते पश्चात्तापाद् विप्रतिपत्तिरनुशय इति कुल्लूकः**। यस्मिन्यस्मिन् कृते कार्ये यस्येहानुशयो भवेत् (मनु० ८।२२८)। **अनुशयः पश्चात्तापः**। उद्दिश्य किं वदति कोऽनुशयोऽस्य (तन्त्रा० कथामुखे श्लो० ४)। **उक्तोऽर्थः**। त्यक्तकामानुशयरसानां वीतरागाणाम् (तन्त्रा० प्रथमतन्त्रोपक्रमे)। **अनुशयः सङ्गः पक्षपातो वा**। दायादा निहताः सर्वे वीरद्वेषानुशायिना (हरि० २।३६।५२)। **द्वेषमेवानुशेतेऽनुरुध्यत इति द्वेषानुशायी, तेन**।

—शुच् (शुच शोके)। असौ मामनुशोचतु (अथर्व० ६।१३०।१)। **माम-नुस्मृत्य शोकयुक्ता भवत्वित्याह**।

—शुष् (शुष शोषणे)। वृक्ष इव विद्युता हत आमूलादनुशुष्यतु (अथर्व० ७।६१।१) **अनुक्रमेण शुष्यत्वित्यर्थः**।

—श्रु (श्रु श्रवणे)। न सुप्तमस्य सुप्तेष्वनुशुश्राव कश्चन (अथर्व० ११।४।२५)। **अनुशब्दः पारम्पर्ये**। **श्रुतमेवार्थमनुशृणोति। भूयः शृणोतीत्यर्थः**। **अनुश्रवो वेदः**। **अनुश्रूयते परम्परया गुरुशिष्यानुक्रमेण श्रूयत इति**।

—षञ्ज् (सञ्ज् सङ्गे)। इयं नारीति सर्वत्रानुषजति (लौ० गृ० २५।२८)। **अनुषजति=अनुषज्यते=सम्बध्यते**। **इह सजतिरकर्मकः**। देवता वर्धय त्वमिति सर्वत्रानुषजति (आप० श्रौ० ३।६।१६।४)। **उक्तं वक्तव्यम्**। धर्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते (दशकु०)। **इह धातुः सकर्मकः**। इदं पदमत्रानुषञ्जनीयम्। **अनुवर्तनीयम् इत्यर्थः**। इति भूतानि सम्पश्यन्ननुषक्तानि मृत्युना (भा० शां० १७६।१८)। **अनुष-क्तानि=सम्बद्धानि=आक्रान्तानि**। छाययेवायं पुरुषः। पाप्मनाऽनुषक्तः

(श० ब्रा० २।२।३।१०) । उक्तोऽर्थः । तस्य वैरानुषक्तस्य गन्तास्म्यन्तं सुदुर्गमम् (भा० उ० १६२।३५) । अनुषङ्गोऽनुबन्धः । इत्यनुषङ्गः=इत्यन्वयः । सानुषङ्गाणि कल्याणानि (उत्तर० ७) । सानुषङ्गाणि=सानुबन्धानि=निरन्तराणि । एकत्रान्वितस्य पदस्याऽन्यत्रान्वयोऽनुषङ्गः । यथा कोषो जलं चोपहृतमित्यादौ बलान्वितोपहृतस्य कोषेऽन्वयः (शब्दकल्पद्रुमे) । सप्तकस्य वर्गस्य सर्वत्रैवानुषङ्गिणः (मनु० ७।५२) । पानादेर् व्यसनसप्तकस्य सर्वत्रैव राजमण्डलेऽवस्थितस्येत्यर्थः । विभुतानुषङ्गि भयमेति जनः (कि० ६।३५) । प्रभुतासम्बद्धम्, ऐश्वर्यान्वयि ।

—सस्ज् (षस्ज सङ्गे) । न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते (गीता १८।१०) । कुशले मिष्टान्नभिक्षादौ नानुषज्जते न सङ्गं काकवत् प्रीतिं करोतीति तात्पर्यार्थः ।

—सू (षू प्रेरणे) । उल्कया ह स नखिन्या पशूननुषुवति (श० ब्रा० ५।५।४।१६) । अनुषुवति=प्राजति=प्रेरयति ।

—सृ (सृ गतौ) । पूर्वोद्दिष्टामनुसर पुरीम् (मेघ० ३०) । याहीत्याह । लक्ष्यीकृत्य याहीति वा । वायुरनु सारयतीव माम् (रा०) । परतः प्रेरयति प्रणुदति । जितां भूमिं रक्षेत भग्नान्नात्यनुसारयेत् (भा० शां० ६६।१२) । नात्यनुसारयेत् नातिद्रावयेत् (परावृत्तिभयात्) । गुप्तैश्चारैरनुमतैः पृथिवीमनुसारयेत् (भा०शां० ८६।१५) । अनुसारयेद्=विचिनुयात्, शोधयेत् । अप्रविश्य पुरीं दर्पादनुसारं करिष्यति (हरि० २।३६।१२) । पृष्ठतो धाविष्यत्यासादयितुकाम इत्यर्थः । शब्दानुसारेणावलोक्य यतः शब्दः श्रूयते तत्र दिशि दृष्टिं प्रेर्य । अनुसारभयाद् भीताः प्राङ्मुखाः प्राद्रवन्पुनः (भा० सौप्तिक० १।५) । व्याघ्रानुसारचकिता हरिणीव यासि (चारु० १।६) । उभयत्र पृष्ठतो गमनमित्यर्थः । कपटानुसारकुशलः (मृच्छ० ६।५) । छलान्वेषणे निपुण इत्यर्थः । अनुसारादधिका वृद्धिः (मनु० ८।१५२) । अनुसारः शास्त्रव्यवस्था लोकव्यवस्था वा । इन्दोः......त्वदनुसरणक्लिष्टकान्तेः (मेघ०) । तवानुसरणं त्वया कृतमनुसरणमनुगमनमाच्छादनम् । कनकसूत्रानुसरणप्रवृत्तै राजपुरुषैः (हितोप०) । इहानुसरणमनुगमनं विचयनार्थमिति विचयनार्थमाह । उष्णार्दितां सानुसृतास्रकण्ठीम् (सीताम्) (रा० ५।५।२५) । अनुसृतमनुसरणम् । भावे क्तः अनुसरणं चेह स्यन्दनमभिप्रेतम् । तेन 'सानुसृतान्यस्राणि' इत्यनेन स्यन्दमानान्यश्रूण्युच्यन्ते । अपि वाऽनुसृतमिति गत्यर्थत्वात्कर्तरि क्तान्तम् । अनुसृतिः कुलटामाह । अनुसरति कुलान्तरमिति व्युत्पत्तेः । नित्यं छिद्रानुसार्यरेः (मनु० ७।१०२) । छिद्रान्वेषीत्यर्थः । तद्वृक्षविवरानुसारी (तन्त्रा० १।४) । तद्वृक्ष-

**काटरान्वेषीत्यर्थः** । कृपणानुसारि च धनम् (पञ्चत० १।२७८) । **कृपणं कदर्यं भोग्यत्वेनानुगच्छतीत्याह** ।

**—सृज्** (**सृज विसर्गे**) । अनुसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे (रा० १।७५।१२) । **अनुसृष्टं=पश्चात् सृष्टम्** ।

**—सेव्** (**षेवृ सेवने**) । अनुसेवां चरन्तीमाः कुशला नृत्यसामसु (भा०) । **अनुसेवा=पुनः पुनः सेवा । अनुः कर्मप्रवचनीय इति तु नीलकण्ठः** । स्वर्धुन्यापो ऽनुसेवया (भा० पु० १।३।१५) । **उक्तोऽर्थः** ।

**—स्तृ** (**स्तृञ् आच्छादने**) । तस्यैतामनुस्तरणीं कुर्वन्ति यत्सौम्यः (ऐ० ब्रा० ३।३२) । **गौरनुस्तरणी ज्ञेया पितृमेधेषु कीर्तिता । मृतस्य यजमानस्य छाद्यतेऽङ्गं यदङ्गकैः** (तत्रैव षड्गुरुशिष्यः) ॥ अनुस्तरण्या वपामुत्खिद्य शिरोमुखं प्रच्छादयेत् (आश्व० श्रौ०) ।

**—स्था** (**ष्ठा गतिनिवृत्तौ**) । ये रात्रिमनुतिष्ठन्ति ये च भूतेषु जाग्रति (अथर्व० १९।४८।५) । **रात्रिविषयं कर्मार्चनजपोपासनरूपं कुर्वन्तीत्यर्थः** । कच्चिदेकः शिबीनाढ्यान्सौवीरान् सह सिन्धुभिः । अनुतिष्ठसि धर्मेण... (भा० वन० २६७।११) ॥ **अन्यत्र क्रियासामान्ये वर्तमानोऽनुतिष्ठतिरिह क्रियाविशेषे पालने वर्तते** । अनुतिष्ठस्व तद् राजन् पितृपैतामहं पदम् (भा० शां० ३२।३) । **अध्यास्स्वेत्यर्थः** । अनुष्ठास्यति रामस्य सीता प्रकृतमासनम् (रा० २।३७।२३) । **अधिष्ठास्यति, अध्यासिष्यत इत्यर्थः** । तं योऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् । **अनुतिष्ठेत्=वचनमनुरुध्येत, वचने स्थितः स्यात्** । अनुतिष्ठन्ति पूर्वाह्णे नित्यमायव्ययं तव (भा० सभा० ५।७२) । **अनुतिष्ठन्ति =निवेदयन्ति** । एष दात्यूहको हृष्टः...। प्रवदन् मन्मथाविष्टः स्वकान्तामनुतिष्ठति (संस्कृतशार्मण्यकोषे धृतो रामायणीयः पाठः ४।१२४)॥ **उपच्छन्दयतीत्यर्थो भाति । अनुगच्छतीति वा** । अचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः (आप० ध० १।८।२२।४) । **अनुतिष्ठन्ति=उपासत इत्युज्ज्वलायां हरदत्तः** । **ममात्मेति साक्षात्प्रतिपद्यन्त इति शङ्करकृतं विवरणम्** । ये चैताननुतिष्ठन्ति ते के पुरुषा इति (बृ० श्लो० सं० ४।५०) । **अनुतिष्ठन्ति=समीपे तिष्ठन्ति** । अतन्द्रो ब्रह्मणा धीरः प्राणो माऽनु तिष्ठतु (अथर्व० ११।४।२४) । **अनुतिष्ठतु=अनुवर्तताम्** । चरान्मन्त्रं च कोषं च दण्डं चैव विशेषतः । अनुतिष्ठेत् स्वयं राजा...(भा० शां० ८६।२०)॥ **अनुतिष्ठेत्=आलोचयेत्** । आत्मानमनुतिष्ठ त्वम् (रा० २।१०५।४१)। **अनुतिष्ठ=चिन्तय** । सा क्रीडमाना सुश्रोणी सह तेनर्षिणा पुनः । शतद्वयं किञ्चिदूनं वर्षाणामन्वतिष्ठत (वि० पु० १।१५।२०) ॥ **अन्वतिष्ठत=अतिष्ठत् । नार्योऽनुना** । वीराश्च

नियतोत्साहा राजशास्त्रमनुष्ठिताः (रा० १।७।१२)। **अनुसृतराजशास्त्रार्थाः, अभ्यस्तनृपनीतय** इति वा। सज्जयन्ति स्म नागांश्च नागशिक्षास्वनुष्ठिताः (भा० उ० १५३।२१)। **नागशिक्षासु व्यापृता नियुक्ताः**। अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः (भा० सभा० ५।७५)। **उक्तोऽर्थः**। न युक्तं हि त्यक्तं कार्यमनुष्ठितम् (रा०)। **अनुष्ठितम्=आरब्धम्**। आक्रीडानां गृहाणां च गदानामगदस्य च। प्रज्ञावन्तः प्रयोक्तारो ज्ञानवद्भिरनुष्ठिताः (भा० शां० २३७।८)॥ **अनुष्ठिताः=प्रयोजिताः=प्रचोदिताः=प्रेरिताः**। भ्राता विचित्रवीर्यस्ते सतां मार्गमनुष्ठितः (भा० सभा० ४१।२३)। **अनुष्ठितः=आस्थितः=संश्रितः**। येषां योधाः शौचमनुष्ठिताश्च (भा० शां० १०२।१३)। **शौचमनुष्ठिताः=शौचे परीक्षिताः**। दृश्यन्ते ह्यातुराः के चिद्...भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः (चरक०चि० १०।४)। **अनुष्ठिताः=उपचरिताः=उपक्रान्ताः=चिकित्सिताः**। एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत। ब्राह्मणानामनुष्ठानम्...(भा० अनु० ३३।२)॥ **अनुष्ठानम् आराधनमनुरञ्जनम्**। नानुष्ठानैर्विहीनाः स्युः कुलजा विधवा इव (पञ्चत० २।९५)। **अनुष्ठानं धर्मानुष्ठानम्। शास्त्रविहितमग्निपरिचर्यादि**। किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति (उत्तर० १।८)। **उक्तोऽर्थः**। अनुष्ठानशरीरम्—**स्थूलसूक्ष्मयोः शरीरयोर्मध्ये स्थितं कर्मशरीरमिति साङ्ख्याः**। अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते (कठ० उ०२।२।१)। **अनुष्ठाय विधाय**।

—**स्मृ (स्मृ चिन्तायाम्)**। या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु (वि० पु० १।२०।१९)॥ **अनुस्मरणं निरन्तरं चिन्तनम्**।

—**स्यन्द् (स्यन्दू प्रस्रवणे)**। अनुष्यन्देते मत्स्योदके (पा० ८।३।७२ सूत्रे वृत्तिः)। सह स्यन्देते इत्यर्थः। अनुष्यन्द इति **पश्चिमस्य रथाङ्गस्य** समाख्या (श० ब्रा० ५।४।३।२४)।

—**हन् (हन हिंसागत्योः)**। यश्चैवं हन्ति यश्चानुहन्ति उभौ तौ हतः (ऋलृक् सूत्रे भाष्ये)। **अनुहन्ति=अनुकुर्वन्हन्तीत्यर्थः**। हीनमनुहन्यात् (कौ० अ० १०।३।५६)। **अनुबध्य हन्यादित्यर्थः**।

—**हा (ओहाङ् गतौ)**। तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुः (श० ब्रा० ३।४।१।१७)। **अनुहाय=अनुसृत्य=पृष्ठतो गत्वा**। अनुहायैवास्य तद्वीर्यमादत्ते (ऐ० ब्रा० ३।३१)। **अनन्तरोदीरित एवार्थः**। दुरादानं सन्दंशेनानुहायाददीत (षड्विंश० ब्रा० ३।१०)।

—हृ (हृञ् हरणे)। अयमकूपारमनुहरति कासारः। परिमाणादिना जलधिमनुकरोतीत्यर्थः। व्रीडितस्य ललितं युवतीनां क्षीबता बहुगुणैरनुजह्रे (कि० ९।६७)। उक्तोऽर्थः। व्रीडितं व्रीडा। भावे क्तः। देहबन्धेन स्वरेण च रामभद्रमनुहरति (उत्तर० ४)। उदितचर एवार्थः। पैतृकमश्वा अनुहरन्ते मातृकं गावः (पा० १।३।२१)। इत्यत्र वृत्तावुदाहरणम्। गतिं शीलयन्तीत्यर्थः। पितुरनुहरति। मातुरनुहरति। पितुराकारं मातुराकारमनुकरोतीत्यर्थ इति न्यासः। यद्धीयेत तन्न त्वेवानुहरेयुः (भा० श्रौ० ६।६।१५)। न पश्चादाहितं कुर्युरित्यर्थः।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। अनुहवं परिहवं परिवादं परिक्षवम् (अथर्व० १६।८।४)। अनुहवादीन् परासुवेति सविता प्रार्थ्यते। अनुकूलनक्षत्रे धनाद्यर्थं प्रस्थितस्य पश्चाद्भावावस्थितेन पुरुषेणाह्वानमनुहव इति सायणः।

### अन्वप (अनु+अप)

—क्रम् (क्रमु पादविक्षेपे)। तैत्तिरीयब्राह्मणे क्वचित् पश्चात्त्वरया ऽपसरणेऽर्थे प्रयोग इति मोनियर् कोषकारः।

### अन्वव (अनु+अव)

—अर्ज् (अर्ज षर्ज अर्जने)। तदेनं सावसमेवान्ववार्जति (श० ब्रा० २।६।२।१७)। दिग्विशेषं प्रति विसृजतीत्याह। तमशनापिपासाभ्यामन्ववार्जत् (ऐ० उ० १।२।१)। अन्ववार्जत्=अनुगमितवान्=संयोजितवान्।

—इ (इण् गतौ)। यानेवामूंस्त्रयान्पितॄनन्ववागात्तेभ्य एवैतत् पुनरुपोदेति (श० ब्रा० २।६।१।१५)। पितॄनन्ववागात्=पितृभिः सायुज्यमापदित्यर्थः। तथैषां नियानं नान्ववायन् (श० ब्रा० ३।५।३।१५)। अन्ववायन्=अन्वसरन् =अन्वगुः। नेत् पाप्मानं ऋतिमन्ववायाम (श० ब्रा० ७।२।१।१३)। अन्ववायाम=अभ्यश्नवामहै। पितृलोकं वा एतेऽन्ववयन्ति (श० ब्रा० १२।८।१।१८)। प्राप्नुवन्तीत्यर्थः। ततो वै देवा एतं तूष्णींशं समपश्यंस्तमेषामसुरा नान्ववायन् (ऐ० ब्रा० २।३१)। अन्ववायो ज्ञानमिति षड्गुरुशिष्यः। सोऽब्रवीदिन्द्रः कश्चाहं चेमानसुरान् रात्रीमन्ववैष्यामहा इति (गो० ब्रा० उ० ५।१)। विचेष्याम इत्यर्थः। नेत्पाप्मान मृत्युमन्ववायानि (बृ० उ० १।३।१०)। प्राप्नवानीत्यर्थः। अन्ववायस्तु सुमहांस्तत्र तत्र विशांपते (हरि० १।११।७)। अन्ववायः=अन्वयः=कुलम्=सन्तानः। तस्यान्ववाये राजानः क्रमाद् येनाभिषेचिताः (रा० ६।१२८।६५)। अन्ववायः=अन्वयः=वंशः।

—ईक्ष् (ईक्ष दर्शने)। तस्यै स प्रददौ मन्त्रमापद्धर्मान्ववेक्षया (भा०आदि० १११।६)। आपद्धर्ममुद्दिश्येत्यर्थः।

—क्रम् (क्रमु पादविक्षेपे)। संज्ञानमेवान्ववक्रामति (श० ब्रा० १४।७।२।३)। क्रमेणाधिगच्छतीत्यर्थः।

—रुध् (रुधिर् आवरणे)। अन्ववारोधि गौर्गोपलकेन (न रुधः ३।१।६४ सूत्रे वृत्तिः)। गोष्ठेऽवरुद्ध इत्यर्थः।

—सृज् (सृज विसर्गे)। अन्ववसर्गो मार्दवमुरुता खस्येति नीचैः कराणि (तै० प्राति० २२।१०)। अन्ववसर्गो गात्राणां स्रंसनं शैथिल्यम्। अन्ववसर्गः संहारवचन आयामस्य प्रसारित्वार्थकस्य प्रतियोगी शब्दः। अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु (पा० १।४।६६) इति सूत्रेऽन्ववसर्गः कामचारानुज्ञामाह।

—सो (षो अन्तकर्मणि)। नात्यन्तमन्ववस्येत् (आप० ध० १।३।१८।७)। न तत्रैव नित्यं प्रसितः स्यादित्यर्थः। तृतीयार्थे (१।४।८५) इति सूत्रे नदीमन्ववसिता सेना, नद्या सम्बद्धेत्युदाहरतो वृत्तिकारस्य तु अन्ववपूर्वस्य षिञ एव बन्धनमर्थो मत इति भाति। यथा श्रेष्ठी स्वैरेवं वै तमात्मानमेत आत्मानोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः (कौ० ब्रा० उ० ४।२०)। भुञ्जत इत्यर्थः।

—स्था (ष्ठा गतिनिवृत्तौ)। तथैनं पाप्मा नान्ववतिष्ठति (श० ब्रा० ५।४।३।२२)। न बाधते न विप्रकरोतीत्यर्थः। तं न सङ्ग्रहीतान्ववतिष्ठेत् (श० ब्रा० ५।४।३।२३)। तेन साकं नावतरेदित्यर्थः।

## अन्वा (अनु+आङ्)

—इ (इण् गतौ)। षष्टिः सहस्रमनु गव्यमागात् (ऋ० १।१२६।३)। अन्वागात्=अन्वसार्षीत्। सोमं राजानं क्रीतमन्वायन्ति (ऐ० ब्रा० १।१५)। उक्तोऽर्थः।

—ख्या (ख्याञ् प्रकथने)। दश मातॄर्दश पितॄन् इत्यन्वाख्याय (लाट्या० श्रौ० १।२।४)। पर्यायेण परिगणय्य।

—गम् (गम्लृ गतौ)। अनन्वागतः पुण्येनानन्वागतः पापेन, तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति (श० ब्रा० १४।७।१।२२)। अन्वागतः=अनुगतः=सम्बद्धः=संश्लिष्टः। स यदत्र किञ्चित्पश्यति अनन्वागतस्तेन भवति (साङ्ख्ये १।१ सूत्रे विज्ञानभिक्षुणोदाहृतं वाक्यम्)। अर्थस्तु संशब्दितचरः।

—चि (चिञ् चयने)। अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः। भिक्षामट गां चानयेत्यत्र चकारोऽन्वाचये। अन्वाचितः पुरुषोऽनुपुरुषः (पा० ६।२।१६० सूत्रे वृत्ति.)। अन्वाचितः=कथितानुकथितः=अन्वादिष्टः।

—**दा (डुदाञ् दाने)**। अन्वा अहं तां दास्ये (श० ब्रा० २।१।२।१६)। **आत्मनि प्रतिसंहरिष्यामीत्यर्थः**।

—**दिश्** (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)। **किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेश इति दीक्षितः कौमुद्याम्। आदेशः कथनम्। अन्वादेशोऽनुकथनम्। नेह पश्चादुच्चारणमात्रमन्वादेशः, किन्तर्हि एकस्यैवाभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेश इति** पा० २।४।३२ **सूत्रे काशिका। अन्वादिष्टोन्वाचितः कथितानुकथितः**। पुरुषश्चान्वादिष्टः (पा० ६।२।१९०)। एषान्वादिष्टा दक्षिणा (श० ब्रा० १३।८।४।१०)। **निर्दिष्टा, निरूपिता, नियतीकृतेत्याह**। पूषा पुरस्तात्तस्यान्वादेश इत्येकं (दर्शनम्) (नि० ७।९।१)। **स त्वैतेभ्यः परिददत्** पितृभ्य इति तृतीयः पौष्णः, पूष्णोऽनुकथनं वा स्याच्चतुर्थपादगतमग्नि वा प्रकीर्तयेदित्याग्नेयो वा स्यादिति संशयः।

—**धा (डुधाञ् धारणपोषणयोः)**। उत्तमं पाणिमन्वादधाति (कौ० सू० ५५)। **अन्वादधाति=उपरिष्टान्निधत्ते इत्यर्थः**। अग्निं प्रतिष्ठाप्यान्वाधाय (आश्व० गृ० १।३)। **अन्वाधाय=अधिश्रित्य**। कथमग्नीनन्वादधानोन्वाहार्यपचनमाहारयेत् (ऐ० ब्रा० ७।१२)। याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः (याज्ञ० २।६७)। यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यहस्ते स्वामिने देहीति निहितं **तदन्वाहितम्** (मिताक्षरा)। स्वस्मादितरस्मै देय इति कृत उपनिधिरन्वाहितम् **इत्यन्यदीयं वचस्तु मिताक्षरामपेक्ष्य प्रायेणाव्यक्तम्**। यत्स्वं परिणेतुर्ज्ञातिभिः परिणीतायै दीयते **तदन्वाधेयमुच्यते**।

—**भू (भू सत्तायाम्)**। देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्ति (तै० सं० ६।३।४।७)। **अन्वाभविष्यन्ति—अनुकरिष्यन्ति**। यन्न होष्यामि तदन्वाभविष्यन्ति (असुराः) (काठक सं० २७।८)। **मत्समा भविष्यन्तीत्यर्थः**।

—**यत् (यती प्रयत्ने)**। सर्वा एवास्मिन् (अश्वमेधे) देवता अन्वायातयति (श० ब्रा० १३।१।२।९)। **अन्वायातयति=अन्वायत्ता अनुगताः करोति**। छन्दांसि यज्ञमन्वायातयति (श० ब्रा० ३।४।१।२३)। **यज्ञे भागवन्ति करोतीत्याह**। उद्गातर्या देवतोद्गीथमन्वायत्ता। (छां० उ० ३।८।९)। **अन्वायत्ता अनुगता=सम्बद्धा**। एतं सर्वे देवा अन्वायत्ताः (श०ब्रा० ३।१।२।१८)। **अन्वायत्ताः=अन्तर्गताः**। तद्या इमा अक्षँल्लोहिन्यो राजयः। ताभिरेनं रुद्रोऽन्वायत्तः (श० ब्रा० १४।५।२।३)। **अन्वायत्तोऽनुगतः सम्बद्धः**। यजमानं देवा दर्वी पितरोऽन्वायत्ताः (बृ० उ० ३।८।९)। **उक्तोर्थः**। कुत्र चैते सर्वभावा

अन्वायत्ता भवन्ति (का० सं० शरीर० गर्भ०)। सर्वेषु लोकेषु मृत्यवोऽन्वायत्ताः (तै० ब्रा० ३।६।१५।१)। **संनिहिता इत्यर्थः।**

—रभ् (रभ राभस्ये)। विश्वेदेवासो अनु मा रभध्वम् (अथर्व० २।१२।५)। **मामभित्वरध्वम्, मामुपोपविशतेत्यर्थं विवक्षत्यृषिः।** अंसेऽध्वर्युमन्वारभते (आश्व० श्रौ० १।३।२५)। **पृष्ठत उपक्रम्य स्पृशेदित्यर्थः।** पशुं प्रमुच्य...अन्वारभेते अध्वर्युर्यजमानश्च (भा० श्रौ० ७।१२।८)। **अन्वारभेते संस्पृशतः।** यदि मां संस्पृशेद्रामः सकृदन्वारभेत वा। धनं वा यौवराज्यं वा जीवेयमिति मे मतिः (रा० २।६४।६२)॥ **अन्वारभेत=किञ्चिद् वस्तु द्वारीकृत्य (मध्येकृत्य) स्पृशेत्।** अन्वारभेथामनुसरभेथाम् (अथर्व० ६।१२२।३)। **हे जायापती परलोकहितं सत्कर्म अनुलक्ष्य तस्यारम्भः क्रियताम् इत्याह।** त विद्याकर्मणी अन्वारभेते पूर्वप्रज्ञा च (बृ० उ० ४।४।२)। **अन्वारभेते=अनुप्रपद्येते।** अस्यैता उभौ व्रीहियवावन्वारब्धौ भवतः (श० ब्रा० ३।२।२।१४)। **अन्वारब्धौ संगतौ।**

—रुह् (रुह बीजजन्मनि)। ततोऽन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः (भा० मौ० ७।२४)। **पतिमरणमनु चितामारूढा इत्यर्थः। अन्वारोहणं नाम मृतं पतिमनु जीवन्त्याः पत्न्याश्चितारोहणं भवति।** यज्ञं यन्त मनसान्वारोहामि (अथर्व० ६।१२२।४)। **अन्वारोहामि=पश्चादारोहामि।**

—लभ् (डुलभष् प्राप्तौ)। तं सर्वेऽन्वालभेरन्प्राचीनावीतिनो मुक्तशिखाः (गौ० ध० ३।२।५)। **अन्वालभेरन्=अनुक्रमेण संस्पृशेयुः।**

—विश् (विश प्रवेशने)। ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वाविवेश ह (भा०आदि० १३६।११)। **अन्वाङोः शक्य एकतरस्त्यक्तुम्। आविवेश=व्याप=अभिबभूव।** यया ह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनम् (छां० उ० ८।१।५)। **अन्वाविशन्ति=अनुवर्तन्ते, अनुसृत्य प्रचरन्ति।** तं धर्ममसुराः... नामृष्यन्त...विवर्धमानाः क्रमशस्तेऽन्वाविशन्प्रजाः (भा० शां० २६४।१०)।

—वृत् (वृतु वर्तने)। अनु वामेकः पविरावर्त (ऋ० ५।६२।२)। **अन्वाववर्त=अस्मदाभिमुख्येन परिवर्तते।** सूर्यस्यावृतमन्वावर्ते (वा० सं० २।२६, कौ० उ० २।८।६)। **सूर्यस्यावृत्तिमाक्रमणमनुसृत्याक्रामामीत्याह।**

—हृ (हृञ् हरणे)। पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः (मनु० ३।१२३)। **अनुक्रमेणाह्रियत इति व्युत्पत्तेः। पितृयज्ञपिण्डाननु पश्चादाह्रियत इति तत्तथोक्तम्।** तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनः (बौ० ध० २।१०।१८।८)। **अन्वाहार्यं नाम दर्शपूर्णमासयोर्दक्षिणात्वेन देय ओदन इति टीकाकारः।** सर्वाण्येवान्वाहार्यवन्ति (गो० गृ० १।१।५)। **अनु पश्चादाह्रियते प्रकृतं कर्म यस्मात्, अनु पश्चादाह्रियते यत्प्रस्तुतात्कर्मण इति**

वा। नान्दीमुखश्राद्धं दक्षिणा च अन्वाहरति यज्ञसम्बन्धि दोषजातं परिहरत्य-नेनेत्यन्वाहार्यो नाम ऋत्विग्भ्यो देय ओदन इति (श०ब्रा० १।२।३।५ भाष्ये) सायणः।

## अनूद् (अनु+उद्)

—क्रम् (क्रमु पादविक्षेपे)। प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति (श० ब्रा० १४।७।२।३)। अनूत्क्रामन्ति=पश्चादनुसृत्य ऊर्ध्वं क्रामन्ति बहिर्वा निष्क्रामन्तीत्यर्थः।

—नी (णीञ् प्रापणे)। होतुश्चमसमनून्नयन्ते (तै० ब्रा० १।४।५।२)। होतुश्चमसमापूर्य तत उद्धृत्य चमसान्तरेण पूरयन्तीत्याह।

—पत् (पत्लृ गतौ)। उत्पतन्तमनूत्पेतुः सर्वे ते (रा० ५।६४।२४)। अनूत्पेतुः=पश्चादुत्पुप्लुविरे।

—वा (वा गतिगन्धनयोः)। यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुः (श० ब्रा० १०।३।३।८)। वायुमनूद्वाति=वायुमनुप्रविशति।

—धृ (धृञ् धारणे)। उपहूयमानायामिडायामनूपधारयेत् (लाट्या० श्रौ० १।५।२)। अनूपधारयेत्=व्याक्षिपेत्, विलम्बयेत्।

## अनुनि

—क्रम् (क्रमु पादविक्षेपे)। सप्त पदान्यनुनिक्रामति (श०ब्रा० ३।३।१।१)। सप्त पदान्यनुक्रमेण चलतीत्याह। स यो नो वाचं व्याहृतां मिथुनेन नानुनिक्रामात् (श० ब्रा० १।५।४।६)।

—पद् (पद गतौ)। सा पत्यावनुनिपद्यते (कौ० सू० ६०)। उपशेत इत्यर्थः। अनुशब्दः सामीप्ये।

## अनुनिस् (अनु निर्)

—क्रम् (क्रमु पादविक्षेपे)। निष्क्रम्य पश्चाद्गमनेऽर्थेऽनुनिष्क्रामतेः प्रयोगः (मै० सं० १।६।१०)।

—दिश् (दिश अतिसर्जने)। भूयसामुपदिष्टानामर्थानामसधर्मणाम्। क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यते (भामह० २।८९)॥

—हा (ओहाङ् गतौ) स्तम्भस्य मध्यादनुर्निजिहानम् (भा० पु० ७।८। १९)। क्रमेण निष्क्रामन्तम् इत्यर्थः।

## अनुपरा

—इ (इण् गतौ)। परं मृत्यो अनु परेहि पन्थाम् (ऋ० १०।१८।१)। परं दूर पन्थां पन्थानमनुयाहीत्याह।

—पत् (पत्लृ गतौ)। इन्द्रो वायुमनुपरापतत् (ऐ० ब्रा० २।२५)। **अनुपरापतत्=अभ्यत्वरत।**

## अनुपरि

—इ (इण् गतौ)। य स्माद्यमनुपर्येति भूमिं कुर्वन्निमां सुखाम् (भा० द्रोण० ७०।२)। **अनुपर्येति स्म=अनुप्रवर्तितवान्। आद्यमादियुग-विहित-धर्मम्।** संवत्सरं वा एतद्दनवोऽनुपरियन्ति (अथर्व० १५।१७।८)। **सवत्सर-मन्वावर्तन्ते इत्याह।** यदा च पृथिवी सर्वा यजमानोऽनुपर्यगाः (भा० शां० २२३। २४)। **अनुपर्यगाः=पर्याटीत्=अभ्रमत्।**

—क्रम् (क्रमु पादविक्षेपे)। सुरगिरिमनुपरिक्रामन्भगवानादित्यस्तरणि-मनुपर्याक्रामद् द्वितीय इव पतङ्गः (भा० पु० ५।१।३०)। **सुरगिरिं मेरुं नियमेन परिगच्छन्नित्यर्थः।** (तीर्थानि) सर्वाण्यनुपरिक्रम्य=**अनुक्रमेण पर्यटचेत्यर्थः।** स ताननुपरिक्रामेत् सर्वानेव सदा स्वयम् (मनु० ७।१२२)। **नगराधिपति-स्तान्ग्रामाधिपत्यादीननुक्रमेण पर्यायेणानुगच्छेत्परीचिक्षिषुरित्युक्तं भवति।**

—या (या प्रापणे)। सर्वा दिशोऽनुपरियायात् (आश्व० गृ० ३।१२।५)। **सर्वा आशाः परितः पर्यायेण यायादित्यर्थः।**

## अनुपर्या (अनुपरि+आङ्)

—इ (इण् गतौ)। वित्तं नावक्षराण्यनुपर्यागुः (ऐ० ब्रा० ३।२८)। **अनुपर्यागुः=मार्गे गलितानि। प्रत्यागतानीति तु संस्कृतशार्मण्यकोषः। पर्या-वृत्यागच्छन्त्विति तु सायणः।** ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः। शरीर-मनुपर्येत्य सर्वान्प्राणान् रुणद्धि वै (भा० अश्व० १७।१५)॥ **शरीरमनुपर्येत्य =शरीरे सर्वतः सञ्चर्य।**

—वृत् (वृतु वर्तने)। अथैनं दक्षिणं बाहुमनुपर्यावृत्याभिषिञ्चति (श० ब्रा० ६।३।४।१७)। **अनुपर्यावृत्य=उपस्थाय=समीपे स्थित्वा।** अनु वै श्रेयांसं पर्यावर्तन्ते (ऐ० ब्रा० २।२०)। **अनुयान्ति, पृष्ठतः कृतासना भवन्ती-त्यर्थः।** अयमेव विवक्षितोर्थ इति तस्मात्प्रत्युत्थेया अनुपर्यावृत्या (आप) **इति** वाक्यशेषादवगम्यते। **तत्रानुपर्यावृत्या इत्यस्य पृष्ठतः सञ्चरणयोग्या इत्यर्थः।** आदित्यस्यैव तद्व्रतमनुपर्यावर्तन्ते (ऐ० ब्रा० ३।११)। **पर्यायेणानु-वर्तन्त इत्याह।**

## अनु प्र

—अन् (अन प्राणने)। उत्प्रेक्षानुप्राणिता स्वभावोक्तिः (सा० द० १०)। **अनुप्राणिता=समर्थिता=परिपोषिता।**

**—अस् (असु क्षेपे)**। वर्णसाम्यमनुप्रासः (का० प्र० ९।६९)। अनुप्रासः शब्दसाम्यं वैषम्येपि स्वरस्य यत् (सा० द० १०।३)। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः (का० प्र०)।

**—आप् (आप्लृ व्याप्तौ)**। लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् (रघु० ४।२२)। **अनुप्रापुरनुचक्रुर् इत्यर्थः**। तत प्रावृडनुप्राप्ता (दशकु०)। **ऋतुपर्यायेण प्राप्ता संनिहिता उपनतेत्यर्थः**।

**—इ (इण् गतौ)**। तं वः शर्धं रथानां त्वेषं गणं मारुतं नव्यसीनाम्। अनुप्रयन्ति वृष्टयः (ऋ० ५।५३।१०)। **शर्धमनु प्रस्थिताः प्रारब्धा भवन्ति वृष्टय इत्याह**। क्षिप्रे हैषामपरोऽनुप्रैति (श० ब्रा० १३।८।१।७)। **अनुप्रैति =अनुयाति**। **क्षिप्रे=क्षिप्रम्=अचिरेण**।

**—कॄ (कॄ विक्षेपे)**। सोत्कण्ठैरमरगणैरनुप्रकीर्णान् (कि० ७।२)। **समन्तादावृतान् इत्यर्थः**।

**—दा (डुदाञ् दाने)**। अनुप्रदानात्संसर्गात्स्थानाच्च करणादपि। ज्ञायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात् (तै० प्रा० २।११)॥ त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम् (आप० ध० २।२४।८)। **अन्तर्वेदि बहिर्वेदि च दानमनुप्रदानम्**।

**—धाव् (धावु गतिशुद्ध्योः)**। मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु (ऋ० १०।१४५।६)। **इदं निगदव्याख्यातम्**।

**—नुद् (णुद प्रेरणे)**। अनुगृह्णीयान्नानुप्रणुदेत् (कौ० सू० ५६)। **नानुप्रणुदेत्=न प्रत्याचक्षीत=न निराकुर्यात्**। अनु प्रणुन्ना रक्षोभिः सिंहैरिव महाद्विपाः (रा० ६।७।३६)। **अनुप्रणुन्नाः=उत्सारितानुसृताः**।

**—पद् (पद गतौ)**। भावं न तस्याहमनुप्रपद्याम् (रा० ५।२८।५)। **अनुप्रपद्याम्=अनुप्रपद्येय=प्रतिपद्येय, अभ्युपेयाम्**। एकस्य धर्मेण सतां मतेन सर्वे स्म तं मार्गमनुप्रपन्नाः (भा० वन० २९७।२५)। **अनुप्रपन्नाः=अनुगताः =आस्थिताः**। त्रयीधर्ममनुप्रपन्नाः=**वेदमार्गानुयायिनः**।

**—पा (पा पाने)**। अक्षरमक्षरमेव तद् देवता अनुप्रपिबन्ति (ऐ० ब्रा० २।३७)। **अनुक्रमेण पातुमारभन्ते। अनुप्रयोरर्थवत्तेह दृश्या भवति**।

**—भू (भू सत्तायाम्)**। सूर्यो विश्वमनुप्रभूतः (श० ब्रा० १०।६।३।२)। **विश्वं व्यश्नुत इत्याह**। स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति (छां० उ० ६।११।१)। **अनुप्रभूतः=अभितो व्याप्तः**।

**—या (या प्रापणे)**। आघातमद्यानुप्रयामि शामित्रमालब्धुमिवाध्वरे

ऽजः (मृच्छ० १०।२१)। **अनुप्रयामि=अनुलक्ष्य प्रतिष्ठे।** तं प्रयान्तमनुप्रायात् (भा० उ० ८३।३०)। **अनुप्रातिष्ठत, साकमयात्।**

—युज् (युजिर् योगे)। कृञ्चानुप्रयुज्यते लिटि (पा० ३।१।४०)। **पश्चाद् अव्यवहितं प्रयुज्यत उच्चार्यत इत्यर्थः।** पश्चादनुप्रयुङ्क्षे तं विद्धस्य पदनीरिव (अथर्व० ११।२।१३)। **अनुप्रयुङ्क्षेऽनुबध्नासि, निरन्तरमनुसरसीत्याह।** भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः (अथर्व० १२।१।४०)। **उक्तोऽर्थः। अनुवर्तताम, अनुकरोत्विति वा गृह्यताम्।** तम् (अश्वमेधम्) इष्टिभिरनुप्रायुञ्जत (श० ब्रा० १३।१।४।१)। **अन्वसरन्नित्यर्थः।** वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्...(वरुण आत्मानम्) अग्निना देवेन प्रथमेऽहन्ननु प्रायुङ्क्त (तै० ब्रा० १।८।१)। तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। **अनुकथ्यः।**

—वद् (वद व्यक्तायां वाचि)। वाचं प्रोदितामनुप्रवदन्ति (ऐ० ब्रा० २।१५)। **अनुप्रवदन्ति=पश्चाद् व्याहरन्ति।** तमेता ऋचोऽनुप्रवदन्ति (नि० १०।२०)। **अनुप्रवदन्ति=अभिब्रुवन्ति। तमिति यमं प्रत्यवमृशति।**

—वह् (वह प्रापणे)। यच्छक्नवाम तदनुप्रवोढुम् (ऋ० १०।२।३)। **अनुप्रवोढुम्=अग्रतो गन्तुम्=प्रसर्तुम्।**

—विश् (विश प्रवेशने)। यदि तत्राज्ञातमेव प्रवेष्टुं स्यादुपायः, किं करिष्यति भवान् (अविमारकः सहर्षम्) अनुप्रवेक्ष्यामि (अवि० ४)। **अनुपदमपदान्तरं प्रवेक्ष्यामीत्याह।** विश्रम्य लौकिकाः सस्त्यायमनुप्रविशन्ति (महावीर०)। **संकथामुपक्रमन्ते इत्यर्थः।** अनुप्रवेशादाद्यस्य पुंसस्ते नापि दुर्वहम् (रघु० १०।५१)। **अनुप्रवेशात्=अधिष्ठानात्।** सखे वामदेव! त्वमपि गाधिनन्दनमनुप्रविष्टोसि (अनर्घ० १)। **तन्मतं परिगृहीतवानसि। यथा स चिन्तयति तथा त्वममीत्याह।** पथिकसार्थं विदिशागामिनमनुप्रविष्टः (माल०)। **तेन संगतः तदङ्गभावं गतः, तदेकदेशतामुपेतः।** बलवताभिभूतस्य विदेशगमनमनुप्रवेशो वा नीतिः (पञ्चत०)। **अनुप्रवेशो विजेतृच्छन्दानुवृत्तिः।** भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलः (शिशु० ६।४८)। **पञ्चतन्त्रोक्तार्थानुवाद एषः।** यस्य यस्य हि यो भावस्तस्य तस्य हि तं नरः। अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् (पञ्चत० १।६८)॥ **अनुप्रविश्य=आनुकूल्येनानुकूलाचरणेनाभिमतार्थकथनेन च तदात्मीयतामुपेत्य।**

—सञ्ज् (षञ्ज सङ्गे)। अनेन ह्यस्य ते मर्त्येनात्मनैतं दैवमात्मानमनुप्रसजन्ति (श० ब्रा० ६।३।४।१२)। **अनुप्रसजन्ति=अभिसम्बध्नन्ति=संयुञ्जन्ति।**

**—सद्** (**षद्लृ विशरणगत्यवसादनेषु**)। रोहिणीमृगलाञ्छनं साक्षीकृत्यार्यपुत्रमनुप्रसादयामि (विक्रम० ३)। **अल्पार्थोऽनुः शक्यस्त्यक्तुम्**।

**—हृ** (**हृञ् हरणे**)। तन्मुहूर्तं धारयित्वानुप्रहरति (श० ब्रा० १।७।३।१७)। **प्रास्यतीत्यर्थः। इहाप्यनुना नार्थः।** अभ्युक्ष्यैते (पवित्रे) अग्नावनुप्रहरेत् (द्रा० गृ० १।२।१५)। **पश्चात् प्रक्षिपेदित्यर्थः।**

### अनुप्रति

**—पद्** (**पद गतौ**)। ग्रामान्तपद्धतिमनुप्रतिपादयामि (अवदा० जा० २४, श्लो० ३३)। **प्रापयामीत्यर्थः।**

### अनुवि

**—ईक्ष्** (**ईक्ष दर्शने**)। एवं स तां हेतुभिरानुवीक्ष्य सीतेयमित्येव निविष्टबुद्धिः। सलीय तस्मिन्निषसाद वृक्षे (रा० ५।१६।३४)॥ **अनुवीक्ष्य=परीक्ष्य। आर्षो दीर्घः।**

**—ऊह्** (**ऊह वितर्के**)। अथानुव्यूहति (श० ब्रा० ३।५।१।३३)। **इदानीं स (मृदं) वियुङ्क्ते पृथक्करोतीत्याह।**

**—क्रम्** (**क्रमु पादविक्षेपे**)। प्रजापतेर्वा एष विक्रमाननुविक्रमते य उपहरति (अथर्व० ६।६।२६)। **अनुः पश्चादर्थे। अन्यत्समानम्।** तमहमनुव्यक्रंसि (शां० श्रौ० ४।१२।३)। **पश्चात्पादं व्यहरमित्याह। विहरणं चरणन्यासः।**

**—चर्** (**चर गतिभक्षणयोः**)। लोकानुग्रहार्थमनुविचरन् (अवदा० जा० २३)। **देशाद् देशान्तरं परिभ्रमन् इत्यर्थः।**

**—चल्** (**चल कम्पने**)। तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् (अथर्व० १५।३।११)। **अनुव्यचलन्=अनुप्रातिष्ठन्त।**

**—धा** (**डुधाञ् धारणपोषणयोः**)। आनुपूर्व्यं हविषा दैवत उच्चैरुपांशुतायामध्वर्युमनुविदधीत (शां० श्रौ० १३।१।३)। **अध्वर्युमनुविदधीत=अध्वर्युं विज्ञापयेत्, विधेयं वेदयेदित्यर्थः।** न चाद्यत्वे कश्चिद् व्यवहरति, केवलमृषिसम्प्रदाय इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते (अप्रयुक्ते दीर्घसत्रवद् इति वार्त्तिके भाष्ये)। **शास्त्रेणानुविदधते=शास्त्रेणान्वाचक्षते।** अर्क एव तदर्क्यमनुविधीयते (तै० सं० ५।३।४)। **पश्चाद् विधीयते सम्पाद्यते निर्वर्त्यते संश्रियते।** उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति। करोति कुर्वतः कर्म च्छायेवानुविधीयते (भा० ६।७५३)॥ आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते (भा० शां० ६३।२८)। **अनुविधीयते=अनुसरति।** इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते (गीता २।६७)। **अनुविधीयते=अनुगं क्रियते।** तं चैव धर्मं पौराणम्

...अद्याप्यनुविधीयन्ते (भा० आदि० १२२।६) । **अनुसरन्तीत्यर्थः** । वृत्तिं च तेभ्यो (पुत्रेभ्यः) ऽनुविधाय कांचित् (भा० उ० ३७।३६) । **अनुविधाय=संविधाय=प्रकल्प्य** । सा स्त्री यानुविधायिनी (हितोप० २।१३४) । **अनुविधायिनी=वचनकरी=वशंवदा=आश्रवा** । भवितव्यतानुविधायीनीन्द्रियाणि (विक्रम०) । भवितव्यतानुसारीणि । **भवितव्यताया अविरोधेन स्वं स्वं व्यापार कुर्वन्तीन्द्रियाणीत्याह** । तथापि मर्त्यानुविधस्य वर्ण्यते (भा० पु० १०।५०।३०) । **अनुविधत्तेऽनुवर्तत इत्यनुविधो भक्तः । अन्यत्र दुर्लभोऽयं शब्दः । भागवतकारस्य त्वप्रयुक्तप्रयोगः शीलम्** । पदमनुविधेयं च महताम् (भर्तृ० २।२८) । **अनुसार्यमित्यर्थः** ।

**—धाव् (धावु गतिशुद्ध्योः)** । तस्येमां (पृथिवीं) लोहितमनुव्यधावत् (काठक० ३१।८) । **अनुव्यधावत्=अनुन्यस्यन्दत** । अनु गात्रा विधावतु (ऋ० ८।१७।५) । **गात्राण्यनुविधावतु सोमः, गात्रेषु सञ्चरत्वित्याह** ।

**—नद् (णद शब्दे)** । ततः स तेषां रुदतां महात्मनां भुवं च खं चानुविनादयन्स्वनः (रा० ८।१०३।४०) । **सुतमां प्रतिध्वनयन्नित्यर्थः** ।

**—नश् (णश अदर्शने)** । प्रजाश्च तस्य क्षीयन्ते ततः सोऽनुविनश्यति (भा० शां० ६०।३८) । **सह नश्यति समं वा नश्यतीत्याह** । कामानुसारी पुरुषः कामाननुविनश्यति (भा० १२।६५३३) । **उक्तोऽर्थः** । विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति (बृ० उ० २।४।१२) । **अनुविनश्यति=तत्रैव लीयते** ।

**—प्लु (प्लुङ् गतौ)** । ततस्तान् देवा (इन्द्रियाणि) अनुविप्लवन्ते (भा० उ० ४२।८) । **अनुविप्लवन्तेऽनूत्क्रामन्ति** ।

**—ली (लीङ् श्लेषणे)** । यथा सैन्धवखिल्य उदकमेवानुविलीयते (श० ब्रा० १४।५।४।१२) । **अनुः क्रममाह, विश्च विशेषम् । द्रवीभूयोदकमेवानुप्रविशतीत्याह** ।

**—सद् (षद्लृ विशरणगत्यवसादनेषु)** । अथ यत्रैतदाकाशमनुविषण्णं चक्षुः (छां० उ० ८।१२।५) । **अनुगतम् इति कश्चित्** ।

**—सि (षिञ्)** । अपश्यन्तोऽनुविषयं भुञ्जते विघसाशिनः (भा० शां० २८७।४०) । **अनुविषयः=रसः=आस्वादः** ।

**—सृज् (सृज विसर्गे)** । तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत् (ऐ० ब्रा० ३।२६) । **अनुः पश्चादर्थे** ।

**अनुव्यव (अनु+वि+अव)**

**—इ (इण् गतौ)** । पापीयांसो वै भवामोऽसुररक्षसानि वै नोऽनुव्य-

धागुः (श० ब्रा० ३।४।२।२)। **अनुव्यवागुः=अन्तरायन्=मध्येऽपतन्। व्यवौ व्यवधानमाहतुः। अनुव्याप्तिम्।**

—सो (षो अन्तकर्मणि)। कथमनालोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयते (यो० सू० ३।४७ भाष्ये)। **अनुव्यवसीयते=निश्चीयते।** घटमहं जानामीति यज्ज्ञानं सोऽनुव्यवसायः।

**अनुव्या (अनु+वि+आङ्)**

**—ख्या (ख्याञ् प्रकथने)।** एतमात्मानं त्वेव ते भूयोऽनुव्याख्यास्यामि (छा० उ० ८।०।३)। **वितत्य वर्णयिष्यामीत्याह।** ता अनुव्याख्यास्यामः (बौ० ध० ३।१।१।४)। **क्रमेण विविच्य आख्यास्यामः।**

**—वृत् (वृतु वर्तने)।** पथामनुव्यावर्तने (त्वा जहिमो वयम्) (अथर्व० ६।२६।२)। **अनुप्राप्ताः परस्परं व्यावर्तन्ते यस्मिन् प्रदेशे सोऽनुव्यावर्तन इति सायणः।**

**—हृ (हृञ् हरणे)।** य एनं तत्रानुव्याहरेद् द्रप्स्यति वा प्र वा पतिष्यति (श० ब्रा० ३।२।१।६)। **अनुव्याहरेत्=आक्रोशेत्=शपेत्।** स य एनं शस्ते तूष्णींशंस उप वा वदेदनु वा व्याहरेत् (ऐ० ब्रा० २।३१)। **उदितपूर्व एवार्थः।** स यद्येनं प्रथमायां सामिधेन्यामनुव्याहरेत् (श० ब्रा० १।४।३।११)। होमधेन्वा वत्समस्य प्रमत्त इषुणाऽहनम्। चरन्त विजने शल्य ततोऽनुव्याजहार ह (भा० कर्ण० ४२।४०)॥ **शशापेत्यर्थः।** पुत्रशोकाभिसन्तप्ता गान्धारी हतबान्धवा। यदनुव्याजहारार्ता तदिदं समुपागमत् (भा०मौ० २।२१)॥ ततोऽनुव्याहृतं श्रुत्वा गते देवे विभावसौ (भा० शां० ३१८।१३)। **इहानुव्याहरतिः शापं नाह। अनुरणनं केवलमाचष्टे।** सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः (रा० १।२।४०)। **अनुव्याहरणमावृत्त्योच्चारणम्। अनुव्याहारः** शान्तिकपौष्टिकमिति कामसूत्रटीका।

**अनुसम्**

**—अस् (असु क्षेपे)।** त (प्रस्तरं) प्राञ्चमनुसमस्यति (श० ब्रा० १।८।३।१८)। अग्नेः प्रिय पाथोऽपीतमितीतरावनुसमस्यति (श० ब्रा० १।८।३।२२)। तदेनं कृत्स्नं कृत्वाऽनुसमस्यति ( ) **अनुक्रमेण सन्धत्त इत्यर्थ।** बर्हिरनु समस्यति परिधींश्च (श० ब्रा० २।६।१।४७)। **अनुक्रमेणाव्यवधानेन सह क्षिपति इत्यर्थः।**

**—इ (इण् गतौ)।** त यथा गृहातितं कर्मणानुसमियादेवमेवैनमनुसमिमः (ऐ० ब्रा० २।३१)। **अनुसमियात्=पूजयेदिति षड्गुरुशिष्यः।** एनं यज्ञमनु-

समिभः=श्रद्धया कुर्म इति च सः। आनुकूल्येन सम्यक् प्राप्नुयाम उपचरेमेति सायणः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् (कठ उ० ५।७)। स्थाणुतां स्थावरतामनुगच्छन्तीत्याह। काण्डानुसमयः पदार्थसमूहस्यानुष्ठानम्। पदार्थानुसमयः प्रत्येकं पदार्थानामनुष्ठानम्। अपि वा समानजातीयेनानुसमीयात् (भा० श्रौ० ६।१७।७)। समागममभ्यनुजानीयादित्यर्थः। अपृणन्तमभि सं यन्तु शोकाः (ऋ० १।१२५।७)। अभिसंयन्तु=आभिमुख्येन संगच्छन्तु।

—कल् (कल गतौ संख्याने च)। अनुसंकालयन्ति गाम् (आश्व०गृ० ४।२)। पृष्ठतः प्राजन्ति प्रणदन्ति।

—क्रम् (क्रमु पादविक्षेपे)। इष्टापूर्ते अनुसङ्क्राम विद्वान् (अथर्व० १८। २।५७)। अनुसम्प्राप्नुहीत्यर्थः।

—ख्या (ख्याञ् प्रकथने)। यजमानमेवैतत् स्वर्ग्यं पन्थानमनु सङ्ख्यापयति (श० ब्रा० ३।६।३।३०)। अनुसङ्ख्यापयति=उदीक्षयति।

—गम् (गम्लृ गतौ)। पश्चेव हि हीनोऽनुसंजिगमिषति (ऐ० ब्रा० २। ३६)। अवहीनोऽनुसृत्य संगन्तुमिच्छतीत्यर्थः।

—ग्रह् (ग्रह उपादाने)। तं (मुनिं) पप्रच्छानुसंगृह्य कृच्छ्रामापदमास्थितः (भा० शां० १०४।३)। अनुसंगृह्य=यथाविधि पादावुपसंगृह्य, चरणौ निपीड्य। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिण इति हि तत्र मनुप्रोक्तो विधिः। ततोऽनुसंगृहीतोस्मि यत्प्रीतो मे भवान्गुरुः (रा० ६।१०४।३१)। अनुसंगृहीतः =अनुगृहीतः कृतानुग्रहः=अनुग्रहभाजनतां नीतः। सम् शब्दः पादपूरणो विवक्षितार्थस्यानुपकारकः।

—चर् (चर गतिभक्षणयोः)। सर्वांल्लोकाननु संचरति (श० ब्रा० २।३।२।३)। विचरतीत्यर्थः। सर्वाणि स्थानान्यनुसंचरति त्वरमाणः (नि० ७। २७)। उक्तोऽर्थः।

—तन् (तनु विस्तारे)। इदं मे प्रातःसवनं माध्यन्दिनं सवनमनुसन्तनुत (छां० ३।१६।२)। अनुसन्तनुत=अनुसन्तते अनुक्रमबद्धे सम्पादयत। यथा मे प्रातः सवनं माध्यन्दिनेन सवनेनानुस्त्रियताम्। इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवत् (श० ब्रा० १२।४।१।४)। अनुसन्तनवत्=अनुसन्तनुयात्=उत्तरत्राविच्छेदेन नयेत्।

—दिश् (दिश अतिसर्जने)। तानु तेऽनुसंदिशामि (अथर्व० ४।१६।६)। प्रेषयामि, प्रेरयामि, विसृजामीति वा।

—धा (डुधाञ् धारणपोषणयोः)। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः (मनु० १२।१०६)। अनुसन्धत्ते=विमृशति, परीक्षते। तर्केण मीमांसालक्षणेन। प्रमवयोग्यं स्थानमनुसन्धीयताम् (हितोप० ३)। विचीयतामित्यर्थः। यथाकर्तव्यमनुसन्धीयताम् (हितोप० ३)। चिन्त्यताम् इत्यर्थः। शिथिलीभूतवासनः कुर्वन्नपि फलं नानुसन्दधाति (यो० वा० ४।३८।६)। नानुसन्दधाति=न मनसि करोति, न चिन्तयति। नास्य फलोद्देश्यिका प्रवृत्तिर्भवतीति तात्पर्यार्थः। आत्मानमनुसन्धेहि शोकचर्चां च परिहर (हितोप०)। अनुसन्धेहि=समाधेहि=समाहितं कुरु, शाम्य। अत्रार्थेऽन्यत्र प्रयोगो दुर्लभः। समाधाञस्तु प्रयोगः प्रथितः। नैतदनुसन्धाय मयोक्तम् (महावीर०)। एतत्सुविचिन्त्य लक्ष्यीकृत्य वेत्यर्थः। एतौ तौ मामनुसन्धत्तः (मृच्छ० २)। मामनुबध्नीतः, निरन्तरमनुसरत इत्याह। अलमनेनातीतोपालम्भेन। प्रकृतमनुसन्धीयताम् (महावीर०)। अनुसन्धीयतामनुस्त्रियताम्। अम्ब त्वामनुसन्दधामि भगवद्गीते भवद्वेषिणीम्। चिन्तयामि, स्मरामीति वा। तं तास्ववस्थास्वनुसन्दधीत ज्ञात्वा बलं तं परिवर्तयेच्च (पञ्चत० १। ५६)। परीक्षेतेत्यर्थः। कुकारुकस्यैकमनुसन्धित्सतोऽपरं च्यवते। अत्र लौकिके न्यायेऽनुनार्थे विशेषं करोति। अनुसन्धातुं सन्धातुमिच्छतोऽनुसन्धित्सत इत्यर्थः। काव्यानुसन्धानबलात् (का० प्र०)। काव्यचिन्तनमहिम्ना। दुर्गानुसन्धाने को नियुज्यताम् (हितोप०)। दुर्गपरीक्षणक्रियायाम् इत्यर्थं इति केचित्। दुर्गसमपेक्षितसंभारैः संभरणे इत्यन्ये। सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य (का० सू० वृ० ५।११)। अनुसन्धिः प्रत्यवमर्शः। व्यास एव अहं मनुरभवं सूर्यश्चेति वामदेववत् प्रत्यगभिन्नं ब्रह्मानुसन्दधानः स्वात्मानमेव नमस्करोति (हरि० १। १।८ इत्यत्र भारतभावदीपे)। अनुसन्दधानः स्मरन्। तामनुसन्दधानोऽहमपि मर्मभेदिकामवाणेन सन्दलित इव (धूर्तसंवादे)। अनुसन्दधानश्चिन्तयन् वा स्मरन्वा। तच्छेषमात्मवचसाप्यनुसन्दधानः (काद० उत्तरार्धोपक्रमे)। पश्चात्पूरयन्नित्यर्थः। शब्दार्थस्तु योजयन्नित्येव। चरेणानुसन्धीयमानः (मुद्रा० ६)। अनुगम्यमान इत्यर्थः। नमोवाके वषट्कारोऽनु संहितः (अथर्व० १३।४। २६)। अनुसंहितोऽनुबद्धः। अहिंसा सर्वधर्मानुसंहिता (भा० १३।५५९३)। सर्वधर्मानुगता, सर्वधर्मानुस्यूता। त्रयोऽनुसन्धिता लोका बुद्ध्या सत्येन चानघ (हरि०१।१५।१४)। अनुसन्धिताः=अनुसंहिताः=ध्यानबलेन तत्त्वतो ज्ञाताः। अत्र कथोपकथनं भारतेऽनुसन्धेयम् इति नलोदये (३।१८) टीकाकारः। अनुसन्धेयं विचेयमन्वेष्यमित्यनर्थान्तरम्। कस्ते निर्बन्धः पदे पदे मामनुसन्धातुम् (मृच्छ० १)। अनुसन्धातुम्, अनुगन्तुम्, अनुरोद्धुम्। तत्रैको ज्येष्ठः पुत्रादिः कर्ता, अपरेऽनुसन्धातारः (आश्व० गृ० ४।७।१) इत्यत्र हरदत्तः। उपद्रष्टार इत्यर्थः।

—रभ् (रभ राभस्ये)। अन्वारभेथामनुसंरभेथाम् (अथर्व० ६।१२२।३)। संरभेथाम्=सततं संरब्धौ भवतमित्याह।

—व्रज् (व्रज गतौ)। प्रपद्यमाने राजन्यग्रेणानोऽनुसंव्रजेत् (आश्व श्रौ० ४।४।५)। इमा सोम्यानुसंव्रजेति (छां० उ० ४।४।५)। सम्यगनुयाहीत्याह।

—हृ (हृञ् हरणे)। अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः (वा०)। अन्त्येऽल्यनुसंहारः क्रियते इति भाष्यम्। सोऽयं कार्यस्यान्त्येऽल्यनुसंहारो वृत्तिकारेण दर्शित इति पा० १।१।५२ इत्यत्र पदमञ्जरी। अनुसंहारः= सम्बन्धः। पदं पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यम् (यो० सूत्र० ३।१७ भाष्ये)। अनु पश्चात् संहरत्येकत्वमापादयतीत्यनुसंहारबुद्धिस्तया निर्ग्राह्यम्।

### अनुसमा (अनु+सम्+आङ्)

—धा (डुधाञ् धारणपोषणयोः)। तस्य चार्थस्य विज्ञाने गर्भकराणां च भावानामनुसमाधिः (चरक० शरीर० ४।५७)। अनुसमाधिरनुष्ठानम्। बुद्धिः प्रणिहिता येन मनश्चानुसमाहितम् (रा० २।२२।१४)। अनुसमाहितमैकाग्र्यमुपनीतम्।

### अनुसम्प्र (अनु+सम्+प्र)

—आप् (आप्लृ व्याप्तौ)। तदिदं मेऽनुसम्प्राप्तं देवि दुःखं स्वयं कृतम् (अवदा० दश० १।११)। अनुक्रमेण कालपर्यायेण प्राप्तम् इत्यर्थः। ततः सहस्रं विप्राणां विदुषां समलङ्कृतम्। स्नातानामनुसम्प्राप्तम्...(भा० शां० १७१।११)॥ अनुक्रमेण सम्प्राप्तमुपागतम्। सहस्रस्य विप्राणां यौगपद्येन प्राप्तेरसम्भवादनुक्रमद्योतकोऽनुशब्दोऽर्थवान् ननु।

## अव

—अज् (अज गतिक्षेपणयोः)। श्रोणामेक उदकं गामवाजति (ऋ० १।११६१।१०)। उदकमवगाहेत यथा तथाऽजति क्षिपति प्रणुदतीत्यर्थः। अवशब्दो नीचैरर्थकः।

—अत् (अत सातत्यगमने)। अश्मास्यवतम् (ऋ० २।२४।४) इत्यृचं व्याचक्षाणो यास्कोऽवतमित्यवाततिम् इत्यनेनानुव्याख्याति। तत्र अवाङ् अततं भूमिं गतमिति दुर्गवृत्तिः (नि० १०।१३)।

—अद् (अद भक्षणे)। अव रुद्रमदीमहि (वा० सं ३।५८)। अवादीमहि=आदयामः। अन्तर्णीतण्यर्थकोऽदिः। अवयुत्य इतराभ्यो देवताभ्यो रुद्रमादयाम इत्युवटः।

—**अन्** (**अन प्राणने**)। स वै सकृदवान्यात् (श० ब्रा० ११।१।६।३२)। **अवान्यात्**=**निश्वस्यात्**। एतां दिशमनवानन्त्सृत्वा कुम्भं प्रक्षीयानपेक्षमाण एहि (श० ब्रा० १३।८।३।४)। **अनवानन्**=**अनिश्वसन्**।

—**अय्** (**अय गतौ**)। अवायन्तां पक्षिणः (अथर्व० ११।१२।८)। **अवाङ्मुखा निपद्यन्तामित्यर्थः**।

—**अर्ज्** (**अर्ज षर्ज अर्जने**)। तामवार्जन्ति (श० ब्रा० ४।५।८।११)। **उत्सृजन्तीत्यर्थः**।

—**अस्** (**असु क्षेपे**)। प्रथमपातिनं शकलमवास्य (आप० श्रौ० ७।३।२०)। **अवास्य**=**नीचैः क्षिप्त्वा**।

—**आप्** (**आप्लृ व्याप्तौ**)। विदुस्ते वीर कर्माणि नानवाप्तानि कानिचित् (भा० सभा० ५।३४)। **अनारब्धानीत्यर्थः**। पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् (मनु० ६।२०६)। **अनवाप्तम् पित्राऽसामर्थ्येनोपेक्षितत्वादप्राप्तम्**। हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् (भा० शां०१८१।५)। **हस्तौ अवाप्येते प्रवेश्येते यस्मिन्निति** हस्तावापो **हस्तनिगड** इति नीलकण्ठः।

—**इ** (**इण् गतौ**)। मा नो द्यूतेऽवगान्मा समित्याम् (अथर्व० १२।३।४६)। **माऽवगात्**=**मा प्रणशत्**=**माऽपहारि**। अवैतु पृश्नि शेबलम् (अथर्व० १।११।४)। **अवैतु**=**अर्वाक् पततु**। यथा वातो यथा वनम्...एवा त्वं दशमास्य सहावेहि जरायुणा (ऋ० ५।७८।८)। **अवेहि**=**अवाङ् इहि, नीचैर्याहि, निष्क्राम**। समानमेतदुदकमुच्चैत्यव चाहभिः (ऋ० १।१६४।५१)। **उदेति चावैति च**। **उच्चैरेति अर्वाङ् चैतीत्यर्थः**। अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे (ऋ० १।२४।१४)। **अवेमहे**=**अपनयामः**=**अपाकुर्मः प्रायश्चित्तेन**। **हेडः क्रोधः**। **सान्तं चेदम्**। अव तदेन ईमहे तुराणाम्। (ऋ० ७।५८।५)। गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु (पा० ५।१।१३४)। **इह तदवेतः**=**तत्प्राप्तः**। **तदवगतवान् वा**। गार्गिकामवेतः। एको मासः संवत्सरस्यानवेतः स्यात् (तै० सं० २।६।३।५)। **अनवेतः**=**अनतीतः**। अव त्वानेना नमसा तुर इयाम् (ऋ० ७।८६।४)। **अवेयाम्**=**प्राप्नुयाम्**। अव देवैर्देवकृतमेनोऽयासिषम् (वा० सं० ३।४८)। **देवैरिन्द्रियैः कृतम्**। **अवायासिषम्**=**(जले) अवनीतवानस्मि**। नव नव दक्षिणा भवन्ति नावयन्त्येवैनम् (षड्विंश०३।८)। अवैत्वभ्वं कृणुता वरीयः (ऋ०८।४६।५)। **अवैतु**=**अपैतु**। हितं तेषामहित मामकानाम्। एतत् सर्वं मम नावैति चेतः (भा० वन० ४।१८)॥ **नावैति नाङ्गी करोति**। अवैन्नाशं दशास्यस्य निर्वृत्तमिव राघवः (भट्टि० ७।३३)। **अवैत्**=**प्रत्यैत्, अजानात्**। अवैमि ते सारमतः प्रियं त्वाम्

(कु० ३।१३)। भवानपीदं परवानवैति (रघु० २।५६)। अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम्.. सुखसङ्गिनमवैमि (शा० ५ )। **अवैमि =मन्ये, पश्यामि।**

**—ई (ईङ् गतौ)।** अवैषां हेड ईमहे (वा० सं० १६।६)। **अपनयामः।**

**—ईक्ष् (ईक्ष दर्शने)।** योत्स्यमानानवेक्षेऽहम् (गीता० १।२३)। **इहावशब्दो नात्यर्थमुपकरोति धात्वर्थस्य।** वसुधेयमवेक्ष्यतां त्वया (रघु० ८।३)। **अवेक्षा प्रतिजागर इत्यमरप्रामाण्याद्वसुधायां प्रतिजाग्रता त्वया भाव्यमिति शब्दार्थः। वसुधा पाल्यतामिति तात्पर्यार्थः।** त्वं राजा रक्षसा लङ्कामवेक्षेथा विभीषण (भट्टि० १६।२३)। अथाऽऽज्यमवेक्षते (श०ब्रा० १।३।१।२६)। **आज्ये पात्रस्थेऽन्त-र्दृशं पातयतीत्यर्थः।** उदशराव आत्मानमवेक्ष्य ··· तौ होदशरावेऽवेक्षाञ्चक्राते (छां०उ०८।८।१)। उक्तोऽर्थः। प्रतिगृह्य सौम्यं होता पूर्वश्छन्दोगेभ्योऽवेक्षेत (ऐ० ब्रा० ३।३२)। **घृतपूर्णे सौम्ये चरौ छायां पश्यन्ति शुद्धय इत्यत्र षड्गुरुशिष्यः।** न कूपमवेक्षेत (बौ० ध० २।३।६।२७)। **आत्मानं तत्र द्रष्टुमिति शेषः।** नोद-पानमवेक्षेत (गो० गृ० ३।५।१३)। आशीविषो नैनो राजानमवेक्षते (तै० सं० ६।६।७।२)। **राज्ञि सोमे दृष्टिं न पातयतीत्यर्थः।** अपि वाचं भाषमाणस्य काव्यां धर्मारामामर्थवतीमहिंस्राम्। अवेक्षेरन्धार्तराष्ट्राः शमार्थम्...(भा० उ० ६३।२०)। **अवेक्षेरन्=अवदधीरन्=आद्रियेरन्।** श्लाघ्यां दुहितरमवेक्षस्व जानकीम् (उत्तर० १।७)। **तस्यां प्रतिजागृहि।** न कमलिनीं दृष्ट्वा ग्राहमवे-क्षते मतङ्गजः (माल० ३)। **नावेक्षते न गणयति।** नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् (मनु० ४।१६)। **अवेक्षेत=चिन्तयेत्=विचारयेत्।** सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा (भा० शां० २१७।२८)। **हेलया हेय-त्वेन पश्येत्। अवशब्दोऽवक्रोशे वर्तते।** न परदुःखातुराः स्वसुखमवेक्षन्ते महा-कारुणिकाः (अवदा० मैत्री० जा०)। **नावेक्षन्ते—नाद्रियन्ते।** सोऽवेक्षते जगत्कृत्स्नं न सहायमवेक्षते (शि० भा० २६।१६)। **जगति प्रतिजागर्तीत्याह।** न हि मन्ये नृशंसे त्व राजधर्ममवेक्षसे (रा० २।७४।२१)। **अवेक्षसे=वेत्थ।** अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् (भा० पु० १।४।८)। **अवेक्षते=प्रतीक्षते। अन्यत्र दुर्लभोऽयमर्थः।** अत्रास्त्यवेक्षा त्वयि मे रक्ष्यो हि शरणागतः (रा० २।६६।५१)। **अवेक्षा=आदरः।** मम त्ववेक्षया वीर शृणु विज्ञापयामि ते (भा० उ० ८।४२)। **इहावेक्षाऽऽदरोऽवधानम्।** न ते पुत्रेष्ववेक्षाऽस्ति (भा० आदि० २३३।८)। यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा (रा० २।७३।१८)। **अवेक्षा गौरवं संभावना पूज्यबुद्धिः।** ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया (भा० वन० १०।१४)। **अनन्तरोदीरित एवार्थः।** वर्णा-

श्रमावेक्षणजागरूकः (रघु० १४।८५)। वर्णाश्रमाणामनुसन्धानेऽप्रमत्तः। अनवेक्षणात् कृषिः (विनश्यति)। अनवेक्षणमुपेक्षा प्रमादः। फलप्रचयनोदपानावेक्षण...(द्रा० गृ० ३।१।३९)। उदपानं कूपः। तत्रावेक्षणमवाङ्मुखीभूय निरीक्षणम्। अवेक्षमाणस्त्वां मां च न्यस्तास्त्रश्चाहवे हतः (भा० द्रोण० १९९। ४८)। अवेक्षमाणः=प्रतिजाग्रत्=अप्रमाद्यत् (आवयोः)। अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् (रा० ३।५२।४२)। अधः पश्यन्तीम्। स्थाने वश्यवाचः कवेरवोपसर्गस्य प्रयोगः। शरीरमग्नौ संयोज्यावेक्षमाणा अपोऽभ्युपयन्ति (शातातपः)। अनवेक्षमाणाः पृष्ठतोऽनालोकयन्तः। अनपेक्षमाणा इति पाठ इष्यते। प्रावृषीवासितग्रीवो मज्जेत निशि निर्जने। मायूरेण गुणेनैव स्त्रीभिश्चावेक्षितश्चरेत् (भा० शां० १२०।१३)। अवेक्षितः कृतावेक्षः।

—उक्ष् (उक्ष सेचने)। दध्ना मधुमिश्रेणावोक्षति (तै० सं०५।४।५।२)। अवोक्षति=अवाङ्मुखेन हस्तेनोक्षति। अथ सभाया मध्ये अधिदेवनमुद्धत्यावोक्ष्य (आप० श्रौ० ५।६।१९।२)। उक्तोऽर्थः। उद्धते वा अवोक्षितेऽग्निमादधति (श० ब्रा० ६।४।४।१८)। उक्षतेः प्रयोगेऽभिप्रावानामुपसर्गाणां विषयनैयत्यं पुरातनैरुक्तम्—उत्तानेन हस्तेन प्रोक्षणं परिकीर्तितम्। न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्॥

—कर्ण्। यात्रापहृतचेतस्त्वात्सद्वाक्यमवकर्णयन् (बृ० श्लो० सं० ३। ७६)। अवकर्णयन् अनाकर्णयन्निव। अवशब्द इह श्रवणक्रियायां न्यूनतामाह। स्थानेऽस्य प्रयोग इति नन्दति नश्चेतः।

—काश् (काशृ दीप्तौ)। वर्णावकाशमपि मे पश्य पाण्डव यादृशम् (भा० वि० २०।१५)। वर्णावकाशो दीप्तिसङ्कोच इति नीलकण्ठः। अवरुद्धः काशोऽवकाशः। प्रादिः। अवशब्दः प्रायशोऽसाकल्यमाचष्ट उत्तरपदार्थस्य। उभयतो मांसैः संछन्नं नावकाशते (श० ब्रा० ८।७।४।२०)। नावकाशते न दृग्विषयतां याति। इहि तिस्रः परावतः...धेना इन्द्रावचाकशत् (ऋ०८।३२।२२)। जनानां धेना अवचाकशद् वृषा (ऋ० १०।४३।६)। अन्तरिक्षेण पतति विश्वा रूपावचाकशत् (ऋ० १०।१३६।४)। इहोदाहृतिष्ववकाशतिर्दर्शनार्थे प्रयुक्तः। अवश्च दर्शनस्य निम्नाभिमुखतामाह।

—कील् (कील बन्धने)। क्षुत्पिपासावकीलनम् (भा० आश्व० ४५।३)। अवकीलका अन्तः प्रविष्टाः शङ्कव इति नीलकण्ठः। अवशब्दोऽधोगतिमाहेति शोभनोऽस्येह प्रयोगो ग्राह्यो।

—कृत् (कृती छेदने)। एवमुक्त्वा तु गान्धारी कुरूणामवकर्तनम्। अपश्यत्तत्र तिष्ठन्ती सर्वं दिव्येन चक्षुषा॥ (भा० स्त्री० १६।१)। अवकर्तनं युद्धभूमिः।

सन्दर्श्याग्रे स्वभार्यायाः कर्णनासावकर्तनम् (राज० ७।८६२)। **अवकर्तनं कर्णनासस्यैकदेशस्य कर्तनम् । अवशब्द उत्तरपदार्थस्य क्रियाया असाकल्यमाचष्टे प्रायेणेत्यसकृदुक्तमधस्तात् ।** इयं वस्त्रावकर्तेन संवीता चारुहासिनी (भा० वन० ६२।२२) । **वस्त्रावकर्तो वस्त्रखण्डः ।** कृष्णाजिनग्रीवा एवावकृत्य प्रयान्त्युति (श० ब्रा० ३।३।४।८) । **अवकृत्य=अपच्छिद्य ।** निजघ्नुः परमेष्वासाः सर्वांस्तान्निशितैः शरैः । आगर्भादवकृन्तन्त...(भा० आदि० १७८।१६-२०)। अवकृपा **कोपो भवति। अवशब्दोऽर्थविपर्यासकृत्। कृपाया अपकर्षमभावं** वाऽऽह ।

**—कृष (कृष विलेखने)** । कच्चिदर्थेष्वसंमूढान् हितकामाननुप्रियान् । नावकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् (भा० सभा० ५।७३) ॥ **नावकर्षसि =न निष्कासयसि=न बहिष्करोषि । अपकर्षसीति पाठान्तरम ।** प्राकृष्यमाणः कलिना सौहृदेनावकृष्यते (भा० वन० ६२।२६) । **अवकृष्यते=हीयते । प्रतिकर्तुं** प्रकृष्टस्य नावकृष्टेन युज्यते (रा० ४।१७।४७) । **अवकृष्टः=अपकृष्टः=अधरः=नीचैःपदस्थः । प्रकृष्टः=उत्तरः । निष्कासितोवकृष्टः स्यादिति कोषः ।** अवकृष्टोत्तरासङ्गः कृशो धमनिसन्ततः (भा० वन० १२।१४) । **अवकृष्टोऽधः कृष्ट उत्तरासङ्ग उत्तरीयं यस्य सः । त्यक्तोत्तरीयवस्त्र इत्यर्थः ।** पणो देयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम् (मनु० ७।१२६) । **अवकृष्टस्य गेहादिसंमार्जनोदकवाहादेः कर्मकरस्येति कुल्लूकः ।** मामग्रासनतोऽवकृष्टमवशम् (मुद्रा० १।१२) । **अवकृष्टमधः पातितम् ।** नखावकृष्टेऽत्यर्थं पिण्डकाः सदाहपाका भवन्ति (सुश्रुत० २।२६१।१) । **नखावकृष्टे=नखस्याधोभागे ।** पादावकर्षणसन्धानैः (भा० द्रोण० १४२।४५) । **पादावकर्षणम्=पादयोर्नीचैः कर्षणम् ।**

**—कॄ (कॄ विक्षेपे)** । पुनः पुनः कुत्सयन्तं तु विगृह्यादितो ग्रन्थेनावकिरेत् (का० सं० विमान० शिष्योप०)। अवाकीर्यत कनीयांसौ स्तोमावुपाऽनृत, यज्ञावकीर्णा हि (पञ्चविंश० ब्रा०) । ततो वायुर्महाराज दिव्यैर्माल्यैः समन्वितः । अभित पाण्डवं चित्रैरवचक्रे समन्ततः (भा० वन० १७५।१६) । **आकीर्णवान्, व्याप्तवानित्यर्थः । किरतेश्चेत्प्रयोगोऽवचकर इति युक्तं स्यात् ।** महावातसमुद्भूत यन्मामवकरिष्यति । रजो रमण तन्मन्ये परार्ध्यमिव चन्दनम् (रा० २।३०।१३) ॥ **उक्तोऽर्थः ।** असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः । स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते (भा० पु० ७।१।५६) । **अवकीर्यते= क्षरति=नश्यति ।** (तम्) अवाकिरन् बाललताः प्रसूनैः (रघु० २।१०) । **तस्योपरि निचिक्षिपुरित्यर्थः ।** अवाकिरन् शरान् (भा० वन० २१।३०) । **अवाकिरन्=प्रास्यन् ।** यो ब्रह्मचार्यवकिरेत् (तै० आ० २।१८) । **रेतः**

सिञ्चेत् स्त्रियाम् । वाससाऽऽच्छादयामास माल्येनावचकार च (रा० ४।१४।२३)। **अवचकार=माल्यं तस्योपरि निचिक्षेप** । अवकिरते हस्ती स्वयमेव (पा० ३।१।८७)। भुव्यात्मानं प्रसारयतीत्यर्थः । सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् (मनु० ६।४८) । **चक्षुरादीनि पञ्च बहिरिन्द्रियाणि मनो बुद्धिश्चेति सप्त द्वाराणि, तैर्निक्षिप्तां तद्गृहीतार्थविषयां वाचम् इति कुल्लूकः ।** अवकीर्णः सुगुप्तश्च न वाचा ह्यप्रियं वदेत् (भा० शां० २७८।८) । **अवकीर्णः (मूढैः) पांसुभिश्छन्नः, धिक्कृत इत्यर्थः ।** तीर्थान्य् अवकीर्णानि तपस्विभिः (भा०) । **अत्रावोऽस्थाने । आङ् इति तु स्थाने स्यात् ।** किमपैति रजोभिरौर्वरैरवकीर्णस्य मणेर्महार्घता (शिशु० १६।२७) । **अत्र कविना भारतप्रयोगोऽनुकृतः । स एव च दोषः ।** अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्धितः (भा० भीष्म० १२२।२४) । **अवकीर्णः=प्रास्तः=(जलेऽन्तर्) निक्षिप्तः ।** पुत्रं सर्वगुणोपेतमवकीर्णं जले पुरा (भा० शां० १।२२) । **उक्तोऽर्थः ।** वैश्यायामवकीर्णः संवत्सरं ब्रह्मचर्यं त्रिषवणं चानुतिष्ठेत् (गौ० ध० ३।४।३५ **इत्यत्रोज्ज्वलायामुद्धृतं** शङ्खवचनम्) । **अवकीर्णः=सिक्तरेताः ।** अवकीर्णिव्रतं चरेत् (लौ० गृ० १।३३) । **अवकरणमवकीर्णं कामतो ब्रह्मचारिणो रेतस उत्सर्गः, सोऽस्यास्तीत्यवकीर्णी ।** (देवपालष्टीकाकृत्) । अवकीर्णी भवेद् गत्वा ब्रह्मचारी तु योषितम् (याज्ञ० ३।२८०) । **चरमधातोर्विसर्गोऽवकीर्णं तद् यस्यास्ति सोऽवकीर्णी** (मिताक्षरा) । **वस्तुतश्च अवकीर्णमनेनेत्यवकीर्णी । इष्टादिभ्यश्चेति** (५।२।८८) **इनिः ।** गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत् । प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु सः (बौ० ध० २।७।१०) ॥ स्वानि वासांसि...अवकीर्योत्तराणि सभायां समुपाविशन् (भा० सभा० ६८।३६) । **अवकीर्य=अवरोप्य=अवतार्य ।** सा मां हिमवतः प्रस्थे सुषुवे मेनकाऽप्सराः । अवकीर्य च मां याता परात्मजमिवासती (भा० आदि० ७४।७०) । **अवकीर्य =प्रास्य=भुवि निक्षिप्य ।** अवकर इत्येके (गौ० ध० ३।५।१३) । **सख्यादिगमनेऽवकरो दोष इत्युज्ज्वला । वर्चस्केऽवस्करः** (रा० ६।१।१४८) । **अवस्करोऽन्नमलम् । तत्सम्बन्धाद् देशोपि तथोच्यते । तथा च प्रयोगः**—संमार्जितावस्करया व्यये चामुक्तहस्तयेति ।

**—क्लृप् (कृपू सामर्थ्ये)** । न हि तदवकल्पते यद् ब्रूयादिदमहं सत्यादनृतमुपैमीति (श० ब्रा० १।१।१।६)। **नावकल्पते न युज्यते ।** न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात् (श० ब्रा० २।५।२।४८) । तद् यद्दक्षो न तदवकल्पते (ऐ०ब्रा० ६।२)। **न संभवतीत्यर्थः ।** न वा एतस्यानिष्टक आहुरवकल्पते (तै०सं० ५।४।१०।३) । **उक्तोऽर्थः ।** इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते (ब्र० सू० शा० भा० २।२।८)। **नावकल्पते, न घटते, न युज्यते, न संभवति ।** तथापि तच्छक्ति-

विसर्ग एषां सुखाय दुःखाय हिताहिताय। बन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते। (भा० पु० ६।१७।२३) ॥ **अवकल्पते=कल्पते=अलं भवति। नार्थोऽवेन।** तां मा यज्ञेऽवकल्पय (श०ब्रा० १।८।१।६)। **अवकल्पय=उपयुङ्क्ष्व।** नाह पुराऽवभृथात् पुनर्दीक्षामवाकल्पयन् (देवाः) (श० ब्रा० ३।४।३।१)। **अवाकल्पयन्=प्राकल्पयन्=समपादयन्=निरवर्तयन्।** तेभ्य. प्रातः सवनेऽवाचिक्ल्पयिषन् (ऐ० ब्रा० ३।३०)। **अवक्लृप्तिः संभावनेति भट्टभास्करः। समभावयन्नित्यर्थः।** जातु तत्रभवान्वृषलं याजयेन्नावकल्पयामि (पा० ३।३।१४७)। **सूत्रे वृत्तिः। न संभावयामीत्यर्थः।** तन्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु (श० ब्रा० २।१।४।२)। **अनवक्लृप्तमनुचितम्।** अनवक्लृप्ता तस्यैषा भवति (अष्टमी सामिधेनी) (श० ब्रा० १।४।१।३७)। **अलब्धावकाशा भवतीत्याह।** नावकल्प्यमिदं ग्लायेद् यत् कृच्छ्रेषु भवानपि (भट्टि० १६।१७)। **नावकल्प्यं न संभाव्यम्।**

**—क्रन्द् (क्रदि आह्वाने रोदने च)।** अवक्रन्द दक्षिणतो गृहाणाम् (ऋ० २।४२।३)। **मन्दं वाश्यस्व, अनुच्चै रुवीहि इत्युक्तं भवति।** क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा (वा० सं० २२।७)। **यथाऽन्यत्र तथेह अवशब्दः क्रियाया उत्तरपदोक्ताया असाकल्यमाह।**

**—क्रम् (क्रमु पादविक्षेपे)।** न हि परलोकादेत्य सत्त्वं गर्भमवक्रामति (चरक० शरीर० ३।६)। **अवक्रामति=अवतरति। अवशब्दोऽधोर्थे।** जीवस्तु खलु भोः सर्वगतत्वादीश्वरगुणसमन्वितः पूर्वशरीराच्चावक्रामति परशरीरं चोपक्रामति (का० सं० शरीर० गर्भाव०)। **उक्तपूर्व एवार्थः।** वज्रेणैवैनमवक्रामति (श० ब्रा० १३।१।२।६)। **अभिभवतीत्यर्थः।** नमो वरुणायेति वाचयत्यपोऽवक्रमयन् (का० श्रौ० १०।८।२३)। **यजमानमुदकमध्ये प्रवेशयन्नित्याह।** अवक्रामन्तः प्रपदैरमित्रान् (ऋ० ६।७५।७)। **चरणाग्रैरवताडयन्तः, अधस्पदं कुर्वन्त इत्यर्थः।** प्रतूर्वन्नेह्यवक्रामन्नशस्तीः (श० ब्रा०६।३।२।७)। **अनन्तरोदीरित एवार्थः।** तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते (तै०सं० ६।४।७।३)। अभिक्रामं सायं जुहोत्यवक्रामं प्रातः (आप० श्रौ० ६।३।१०५)। **अवक्रम्यावक्रम्य पश्चात् सृत्वेत्यर्थः।**

**—क्री (डुक्रीञ् द्रव्यविनिमये)।** ब्राह्मणं क्षत्रियं वा सहस्रेण शताश्वेनावक्रीय (शां० श्रौ० १६।१०।१०)। **उपभोगार्थं भाटकेनादायेत्यर्थः।** विक्रयावक्रयाधानयाचितेषु पणान्दश (याज्ञ० २।२३८)। **अवक्रीणीतेऽनेनेत्यवक्रयः पिण्डक उच्यते** (काशिका)। **अवक्रयो भाटकम्।** अवक्रयः (पा० ४।४।५०)। **पिण्डको राजग्राह्यं द्रव्यम्।**

—क्रुश् (क्रुश आह्वाने रोदने च)। अवक्रुष्टः कोकिलयाऽवकोकिलः। (स्वरेण) अधिक्षिप्तो न्यक्कृतः।

—क्वथ् (क्वथे निष्पाके)। अवक्वाथो न्यूनः क्वाथः।

—क्षर् (क्षर संचलने) अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमह इति पूर्णेनास्य पूर्णमवक्षारयित्वाऽऽसिच्य (पाणिं गृह्णीयात्) (आश्व० गृ० १।२०)। निगदव्याख्यातम्।

—क्षल् (क्षल शौचकर्मणि)। शिरोवक्षालनम्=शिरसोऽम्भसि निमज्जनम्।

—क्षि (क्षि हिंसायाम्)। तां तेन वाऽवक्षिणुयात् (लाट्या० श्रौ० ४।३। १६)। अपाकुर्यादित्यर्थः।

—क्षिप् (क्षिप प्रेरणे)। अव क्षिपो दिवो अश्मानमुच्चा (ऋ० २।३०।५)। अवक्षिप=अवस्तात् प्रेरय=अधः पातय। अव क्षिपन्ति स्रुग्भाण्डान् (रा० २।११६।१७)। अवस्कन्दयन्तीत्यर्थः। सात्वताऽभिसृते द्रोणे धृष्टद्युम्नमवाक्षिपन् (भा० द्रोण० ९७।३६)। अपनीतवन्त इत्यर्थः। अयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजाऽवक्षिपेत् (कौ० अ० १।१०)। धिक्कुर्यादित्यर्थः। अवाक्षिपद् वासुदेवम् (भा० सभा० २६।३२)। अवामानयद् अध्यक्षिपदित्यर्थः। शिर उत्क्षिप्य नागस्य पुनः पुनरवाक्षिपत् (भा०आदि० १८।१५)। अधोऽक्षिपदित्यर्थः। शृत कृण्वन्त इह मावचिक्षिपन् (अथर्व० १८।४।१२)। अवक्षिप्तमवकीर्णं मा स्म कुर्वन्नित्यर्थः। अवक्षिपन्नर्कं उल्कामिव द्योः (ऋ० १०।६८। ४)। अवक्षिपन् भ्रंशयन्, अधःपातयन् इत्यर्थः। अवक्षेपणे कन् (पा० ५।३। ९५)। अवक्षेपणं कुत्सनम्। गन्धनावक्षेपणादिसूत्रे (१।३।३२) ऽवक्षेपणं भर्त्सनम् इति वृत्तिः। को ह्यक्षयप्रसादानां सुहृदामल्पतोषिणाम्। वृत्तिमर्हत्यवक्षेप्तुं त्वदन्यः कुरुसत्तम (भा०अनु० ५९।२८)। अवक्षेप्तुं कल्पयितुं विधातुं स्थिरीकर्तुमित्यनर्थान्तरम्। अवक्षिप्तावधूतानामसीनां वीरबाहुभिः (भा०भीष्म० ४६।१७)। अवक्षिप्तानामधोमुखं पातितानाम्। सम्भग्नस्फुटितगात्रमवक्षिप्तं विद्यात् (कौ० अ० ४।६)। अवक्षिप्तम् अधः पातितम्। सूक्ष्मवस्त्राण्यवक्षिप्य मुनिवस्त्राण्यवस्त ह (रा० २३७।७)। अवक्षिप्य=अवतार्य।

—क्षु (टुक्षु शब्दे)। पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् (मनु० ५।१२५)। अवक्षुतम्=उपरिकृतक्षुतम्। उपसर्गवशात्सकर्मकत्वम्। अवक्षुतावरुदितं तथा श्राद्धे च वर्जयेत् (भा० अनु० ९१।४१)। द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् (मनु० ४।२१३)। उक्तपूर्व एवार्थः। न भुञ्जीतेत्यनुषङ्गः।

—क्षुद् (क्षुदिर् सम्पेषणे)। तण्डुलानवक्षुद्य (सुश्रुत० १।१६३।१३)। अवक्षुद्य अवहत्य। अवमृद्य सम्पिष्य।

—क्ष्णु (क्ष्णु तेजने)। ऋभुर्वाज ऋभुक्षाः पत्यते शवोऽव क्ष्णौमि दासस्य नाम चित् (ऋ० १०।२३।२)। **अवक्ष्णौमि=प्रमार्ज्मि।**

—खण्ड् (खडि मन्थे, खडि भेदने)। विद्यत्यवखण्डयति विनाशयति पाप्मनः (बृ० उ० ५।७ इत्यत्र शां० भा०)। अर्धयाममात्रावखण्डितायां विभावर्याम् (काद०)। **अवखण्डिता=अतीता।** अहर्निशासंस्थां यथावदवखण्डिताम् (मार्क० पु० १६।७०)। **मध्ये त्रुटितां भग्नाम् इत्याह।**

—ख्या (ख्याञ् प्रकथने)। आदित्या अव हि ख्यताधि कूलादिव स्पशः (ऋ० ८।४७।११)। **(यूयम्) अवख्यत=अधःपश्यत।** तं ते दुश्चक्षा माऽवख्यन् (तै० सं० ३।२।१०।२)। **मा दर्शन्नित्यर्थः।** तद्धैके यजमानमवख्यापयन्ति (आज्यम्) (श० ब्रा० १।३।१।२६)। **एकेषां दर्शनं यजमान आज्यमवेक्षेत न ऋत्विग् इत्युक्तं भवति।**

—गण् (गण संख्याने)। पर्वतीय इति माऽवजीगणः (कि० १३।६७)। **ममानादरं मा कार्षीरित्यर्थः।** अवगणितखलीनाकर्षणः (पञ्चत० ५)। **अवगणितमवधीरितमुपेक्षितं खलीनस्याकर्षणं येन सः।** कुम्भपातमात्रगतजीवितं तं नकुलं तत्रैवावगणय्य (पञ्चत०)। **सावहेलं तत्रैव विहायेत्यर्थः।**

—गम् (गम्लृ गतौ)। अञ्जः समुद्रमवजग्मुरापः (ऋ० १।३२।२, अथर्व० २।५।६)। **अवाङ्मुखाः सत्यः समुद्रं गच्छन्त्याप इत्याह। नीचैर्गतयः सत्यः समुद्रमाविशन्तीति वार्थः।** हारिद्रवेव पतथो वनेदुप सोमं सुतं महिषेवाव गच्छथः (ऋ० ८।३५।७)। **सोममवगच्छथः=अवतीर्य सोममुपेथः।** नैनं घ्नन्ति पर्यायिणो न सन्नाँ अवगच्छति (अथर्व० ६।७६।४)। **अवगच्छति=नीचैर्गच्छति =नमति।** विश्वेह देवौ सवनाऽव गच्छतम् (ऋ० ८।३५।४)। **विश्वा सवनान्यभिवर्तेथाम् इत्याह।** (यः) बृहस्पतिं मनसाऽवगच्छात् (अथर्व० ४।१।७)। **अवगच्छात्=उपनमेत्।** उभे एवं विशं च राष्ट्रं चावगच्छति। **अवगच्छति =अधिगच्छति।** अव शादेषु गच्छति (वाजी) (ऋ० ६।१५।६)। **शादेषु नवतृणेष्ववाङ्मुखः सन् गच्छतीत्याह।** कुतो युद्धं जातु नरोऽवगच्छेत् (भा० उ० २६।३)। **अवगच्छेत्=अभ्युपेयात्=आतिष्ठेत्। युद्धभूमिमवतरेदित्यक्षरार्थः।** यत्रैतद्रूपां वा हवींषि वा वयांसि त्रिपदं चतुष्पद वाऽभिमृश्यावगच्छेयुः (कौ० सू० १२३)। **उपर्यवपतेयुरित्यर्थः।** कथ शान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः (मृच्छक०)। **अवगच्छति=जानाति।** तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् (गीता० १०।४१)। **उक्तोऽर्थः।** तदैव ध्यानादवगतोऽस्मि (शा० ७)। **कर्तरि क्तः। अवगतवानस्मि।** अपाञ्चमिन्द्र तं कृत्वाऽथेममिहाव गमय (अथर्व० ३।३।६) **इतोऽभिवर्तयेत्यर्थः।** आदित्या विश्वमवगम-

यन्ति । (तै० सं० २।३।१।५)। **अवगमयन्ति प्रापयन्ति** । विरुद्धार्थमवगमयति । **बोधयतीत्यर्थः** । कतमेन दिग्विभागेनावगन्तव्यम् (तन्त्रा० २।२) । **इहावशब्दोऽस्थाने । गन्तव्यमित्येव साधु** । न भवति महिमा विना **विपत्तेरवगमयन्निव** पश्यतः पयोधिः (भट्टि० १०।७२) । **अवगमयन्=बोधयन्** ।

**—गर्ह्** (गर्ह गल्ह कुत्सायाम्) । कृपणं चास्थिरं बाल्ये वृद्धभावेऽवगर्हितम् (रा० २।२१।१६) । **अवगर्हितं बलवन्निन्दितम्** । **इहावशब्दो गर्हायाः पूर्णतामाह । उत्तरपदार्थः पूर्वपदार्थमसाकल्यमनवकाशयति** ।

**—गल्** (**लौकिकोऽयं धातुरवस्रंसने स्यन्दने वा वर्तते**) । सौवर्णं वलयमवागलत्कराग्रात् (शिशु० ८।३४) । **अवास्रंसत=अभ्रंशत** ।

**—गाह्** (गाहू **अवलोडने**) । अस्यां नद्यां सुपुण्यायां यथेष्टम्...अवगाह्यताम् (भा० वन० ९९।३३) । **अवतीर्य स्नायताम् इत्यर्थः** । स्वप्नेऽवगाहतेऽत्यर्थं जलम् (याज्ञ० ३।२७२) । **अवगाहते=निमज्जति** । सम्प्राप्य पण्डितः कृच्छ्रं प्रज्ञामेवावगाहते (रा० ३।६८।५३) । **विचारमग्नो भवति, कृच्छ्रवारणोपायं चिन्तयतीत्याह** । वारिकोष्ठेऽवगाहयेत् (सुश्रुत० २।५५०।११) । जलावगाहक्षणमात्रशान्ता (रघु० ५।४७) । **जलावगाहः=जले निमज्जनम्** । सकलशास्त्रावगाहगम्भीरबुद्धिः (काद०) । **अवगाहः=(शास्त्रे) गभीरप्रवेशः** । उपनाहोऽवगाहश्च परिषेकस्तथाष्टमः (का०सं० २३।२६) । **अवगाहः=स्वेदभेदः** । अवगाढा च पीता च (गङ्गा) पुनात्या सप्तमं कुलम् (भा० वन० ८५।९३) । **अवगाढा प्रवेशपूर्वकं कृतस्नाना** । **अवगाढः प्रदोषः** (अवि० ३) । **अवतीर्ण इत्यर्थः** । सलिलमवगाढो मुनिजनः (स्वप्न० १।१६) । **अवतीर्णः, निमग्नः** । अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् (पदपङ्क्तिः) (शा० ३।८) । **अवगाढा मग्ना, न्यग्भावं गता, न्यक्ना** । अवगाढं भवत्यग्रे विपरीतं तु योषितः । (बृ० श्लो० सं० ६।२४) । **उक्तोऽर्थः** । अवगाढः सुदुष्पारं शोकसागरमब्रवीत् (रा० २।६०।२७) । **अवगाढः प्रविष्टः=अवतीर्णः=मग्नः** । अमृतह्रदमिवावगाढोस्मि (शा० ७)। जलावगाढस्य वनद्विपस्य (मृच्छ० ८) । सुदूरमवगाढया । शक्त्या निर्भिन्नहृदयः (रा० ६।८०।३७) । **सुदूरमवगाढया=सुदूरमन्तः प्रविष्टया** । अवगाढा द्विषन्तो मे सुखी वातोऽभिवाति माम् (भा० वि० ६८। ७५) । **अवगाढाः पराभूताः** । पूर्वापरौ तोयनिधी वगाह्य (कु० १।१) । **वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति भागुरिमतेनावस्याकारलोपः** । तमोपहन्त्रीं तमसां वगाह्य (रघु० ७।४०) । **तमसां नदीमवगाह्य तत्र स्नात्वेत्यर्थः** । विमानशृङ्गाण्यवगाहमानः (घोषः) (कु० ७।४०) । **आक्रामन्, व्याप्नुवन्नित्यर्थः** ।

—गुण्ठ् (गुठि इत्यपरे, वेष्टनेऽर्थे)। पिचुप्लोतयोरन्यतरेणावगुण्ठ्य (सुश्रुत० १।५७।४)। वेष्टयित्वेत्यर्थः। रजनीतिमिरावगुण्ठिते पुरमार्गे (कु०४। ११)। तिमिरावगुण्ठिते=तमसाऽऽच्छादिते। पांशुपादावगुण्ठिताः (भा० वन० २००।३४)। पांसुभिरवकीर्णचरणा इति विवक्षति।

—गुर् (गुरी उद्यमने)। न कदाचिद् द्विजे तस्माद् विद्वानवगुरेदपि। न ताडयेत्तृणेनापि...(मनु० ४।१६६)॥ अवगुरेत्=हननेच्छया दण्डमुद्यच्छेत्। अवगूर्य त्वब्दशतं सहस्रमभिहत्य च। जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते (मनु० ११।२०६)॥ उदितोऽर्थः। ब्राह्मणायावगुर्यैव (मनु० ४।१६५)।

—गुह् (गुहू संवरणे)। या ममोद्विजते नित्यं सा मामद्यावगूहते (पञ्चत० ४)। अवगूहते=उपगूहते=आश्लिष्यति। वृद्धमिव पतिं प्रमदा नेच्छत्यवगूहितुं लक्ष्मीः (तन्त्रा० २।३।६०)। अवगूहितुम् उपगूहितुम्।

—गॄ (गॄ निगरणे) एवानेवाव सागरत् (अथर्व० १६।७।४)। को रोमन्थो नाम। उद्गीर्णस्य वा अवगीर्णस्य वा मन्थो रोमन्थः (३।१।१५ सूत्रभाष्ये)। अवगीर्णमपादानप्रदेशान्निःसृतं रोमन्थाख्यं द्रव्यं वर्तयति (काशिका)। अवगिरते ग्रासम् (पा० १।३।५१ सूत्रे वृत्तिः)। निगिरतीत्यर्थः। अवगिरमाणैश्च पिशाचैर्मांसशोणितम् (भट्टि० ८।३०)। अवगिरमाणैः=निगिलद्भिः।

—गै (कै गै शब्दे)। अवगीतः ख्यातगर्हण इत्यमरः। अवगीतं जन्ये स्याद् इति च सः। अवगीतां गमिते दशामिमाम् (कि० २।७) अवगीताम्= निन्दिताम्। प्रकृत्या कल्याणी मतिरनवगीतः परिचयः (उत्तर० २।२)। अनवगीतः=अनवद्यः। अवगीतमिदं रूपम् (प्रतिज्ञा० ४।८)। निन्दितमित्यर्थः। अवगीतमिदं सर्वमावाभ्या भक्तकाननम् (हरि० २।८।६)। भुक्तकाननमिति पाठान्तरम्।

—ग्रह् (ग्रह उपादाने)। दासेति दक्षिणानवगृह्णीयात् (रश्मीन्) (लाट्या० श्रौ० २।८।१३)। शिथिली कुर्यादित्याह। नृमणाः। पितृयाणाम्। अत्र हि ऋकारोऽवगृह्यते (पा० ८।४।२६ सूत्रे वृत्तौ)। अवगृह्यते पृथक् क्रियते। वातमूत्रपुरीषरेतांस्यवगृह्णाति (चरक० सू० २६।४३)। बद्धानि करोतीत्यर्थः। स्वामिनमवशमवगृह्णन्ति (दशकु०)। वशे कुर्वन्तीत्यर्थः। अनुग्रहावग्रहयोर्विधाता (शिशु० १।७१)। अवग्रहो निग्रहः। संसारावग्रहः (मालती०)। संसाररूपो बन्धः। प्रसह्य रक्षोभिरवग्रह च (रा०)। अवग्रहो बन्धः। परस्परावग्रहनिर्विकारौ (माल० ५।१४)। अवग्रहो निरोधः संयमः। वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् (रघु० १।६२)। अवग्रहो वर्षप्रतिबन्धः। सर्वशब्दोप्योदनार्थावग्रहेण प्रवृत्त ओदनशब्दोपि सर्वशब्दार्थावग्रहेण (पा० १।१।

२७ सूत्रभाष्ये कैयटः)। **अवग्रहः क्रोडीकार इत्युद्द्योतः। अवग्राहो ललाटम्** (अमर.)। अवगृह्यतेऽङ्कुशेनेति व्युत्पत्तेः। अवगृह्यते=पाट्यते। **अयं च करिमस्तक एव नियतोऽनन्यविषयः।** योऽवग्रहोऽह्न ममेत्येतस्मिन्योजितस्त्वया (भा० पु० ३।२५।१०)। **अवग्रहो दुराग्रहो निर्बन्धः।** देवनीथ शंसति पदावग्राहम् (ऐ० ब्रा० ६।३५)। **पदान्यवगृह्येत्यर्थः। पदावग्राहमिति णमुलन्तम्।** यदवग्राहमनुब्रूयाज्जीमूतवर्षीह प्रजाभ्यः पर्जन्यः स्यात् (ऐ० ब्रा०)। **अवग्राहं विच्छिद्येत्यनर्थान्तरम्। जीमूतोल्पजलो घन इति षड्गुरुशिष्यः। पर्वत इति सायणः। अनुपयुक्ते पर्वत एव वर्षति न तूपयुक्तेषु सस्येष्वित्यपि सः।** मन्दोपि नाम न महानवगृह्य साध्य. (शिशु० ५।४६)। **अवगृह्य=दण्डयित्वा। स्थिरं विरोधमास्थाय वेत्यर्थः स्यात्।** गान्धारीं विदुरं चैव समाभाष्यावगृह्य च (भा०आश्रम० १८।४)। व्याधिर्मनोवपुरवग्रहः (अग्निपु० ३३६।३३)। अवगृह्य पादाभ्याम् (सुश्रुत० १।१०१।५)। **अपबाध्य. निपीड्येति वा।** अवग्राहस्ते वृषल भूयात् (पा० ३।३।४५)। अत्र वृत्तावुदाहरणम्। **अवग्राहो ग्रहोऽभिभवो वा। आक्रोशे विषये प्रयोगः, नत्वन्यत्र।** गृहावग्रहणी देहलीत्यमरः। **अवगृह्यतेऽनया द्वारशाखेति** स्वामी। मर्दिता समिता क्षीरनारिकेलघृतादिभिः। अवग्राह्य (श० क० द्रु०)।

—ग्लै (ग्लै हर्षक्षये)। नेमव ग्लापयन्ति (ऋ० १।१६४।१०)। **नैनं ग्लानं श्रान्तं कुर्वन्ति।**

—**घट्ट् (घट्ट चलने)**। द्वाराणि समुपावृण्वन् कपाटान्यवघट्टयन् (रा० ५।१५।१०)। **परतः प्रैरयन् पराणुदन्।** जलौकोव्रणान्मधुनावघट्टयेत् (सुश्रुत० १।४२।१७)। **लिम्पेत्, उपदिह्यात्।** दर्व्या सततमवघट्टयन् (चरक० विमान० ७। ३०)। **चलयन्, क्षोभयन् इत्यर्थः।** शिरोभिश्चावघट्टनैः (भा० वि० १३।२६)। **अन्योन्यमवताडनैरित्यर्थः।** सुरूपवर्णा बहव क्रव्यादैरवघट्टिताः (भा० स्त्री० १६।३६)। **उक्तोऽर्थः।**

—**घुष्** (घुषिर् अवशब्दने, शब्दे इत्यन्ये)। अवघुष्टे समाजे च (भा० आदि० १३४।१०)। **वीरसमूहे डिण्डीरवशब्देनाहूते सति।** अवघुष्टान्नम्। **अस्ति कश्चिदिह भोजनेनार्थीत्येवमुच्चैर्घोषं कृत्वा यद् दीयते तत्तथोक्तम्। अस्ति चात्रार्थे भारते प्रयोगः**—अवघुष्टं च यद् भुक्तम् (भा० अनु० २३।५)।

—**घृष् (घृषु सङ्घर्षे)**। मृदुना सलिलेन खन्यमानान्यवघृष्यन्ति गिरेरपि स्थलानि। उपजापविदां च कर्णजापैः किमु चेतांसि मृदूनि मानवानाम् (पञ्चत० १।३३७)॥ **अवखातानि भवन्तीत्याह।** सलिलैः शुद्धैरेतेषां गोवालैश्चावघर्षणम्। (याज्ञ० ३।६०)। **अवघर्षणं मर्दनपूर्वकं शोधनम्।**

—घ्रा (घ्रा गन्धोपादाने) । बृहस्पतेर्भागमवजिघ्रत (वा० सं० ६।६, १६) । **आघ्राणं कुरुतेत्यर्थः । अदूरे वाऽवशब्दः । अदूराज्जिघ्रतेत्याह ।** स्त्रियै मूर्धानमेवावजिघ्रति (पा० गृ० १।१८) । **मुखेन स्पृशति, चुम्बति वा ।** मूर्धनि त्रिरवघ्राय (आश्व० गृ०) । अवघ्रातश्च मूर्धनि (रा० २।२०।२१) । मनुष्यै-रवघ्रातमन्यैर्वाऽमेध्यैः (आप० ध० १।५।१७।५) । **अवघ्रातमदूराद् घ्रातमिति वृत्तिः ।** समशो वा प्रतिविभज्यावघ्रेण भक्षयित्वा (आप० श्रौ० ८।४।१६।३) । **अवघ्रोऽवघ्राणम् । उक्तोऽर्थः ।**

—चक्ष् (चक्षिङ् व्यक्तायां वाचि) । अव चष्ट ऋचीषमोऽवताँ इव मानुषः (ऋ० ८।६२।६) । **अवचष्टे=दृशमवपातयति । अवोऽधस्तादर्थे ।** एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे (ऋ० ४।५८।५) । **इहावशब्दो नार्थे विशेषं करोति । वेदे चक्षिङ् दर्शने वर्तते प्रायेण, तस्य ख्याञादेशोऽपि ।**

—चर् (चर गतिभक्षणयोः) । अव द्वके अव त्रिका दिवश्चरन्ति भेषजा (ऋ० १०।५६।६) । **अवचरन्ति=अवतरन्ति=अवरोहन्ति ।** अव मा पाप-मन् इति तितउनि पूल्यान्यवसिच्य...पुरोडाशसंवर्तांश्चतुष्पथेऽप्यवचरति (कौ० सू० ३०।१८) । **अवचरति=न्यस्यति=निधत्ते ।** युक्त्याऽवचारयेत् स्नेहं भक्ष्याद्यन्नेन वस्तिभिः (अष्टाङ्ग० सूत्र० १६।१४) । **अवचारयेत्=अन्त-र्गमयेत् ।** शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् । आश्वास्य... (अष्टाङ्ग०सूत्र० २६।२४)॥ **अवचारिते=अन्तर्न्यस्ते=प्रयुक्ते ।** विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् । न सिध्यत्यौषधं यस्य...(चरक० इन्द्रिय० १२। ७) ॥ **अवचारितम्** आसिक्तम् **प्रयुक्तम् ।** कस्यां कस्यामवस्थायां का वाऽस्याव-चारणा (का० सं० खिल० रक्त० श्लो० १२) । **अवचारणा=उपचारः ।** सुश्रुते (१।३१।११) प्यत्रार्थे प्रयोगः । स तत्रैव द्रष्टव्यः । तुरगावचरं स बोध-यित्वा (बुद्ध० ५।६८) । **अवचरः परिचारकः । सादीत्यर्थः ।** कर्णाश्वावित्तदब्र-वीद् गिरेरवचरन्तिका (अथर्व० ५।१३।६) । **अवतरन्तीत्यर्थः ।** कथमपि ताला-वचरचारणचरणक्षोभं चक्षमे क्षमा (हर्ष० ४) । **तालैरवचरति न्यञ्चतीति तालावचरश्चारणचरण ।** अवचरो **गोचरो विषयोपि ।**

—चल् (चल कम्पने) । अन्योपि तन्मिषं लब्ध्वा तस्य पार्श्वादवाचलत् (राज० ७।१५९६) । **अवाचलत्=अपासरत् ।**

—चि (चिञ् चयने) । यथा वाचमवचिन्वन्ति सन्तः (भा० वन० १६४। २६) । **सन्तः सदसद्विवेचनचणाः परीक्षन्त इत्याह ।**

—चूर्णय् (नामधातुः चूर्णात्प्रातिपदिकाण्णिच्) । चूर्णैरवध्वंसयत्यवचूर्ण-यति । **चूर्णं व्रणादेरुपरि क्षिपति येन तत्पिहितं भवति ।**

—छद् (छद अपवारणे)। शुक्लेन वस्त्रपट्टेनावच्छाद्य (चरक० विमान० ७।३०)। अवच्छाद्य प्रच्छाद्य। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः (वा० प० २।३१६)। अवच्छेदो निश्चयः तदभावोऽनवच्छेदः=इदमित्थम्भावस्याज्ञानम्। दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये। स्वानुभूत्येकमानाय नमः शान्ताय तेजसे (भर्तृ० २।१) ॥ अनवच्छिन्नः=अपरिच्छिन्नः=अपरिमितः=अनवधिः। घटत्वावच्छिन्नो घटः। घटत्वेन धर्मेण पटादिभ्यो भिन्न इत्यर्थः।

—छो (छो छेदने)। अरुर्वै पुरुषोऽवच्छितोऽनरुरेवैतद् भवति यदभ्यङ्क्ते (श० ब्रा० ३।१।३।७)। अवच्छितः=अवच्छातः=त्वग्रहितः। अग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य (गौ० ध० ३।४।२)। अवच्छातः=भक्तत्यागेन कृशीभूतः।

—जि (जि जये, जय उत्कर्षप्राप्तिः, जि ज्रि अभिभवे)। अस्मिन्नेव वने पार्थो हृतां कृष्णामवाजयत् (भा० वि० ४६।७)। अवाजयत्=युद्धेनावजित्य प्रतिलब्धवान्। हतसूतांश्च भूयिष्ठानवजिग्ये नराधिपान् (भा० शां० ४।१६)। अवजिग्ये=पराजिग्ये=अभिबभूव। अह वै कुरुभिर्योत्स्याम्यवजेष्यामि ते रिपून् (भा० वि० ४५।६)। हेलया जेष्यामीति नीलकण्ठः। इदं च युक्तरूपम्। अवोऽवक्षेपणं द्योतयति। गृहस्थश्चावजेष्यामि मृत्युम् (भा० अनु० २।४१)। उदितपूर्व एवार्थः। त्रिवारं प्रतिरोद्धा वा सर्वस्वमवजित्य वा (मनु० ११। ८०)। अवजित्य=युद्धेन प्रतिलभ्य।

—ज्ञा (ज्ञा अवबोधने)। अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् (गीता ९।११)। अवजानन्ति=अवहेलयन्ति। अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम्। अवज्ञानमवमानः, अनादरः। अल्पसत्त्वेषु धीराणामवज्ञैव हि शोभते (कथा० १८।१३१)। अनादर उपेक्षेत्यर्थः। आत्मन्यवज्ञां शिथिलीचकार (रघु० २।४१)। अवज्ञा=लाघवबुद्धिः। ये नाम केचिदिह नः प्रथयन्त्यवज्ञाम् (मालती० १।६)। अवज्ञा=कुत्सा। अतिपरिचयादवज्ञा भवति। अवज्ञा तिरस्कारः।

—डी (डीङ् विहायसा गतौ)। अवरोहोऽवडीनं स्यात् (भा० कर्ण० ४१।२८)। इदं निगदव्याख्यातम्। (पातानां शतम्—) उड्डीनमवडीनं च प्रडीनं डीनमेव च (भा० कर्ण० ४१।२६-२८)।

—तंस् (तसि भूष अलङ्करणे)। दुष्टबुद्धिरयं पापः सद्यः शूलेऽवतंस्यताम् (तन्त्रा०१।१६)। अवतंस्यताम्=बध्यताम्। अवपूर्वस्यैव प्रयोगस्तंसेर्न केवलस्य, उत्पूर्वस्य वा। अलङ्कारो हि कुण्डलादिर्बध्यत इति धातुर्बन्धनार्थमुपसङ्क्रान्तः। अवतंसः कर्णभूषणं भूषणमात्रं वा। कर्णावतंसः शिरोऽवतंस इत्यत्र भूषणमात्रे

प्रयोगः। अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि (शा० १।४)। अत्रावतंसः कर्णभूषणमाचष्टे। अवतंसयन्ति=अवतंसी कुर्वन्ति।

—तक्ष् [तक्ष त्वक्ष तनूकरणे)। उच्छिष्टलेपोपहतानामवतक्षणम् (बौ० ध० १।६।१३।२७)। वाश्यादिनाऽयस्मयेनानुकर्षणम् अवतक्षणम्। अवतक्षणानां स्वरुरधिमन्थश्च (आप० श्रौ० ७।१।३।३)। तक्ष्यमाणस्य यूपस्य शकलानाम् इत्यर्थः। अवशब्दोऽधस्तादर्थे। अधः पतितखण्डानाम् इत्युक्तं भवति।

—तड् (तड आघाते)। नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न चरणैरवताडनानि। (उत्तर० १।१४, मालती० ६।४६)। पादाभ्यामवक्रम्य ताडनमवताडनम्।

—तन् (तनु विस्तारे)। यदाततमव तत्तनु (अथर्व० ७।९५।३)। यच्छेपो जारस्याततमायतं तदवततं दैर्घ्यरहितं कुरु संकोचय। अवतनिः संकोचने वर्तते। असख्याता सहस्राणि वे रुद्रा अधि भूम्याम्। तेषां सहस्रयोजनेऽव धन्वानि तन्मसि (वा० सं० १६।५४)। अवतन्मसि=अवतन्मः=अवरोपयामः। उज्ज्यानि कुर्म इत्यर्थः। अव ज्यामिव धन्वनो मन्युं तनोमि ते हृदः (अथर्व० ६।४२।१)। अवतनोमि=व्यपकर्षामि। दिवो मलमवततं पृथिव्या अध्युत्ततम् (अथर्व० २।७।३)। अवततम्=अवाङ्मुखं प्रसृतम्। उत्ततम्=ऊर्ध्वं ततम्। अयोध्यायामवतता सा व्यतीयाय शर्वरी (रा० २।६७।१)। अवतता=दीर्घीभूता। लताशतैरवतता नदी (रा० ५।१४।२६)। अवतता=आच्छादिता। ज्वलितिकसन्तेभ्यो णः (पा० ३।१।१४०)। इत्यत्र तनोतेर्ण उपसंख्यानम् इति वार्त्तिकम्। अवतनोतीत्यवतानः। अवतान उल्लोचश्चन्द्रोदयः। अवतानैस्तथा गुल्मैर्मञ्जरीजालधारिभिः (भा० सभा० ६।३)। अवतानैः=लताप्रतानैः। अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे (वा०सं० १६।१३)। धनुरपगतज्याकं कृत्वा। ऋज्वीर्दधानैरवतत्य कन्धराः (शिशु० १२।१८)। अवतत्य=नीचैरायम्य। खमवतत्य सलिलदाः (बृ० सं० २४।१९)। आकाशमाच्छाद्येत्यर्थः।

—तप् (तप सन्तापे)। महदेषावतपति चरन्ती गोषु गौरपि (अथर्व० (१२।४।३९)। अवतपति=अवोऽधः तपति संतप्तं करोति। अवतप्ते नकुलस्थितं तवैतत्। (पा० २।१।४७)। इत्यत्र वृत्तावुदाहरणम्। क्षेपे गम्यमाने प्रयोगः। चापलमेतत्, अनवस्थितत्वं तवैतदित्यर्थः। अत्रावशब्दस्तापस्य न्यूनतामाह। अवतप्तम्=ईषत्तप्तम्। गुहासदवतापि स्यात् (श० ब्रा० १३।८।१।११)।

—तम् (तमु काङ्क्षायाम्)। तस्मादद्भिरवतान्तमभिषिञ्चन्ति (तै० सं० ५।६।२।२)। अवतान्तं मूर्छितम्।

—तृद् (उतृदिर् हिंसानादरयोः)। अवतृणत्ति दुन्दुभीम् (शां० श्रौ० १७।१७।५।६)। उपरमयति शान्तध्वनीम् करोतीत्यर्थः। अनवतृण्णः प्राणः (श० ब्रा० ११।१।६।३३)। अनवकृत्तोऽवियुक्तोऽविश्लिष्टः।

—तॄ (तॄ प्लवनतरणयोः)। रथादवततार च (रघु० १।५४)। अवरुरोहेत्यर्थः। तस्यां (नगर्यां) च नभसोऽवततार सः (कथा० ३।५३)। सागरं वर्जयित्वा कुत्र वा महानद्यवतरति (शा० ३)। निम्नीभूय प्रविशतीत्याह। मत्स्नेहाच्चैव राधायां सद्यः क्षीरमवातरत् (भा० उ० १४१।६)। स्तनयोः प्रादुरभवदित्यर्थः। मुनिकन्या च सा शापात्तस्यां जातावावातरत् (पञ्चत०)। अवातरत्=सम-क्रामत्। शरीरपरिग्रहमकरोत्। कपोलः पाण्डुत्वमवतरति ताली-परिणतिम् (भोज० १।७२)। अत्रावतरतेर्गौणः प्रयोगः। पाण्डुत्वमुपैतीत्येवार्थः। वागेव मे नाभिधेयविषयमवतरति त्रपया (काद०)। अभिधेयमर्थमभिधातुं न प्रवर्तते ह्रीणोऽस्मीति। तत्प्रेयसीमाहूय सङ्गीतकमवतरामि (धूर्त०)। अवतरामि=प्रारभे। इहापि पूर्ववद् गौणो व्यवहारः। पुरो यदिन्द्र शारदीरवातिरः (ऋ० १।१३१।४)। अवातिरः=अवातरः। तरते रूपमवोपसृष्टस्य केवलं तुदादित्वं परिगृह्य शे विकरणे गुणाभावे इत्वम्। अन्यत्रापि वेद एषैव प्रक्रिया वेदनीया। अभ्यभवः, पराभव इति वार्थः। अव तस्य बलं तिर (ऋ० १०।१३३।५)। उदितचर एवार्थः। लोटि रूपम्। अवातिरज्ज्योतिषाऽग्निस्तमांसि (ऋ० ६।९।१)। अपाकरोदपाकर्षदिति तात्पर्यार्थः। अपूर्वस्तु तिरतिः (तरतिः) वर्धने वर्तते इत्युपसर्गकृतोऽर्थभेदः। शरीराद् भूषणं सर्वमात्मनः साऽवतारयत् (रा० ४। १९।२९)। अवारोपयदित्यर्थः। कस्मिन्नवतितीर्षति ते पुण्यभाजि प्रदेशे हृदयम् (हर्ष० १)। अवतरीतुमधो गन्तुमिच्छति=अवतितीर्षति। सह-मित्रं सहामात्यं ससोदर्यं सहानुगम्। शक्नुयां यदि पन्थानमवतारयितुं पुनः (भा० उ० १३०।३१)॥ पन्थानमवतारयितुम्=उत्पथात्पथे नेतुम्। दृष्ट एवावतीर्णोऽस्मि यद्रोगमतिदुस्तरम् (कथा० २४।१९५)। अवतीर्णः=उत्तीर्णः। मेघपदवीमवतीर्णौ स्वः (शा० ७)। अवतीर्णौ=अवरूढौ। प्रथमा-वतीर्णयौवनमदनविकाराः। प्रथमम् इदम्प्रथमतयाऽवतीर्णः प्रादुर्भूतो यौवन-मदनविकारो येषां ते। तदनुरागवशगा चास्य पत्नी केशानवतार्य (अवदा०जा० २१)। अवतार्य=परिवाप्य=कर्तयित्वा। अथोरुदेशादवतार्य पादम् (कु० ३।११)। अधो न्यस्येत्यर्थः। स्वगात्रादवतार्य भूषणानि (मुद्रा० २।५)। अथाङ्गराजादवतार्य चक्षुः (रघु० ६।३०)। चक्षुरवतार्य=प्रतिसंहृत्य। रुद्धे गजेन सरितः सरुषाऽवतारे (शिशु० ५।३३)। अवतारस्तीर्थम्। अवे तॄस्त्रोर्घञ् (पा० ३।३।१२०) इति सूत्रेऽवतारो नद्या इति वृत्तावुदाहरणम्। अवतरति जलमवगाहतेऽनेनेत्यवतारः। कोप्येष सम्प्रति नवः पुरुषावतारः

(उत्तर० ५।३४)। पुरुषरूपेण पुरुषयोनावपतीर्णः (दिवः) जातो देव इत्यर्थः। अवतरणमवतारः सोऽस्यास्तीत्यवतार इति कथंचिद् व्याख्येयम्। भावे ऽवतारशब्दः पाणिनेरविदितः, कर्तरि च सुतरामविदितः। कवयस्तु भावे बहुलं प्रयुञ्जते—वसन्तावतारसमये (शा० १)। अवतर इति तु युज्यते। इहावतारः प्रारम्भ इत्यर्थे। परीवादनवावतारः (रघु० ५।२४)। स एवार्थः।

—दंश् (दंश दशने)। फलावदंशपूर्णाश्च चाङ्गेर्यः पानयोजिताः (हरि० २।२६।११)। फलावदंशाः=जम्बीराद्युपदंशाः।

—दय् (दय दानगतिरक्षणहिंसादानेषु)। तस्मादेनमवदये (अथर्व० १६।७।११)। अवदये विच्छिनद्मि, व्यवदधामि। तदेनांस्तदवदयते यद् यजते (श० ब्रा० १।७।२।६)। अवदयते=आराधयति=रञ्जयति=परितोषयति। वैरं तद् देवानवदयते (पञ्च० ब्रा० १६।१)।

—दल् (दल विशरणे)। मास चाप्याय्यते त्वक् चावदलति (सुश्रुत० २।१६६।६)। अवदलति=अवदीर्यते=विशीर्यते।

—दह् (दह भस्मीकरणे)। अवदाह उशीरम्। अवशब्दो न्यूनत्वे यथाऽन्यत्र। अवकृष्टं दह्यते न्यूनीक्रियते वा दाहोऽनेनेति व्युत्पत्तेः।

—दिश् (दिश अतिसर्जने)। अव प्रिया दिदिष्टन (ऋ० १०।१३२।६)। प्रियाणि निर्दिशतेत्याह।

—दिह् (दिह उपचये)। दन्तरजसाऽवदेग्धि (कौ० सू० ३१)। अवदेग्धि उपलिम्पति।

—दुह् (दुह प्रपूरणे)। भरद्वाजायाव धुक्षत द्विता धेनुं च विश्वदोहसमिषं च विश्वभोजसम् (ऋ० ६।४८।१३)। अवधुक्षत दत्त, प्रदिशतेत्यनर्थान्तरम्।

—दृश् (दृशिर् प्रेक्षणे)। यथा जलस्थ आभासः स्थलस्थेनावदृश्यते। स्वाभासेन यथा सूर्यो जलस्थेन दिवि स्थितः (भा० पु० ३।२७।१२)॥ जले स्थित आभासः सूर्यप्रतिबिम्बं यदा कुड्यादौ स्फुरति तदा गृहकोणस्थितैः पुरुषैर्यथा प्रथमं जलस्याभासो लक्ष्यते इत्यादिरर्थः। सत्यानृते अवपश्यञ्जनानाम् (ऋ० ७।४९।३, अथर्व० १।३३।२)। अवयुत्य परस्परसाङ्कर्यपरिहारेण पश्यन्नित्यर्थः।

—दॄ (दॄ विदारणे)। पूयः स्वमाश्रयमवदीर्य...कृच्छ्रसाध्यो भवति (सुश्रुत० १।६३।१)। अवदारणकाले तु पृथिवी नावदीर्यते। विवरं न ददातीत्यर्थः। विदारणं भेदनं द्विधाकरणं भवति। अवशब्दस्तस्य नीचैर्गतिमाह। खनु अवदारणे इति धातुपाठः। अवस्ताद् नीचैर्दारणमवदारणम्। तदिदं

**खातादिषु शब्देषु स्पष्टम्।** गां चावदीर्णां सहसाविवेश (अवदा० जा० २८, श्लो० ५८)। **उक्तोऽर्थः।** भयावदीर्णः सङ्ग्रामादबद्धं बहु भाषसे (भा० कर्ण० ४०।१६)। **भयाद् भग्नोऽपत्रस्त इति यावत्। भयस्य हेतोः सङ्ग्रामाद् विद्रुत इत्यर्थः।**

—**दो** (**दो अवखण्डने**)। हृदयस्यैवाग्रेऽवद्यति (श० ब्रा० ३।**१५**।१६)। **हृदयांशं प्रथमं खण्डयतीत्यर्थः।** सर्वभक्ष्यापूपकन्दमूलफलमांसादीनि दन्तैर्नावद्येत् (बौ० ध० २।७।१२।८)। **खण्डयेत्=नापच्छिन्द्यात्। दन्तखण्डितावशिष्टं पुनर्भक्षणाय नाददीतेत्यर्थः।** अव स्तोमेभी रुद्रं दिषीय (ऋ० २।३३।५)। **(क्रुद्धं) रुद्रं शमयेयमित्याह।** यां रात्रिं ब्रह्मचारी समिधं नाहरत्यायुष एव तामवदाय वसति (श० ब्रा० ११।३।३।१)। **अवदाय=अंशं छित्त्वा।** वशाया अवदानानां तथैव तेषामवदानम् (श० ब्रा० ४।५।२।८)। **अवदानमवखण्डनम्।**

—**दै** (दैप् शोधने)। येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च (पा० ४।१।४८ सूत्रे भाष्ये)। **अवदातानि=शुद्धानि। अवदातं मुखम्** (पा० १।१।२०) इत्यत्र वृत्तावुदाहरणम्। **शोधितमित्यर्थः।**

—**द्युत्** (**द्युत दीप्तौ**)। गुहावद्योतिनोऽप्यस्ति किं दीपस्यार्कतुल्यता (गीता ४।१८ इत्यत्र नीलकण्ठोक्तिः)। **अवशब्दो द्योतनस्य न्यूनतामाह।** हिशब्देन प्रसिद्ध हेतुमवद्योतयते (बृ० उ० शङ्करवचः)। **अवद्योतयते=बोधयति=स्मारयति। अवेन नार्थः।**

—**द्रा** (**द्रा कुत्सायां गतौ**)। यत्र सुप्त्वा पुनर्नावद्रास्यन्भवति (श० ब्रा० ३।२।२।२३)। **नावद्रास्यन्भवति=निद्रालुर्न भवति, निद्रया नाभिभूयत इत्यर्थः।** त्वाऽनवद्राणश्च रक्षताम् (अथर्व० १।१३।)। **अनवद्राणः=निद्रारहितः।**

—**धा** (**डुधाञ् धारणपोषणयोः**)। न मा गरन्नद्यो मातृतमा दासा यदीं सुसमुब्धमवाधुः (ऋ० १।१५८।५)। **समुब्धमवाधुः=अवाङ्मुखमपातयन्।** दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः (ऋ० ४।१३।४)। **अवाङ् अन्तरवाधुः=अन्तर्निमज्जयामासुः।** आसिञ्चोदकमव धेह्येनम् (अथर्व० ९।५।५)। **एनमजमवधेहि=अधः श्रय, अवतारयेत्यर्थः।** सोऽवैवावरं समुद्रं दधावव पूर्वम् (श० ब्रा० १।६।३।११)। **अवदधौ स्वस्मिन्नन्तरकरोदित्यर्थः। स वृत्रस्तथा ववृधे यथा समुद्रद्वयमपि स्वेन शरीरेणावव्रारेत्युक्तं भवति।** यां ते कृत्यां कूपेऽवदधुः श्मशाने वा निचख्नुः (अथर्व० ५।३१।८)। **अवदधुर्नीचैः पातयामासुः।** पचनमवधाय महावीरमवदधाति (श० ब्रा० १४।१।२१) **अवदधाति=अधः श्रयति, अवतारयति।** यच्चोक्तं धर्मशास्त्रेण तत्ताव।

दवधीयताम् (बृ० श्लो० सं० ७।७७)। तत्र मनो धीयतामित्याह। अत्रार्थे दधातेरुभयथा प्रयोगा दृश्यन्ते सकर्मकत्वेनाकर्मकत्वेन च। स वीर किं मुह्यसि नावधत्से (भा० कर्ण० ८६।४३)। नावेक्षसे, न चेतयस इत्याह। यद् दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति (छां० उ० ८।१३।१)। अवाधाः=न्यधाः =निहितवानसि। दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम् (तै० आ० २।१)। अवधत्ते न्युब्जी करोति=न्यञ्चयति=नीचैः करोति। मारुत्यां मेषीमवदधाति वारुण्यां मेषम् (आप० श्रौ० ८।२।६।१७)। अवदधाति=प्रक्षिपति। मारुत्यां मरुद्देवताकायामामिक्षायाम्। कर्तेऽवदध्युरुपसर्प मातरं भूमिमेतामिति (आश्व० गृ० ४।६।८)। कर्ते=गर्ते। अवदध्युः =नीचैर्दध्युः=निदध्युः। इत्यवटेऽवदधाति (भा० श्रौ० ७।८।६)। उक्तोऽर्थः। न वै तदवकल्पते यदश्वस्य पादमवदध्याद् वा गो. पादमवदध्यात् (श० ब्रा० ४।३।४।७)। अवदध्यात्=अग्नौ निक्षेपयेत्। (चमसे) न्यासयेत्। अथ मुसलमादत्ते...तदवदधाति (श० ब्रा० १।१।४।१०)। उलूखलेन्तर्दधातीत्यर्थः। त्रिलोककृद् ब्रह्मा प्रभुरेकाकी तिष्ठति। ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति (भा० शां० १६०।१०)। अवदधाति=निमज्जयति। आसजतीत्यर्थः। ततस्तांस्तेषु कुण्डेषु गर्भानवदधे तदा (भा० आदि० ११५।२२)॥ अवदधे= निदधे। गर्तेष्ववकानवधापयेत् (आश्व गृ० २।८४।४)। संचाययेत्, सङ्ग्राहयेत्। यथा क्षुरः क्षुरधानेऽवहितः (बृ०उ० १।४।७)। अवहितः—न्यस्तः। त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ (नि०६।२७)। कूपेऽवहितम्=कूपेऽन्तः पतितम्। त्रितः कूपेऽवहितो देवान् हवत ऊतये (ऋ० १।१०५।१७)। उक्तोऽर्थः। उत देवा अवहितं देवा उन्नयथा पुनः (ऋ० १०।१३७।१)। अवहितम्= पतितम्, अवाञ्चम्, अधोगतम्। न सोपानाद् वेष्टितशिरा अवहितपाणिर्वाऽऽसीदेत् (आप० ध० १।२।५।१०)। अवहितपाणिर्न्युब्जीकृतहस्तः। शृणु मेऽवहिता वचः (रा० २।६३।४)। अवहिता=दत्तावधाना=एकाग्रमनाः। कर्तव्येष्ववहितेन भवता भवितव्यम् (प्र० च०)। उक्तोऽर्थः। लवणमेतदुदकेऽवधाय (छां० उ० ६।१२।३)। अवधाय न्यस्य। दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय (गो० गृ० १।२।२)। अवधाय वेष्टयित्वा। प्रबद्धं हिरण्यं हवन्यामवधाय (का० श्रौ० १०।२।४)। हवन्यामवधाय=जुह्वां निधाय। कंसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्तावतधाय, (गो० गृ० ३।२।३५)। हस्तावधाय=हस्तौ निमग्नौ न्युब्जौ कारयित्वा। हिरण्यमवधाय (तास्वप्सु) (आश्व० गृ० २।६।६)। निक्षिप्य, न्यस्येत्यर्थः। पादाग्रे दशमवधाय (मुद्रा० ५।१३)। दशं निपात्येत्यर्थः। सोऽज्ञायमानः (धृष्टद्युम्नः) पुरुषानवधाय समन्ततः (भा० आदि० १६२।२)। अवधाय=अवस्थाप्य। गच्छावधानं नृपते ततो

दुःखं प्रहारयसि (भा० शां० २६।१६)। **अवहितः समाहितो भवेत्याह।** वयं तु तमृते वीरं वनेऽस्मिन्द्विपदां वर। अवधानं न गच्छामः काम्यके सह कृष्णया (भा० वन० ८६।१७)॥ **अवधानं मनसः स्वास्थ्यम्।**

—**धाव्** (धावु गतिशुद्ध्योः)। यत्ते गात्रादग्निना पच्यमानादभिशूलं निहतस्यावधावति (वा० स० २५।३४)। **अवधावति=अधस्ताद् गच्छति। ये तव शरीराद्रसबिन्दवो निष्क्रम्य निपतन्तीत्याह।** अदो यदवधावत्यवत्कमधि पर्वतात् (अथर्व० २।३।१)। **अवरुह्य भूमिं धावतीत्युक्तं भवति।**

—**अवधीर्** (अवधीर गणेऽपठितः)। अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु यतोऽवधीरणाम् (शा० ३।१४)। **अवधीरणा=तिरस्कारः प्रत्याख्यानम्।** अचेतन नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया (शा० ६।१२)। **अवधीरिताऽवमानिता।**

—**धू** (धूञ् अवधूनने)। अस्मे देवासोऽवधूनुता वसु (ऋ० १०।६६।१४)। **हे देवा नोऽभि वसु प्रेरयत, यथा फलिनः पादपो वातादिना कम्पितोऽवपातयति फलानि तथा कुरुतेत्यर्थः।** अव दस्यूँ रधूनुथाः। (ऋ० ८।१४।१४)। **अवाधूनुथाः=अवाक्षिपः=अवाङ्मुखानपातयः=परासुवः।** अपेत्य पत्त्रिभ्योऽवधूनोत्यवधूतमिति (का० श्रौ० २।४।२)। **कृष्णाजिनमवधूनोति, तल्लग्नं धूल्यादिकं कृष्णाजिनकम्पनेन उत्करे पातयतीत्यर्थः।** एवमनिर्ज्ञातानि दैवतान्यप्यवधूयन्ते (स्वप्न० १)। **अवधूयन्ते=अवज्ञायन्ते=अवगण्यन्ते।** विपरीतस्तु विद्वद्भिः स्वतन्त्रोऽप्यवधूयते (का० नी० १२।२)। **अवमन्यते।** रेणुः पवनावधूतः (रघु० ७।४३)। **अवधूतः=विक्षिप्तः। इहावस्योपसर्गस्य नीचैस्त्वादिरर्थो नास्ति।** लीलावधूतैश्चामरैः (मेघ० ३७)। **अवधूतैरुपरि कम्पितैश्चलितैः।** आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः। (ध्वन्यालोके २।५ व्याख्यायाम्)। **अवधूतो हस्तक्षेपेण सहसा पराणुन्नः।** अवधूतप्रणिपाताः (विक्रम० ३।५)। **अवधूतो निराकृतोऽवहेलितः।** आत्मानमवधूत मे विज्ञाय नृपपुङ्गवाः (रा० १।६६।२१)। **अवधूतं तिरस्कृतम्।** सुरवधूरवधूतभयाः शरैः (रघु० ६।२०)। **अवधूतभयाः =निरस्तत्रासाः।** गवाघ्रातमवधूतमवक्षुतम् (अन्नम्) (मनु० ५।१२५)। **अवधूतम् पदावधूतं पदापसारितम्।** यो विलङ्घ्याश्रमान्सर्वानात्मन्येव स्थितः पुमान्। अतिवर्णाश्रमी योगी अवधूतः स उच्यते॥ अवधूतवेषः (भा० पु० ११।६।२५)। **संन्यस्तवस्त्रः। परैर्भुक्तोज्झितानि वा जीर्णानि वसनानि यो वस्ते, स तथोक्तः।** पापम्... । अवधूय...गच्छेम स्वर्गमुत्तमम् (भा० वन० ५२।२०)। **कम्पनेनेव परासूय पराकृत्येत्यर्थः। रुचिरोऽवधूनोतेः प्रयोगः।** चण्डी मामवधूय पादपतितम् (विक्रम० ४।६७)। **तिरस्कृत्य, उपेक्ष्य, अवज्ञायेत्यनर्थान्तरम्।**

—धृ (धृञ् धारणे)। श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्। आत्मनः प्रतिकूलानि परेषां न समाचरेत् (भा०)॥ **अध्यवसीयतामित्यर्थः**। वानप्रस्थस्य धर्मं ते कथयाम्यवधार्यताम् (मार्क०पु०)। **अवहितं श्रूयतामित्यर्थः**। न विश्वमूर्तेरवधार्यते वपुः (कु०५।७८)। **अवधार्यते=परिच्छिद्यते। इदमित्थम्भूतमिति निश्चीयते**। द्विरुच्चारितं शतमप्यवधारयति (सुश्रुत०२।१६१।६)। **अवधारयति=चिन्तयति**। तत्रैवमवध्रियते सोम एवान्नम् (बृ० उ०)। **अवध्रियते=अवसीयते=निश्चितं ज्ञायते**। प्रकृतिपुरुषसंयोग एव साक्षाद् बन्धहेतुरवधारितः (साङ्ख्य० १।१८।५४)। **अवधारितो निश्चितः**। पुरैव पुंसाऽवधृतो धराज्वरः (भा० पु० १०।१।२२)। **अवोऽस्थाने**। सर्वत्र यदवधारेणोच्यते स एकान्तः (सुश्रुते)। **अवधारेण=याथातथ्येन**। अस्तीत्युत्पन्नसत्त्वस्यावधारणम् (नि० १।७।१०)। **निश्चयोऽभ्युपगमः**। विषादे विस्मये हर्षे कोपे दैन्येऽवधारणे। प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति॥ **अवधारणं नियमो नियोगकरणम्। यावदवधारणे** (पा० २।१।८)। **यावदमत्रं ब्राह्मणानामन्त्रयस्वेत्यत्रावधारणमियत्तापरिच्छेदः**।

—ध्वंस् (ध्वंसु अवस्रंसने गतौ च)। ध्वान्तं तमोऽवदध्वसे हते (वृत्रे) (ऋ० १०।११३।७)। **अवदध्वसे=अवस्तादगच्छत्**। चूर्णैरवध्वंसयति अवचूर्णयति। **अवध्वंसयति=अवकिरति**। यः परुषः पारुषेयोऽवध्वंस इवारुणः (अथर्व० ५।२२।३)। **अवध्वंसो रजश्चूर्णं वा। क्वचिदवध्वंसः परित्यागमाह। तत्रावो ध्वंसस्यासाकल्यमाह**।

—नम् (णम् प्रह्वत्वे शब्दे च)। सर्वो हि बिभ्यत्तस्या आसीदति अवनमति च (नि० २।६ इत्यत्र दुर्गः)। **अवनमति प्रह्वो भवति**। अद्य प्रभृत्यवनताङ्गि तवास्मि दासः (कु० ५।    )। त्वय्यादातुं जलमवनते (मेघ० ४८)। लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः (अमरु० ७)। गलितनयनवारिर्याति पादावनामम् (शिशु० ११।३५)। **पादावनामं याति=चरणयोरवनतिं प्रणिपातं याति। सर्वत्र विस्पष्ट उदितचर एवार्थः**।

——नश् (णश अदर्शने) अवनेशुः कुरूणां हि वीर्याणि अर्जुनाद् भयात् (भा० ४।१७२८)। **अवनेशुः=तिरोभावं जग्मुः**।

—नह् (णह बन्धने)। अवनद्धं श्नथितमप्स्वन्तः (अथर्व० १।११६।२४)। **अवनद्धम्=पिहितम्=आच्छन्नम्**। सवालधानेन चर्मणावनह्य (का० श्रौ० १३।३।१६)। **उक्तोऽर्थः**। गदा हेमपट्टावनद्धा (भा०)। चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः (मनु० ६।७६)। **चर्मावनद्धं चर्मणाच्छादितम्**। यूपं कृत्वा तु मलयमवनाह च तक्षकम् (भा० द्रोण० २०२।७३)। **अवनाहम्=त्रिवेणुयुगबन्धनरज्जुम्**।

—निज् (णिजिर् शौचपोषणयोः)। तस्मात् पाणी अवनेनेक्ति (श० ब्रा० १।२।१।२३)। शुन्धतीत्याह। प्रायेण निर्जिर्निःपूर्वः प्रयुज्यते। अत्राव-पूर्वः। अर्थे तु न कश्चिद्विशेषः। केवलमवशब्दः शोधनजलस्यावपातं द्योतयति। अन्यत्रापि—उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने। न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम् (मनु० २।२०९)॥ अवनेजनम्=प्रक्षालनम्। पादमव-नेनिजे (ऐ० ब्रा० ८।२७)। प्रक्षालयामासेत्यर्थः। तस्य (मनोः) अवनेनिजा-नस्य मत्स्यः पाणी आपेदे (श० ब्रा० १।८।१।१)। अवनेनिजानस्य=प्रक्षा-लयतः।

—नी (णीञ् प्रापणे)। मन्थे सम्पातमवनयेत् (छां० उ०)। सम्पातं हुतावशेषमासिञ्चेदित्यर्थः। त (पूर्णं ग्रहम्) न स्तूयमानेऽवनयेत् (श० ब्रा० ४।२।४।६)। स्तुतौ प्रवर्तमानायां होतुश्चमसे नावर्जयेदित्युक्तं भवति। उच्छेषणं वल्मीकवपायामवनयेत् (तै० ब्रा० १।८।६।२)। उक्तोऽर्थः। आहुतेराहुतेस्तु सम्पातं मूर्धनि वध्वा अवनयेत् (गो० गृ० २।३।७)। सम्पातः=शेषः। अव-नयेत्=निपातयेत्। मन्थे संस्रवमवनयति (श० ब्रा० १४।९।३।४)। आसिञ्चति। उदपात्रेऽक्षतान् अवनीय (शां०गृ० १।२२।१२)। अपः श्वभ्रेऽव-नयति (का० श्रौ० १६।३।२)। ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः (ऋ० १। ११६।८)। अवनीतमधः पातितम्। युवमत्रयेऽवनीताय (ऋ० १।११८।७)। उक्तोऽर्थः। अश्वान्प्रोक्षत्यपोऽवनीयमानान् (का० श्रौ० १४।३।३)। अवनीय-मानान्=प्रवणं नीयमानान्। जलेऽवतार्यमाणान् इत्यर्थः। अवनायस्तु निपात-नम् इत्यमरः। अवोदोर्नियः (पा० ३।३।२६)। इत्यवपूर्वान्नयतेर्घञ्।

—नु (णु स्तुतौ)। असश्चतः शतधारा अभिश्रियो हरिं नवन्तेऽव ता उदन्युवः (ऋ० ९।८६।२७)। अवनवन्ते=गच्छन्ति=सङ्गच्छन्ति। अयमुपसर्ग-कृतो धात्वर्थबाधः।

—नुद् (णुद प्रेरणे)। कुरूनवानोदयिष्यस्त्वं न त्वां व्यसनमाव्रजेत् (भा० द्रोण० ८६।६)। कुरूनचोदयिष्यस्त्वमिति पाठान्तरम्। तन्निर्दोषम्।

—पत् (पत्लृ गतौ)। सोपि हंसो गदां गृह्य रथात्तस्मादवापतत् (हरि०३। १२४।१२)। अवाप्लवत, अवास्कन्दत्, अवाकूर्दतेत्यर्थः। अवपतन्तीरवदन् दिव ओषधयस्परि (ऋ०१०।९७।१७, वा०सं० १२।९१)। अवपतन्तीः=अवपतन्त्यः। अवाचीनं पतन्त्य इत्यर्थः। श्येनावपातमवपत्य (प्र०च०)। अवपत्य=सरभसम-वतीर्य। जल कूलावपातेन प्रसन्नं कलुषायते (मृच्छ०९।२४)। कूलावपातः= रोधःपतनम्। अवपातस्तु हस्त्यर्थे गर्ते छन्ने तृणादिना (यादवो वैजयन्त्याम्)। रोधांसि निघ्नन्नवपातमग्नः करीव वन्यः परुषं ररास (रघु०१६।७८)। अवपाते

**गजग्रहणार्थे गर्त इति मल्लिनाथः।** अवपाताननमग्नं मृगमिव कोभ्युद्धरिष्यति माम् (अवदा० जा०, २४, ४) । **अवपातोऽवटः ।** तस्मिंस्तत्रावपतिते महिष्यः केशवस्य याः (हरि० २।१०८।५) । **अवपतिते=अवतीर्णे ।** केशकीटावपतितं क्षुत श्वभिरवेक्षितम् (भा० अनु० २३।६) । **केशकीटा अवपतिता उपरि पतिता यत्र तत्** । लघूनुन्नमयन्भावान् गुरूनप्यवपातयन् (कथा० २५।४२)। **अवपातयन् =अवनमयन्** । (प्रभञ्जनः) ।

**—पद् (पद गतौ)** । पूष्णश्चक्रं न रिष्यति न कोशोऽवपद्यते (ऋ० ६। ५४।३) । **अवपद्यते=अधः पतति,** भ्रंशते । जामिमृत्वा माऽवपत्सि लोकात् (अथर्व० ६।१२०।२) । **माऽवपत्सि=मा पप्तम्, स्वर्गाल्लोकान्मा प्रच्योषि ।** कर्तमवपदात्यप्रभुः (ऋ०९।७३।९)। **गर्तमवपततीत्याह ।** अवपद्यन्तामेषामायुधानि (अथर्व० ८।८।२०) । **नश्यन्त्वित्यर्थः ।** ये गर्भा अवपद्यन्ते (अथर्व० ५।१७। ७) । **अवपतन्ति । प्रच्यवन्तेऽवस्रवन्तीत्यर्थः ।** न्यङ्ङुत्तानोऽवपद्यते न (ऋ० ४।१३।५) । **अवपद्यते=भ्रंशते=अधः पतति ।** उत्क्रामातः पुरुष माऽवपत्थाः (अथर्व० ८।१।४) । **माऽवपत्थाः=मा स्म नीचैर्गच्छः ।** मोषु देवा अदः स्वरवपादि दिवस्परि (ऋ० १।१०५।३) । **दिवस्परि दिवः सकाशाद्भ्रष्टं मा भूदित्याह ।** यावन्तः स्तोका अवापद्यन्त (तै० ब्रा० २।१।१।१) । **स्तोका बिन्दवो ऽपतन्नित्यर्थः ।** ब्रह्मा घृते हिरण्यमवपद्यते (लौ०गृ० ३६।६)। **अवपद्यतेऽवष्टम्नातीति देवपालष्टीकाकारः ।** यदि कीटोऽवपद्येत (आप०श्रौ० ९।१।२।३९)। **अग्निहोत्रस्य सान्नायस्योपरि पतेद् इत्याह ।** अथ ग्रन्थिं करोतीन्द्रस्य ध्रुवोऽसीति नेदवपद्याता इति (श० ब्रा० ३।६।१।२५) । **नेदवपद्यातै=विकीर्णो विषितो विस्रस्तो मा भूदिति ।** गर्भः सह जरायुणाऽवपद्यताम् (लौ० गृ० ३३।३) । **अवपद्यताम्=अधो गच्छतु । निष्क्रामत्विति तात्पर्यार्थः।** अव भेषज पादय इमां संविवृत्सति (अथर्व० ८।६।१६) । **अवपादय=नाशय ।** क्षतं कीटावपन्नं च यच्चोच्छिष्टाचितं भवेत् (भा० शल्य० ४३।२६) **कीटावपन्नम्=यस्योपरि कीटोऽवपन्नः पतितस्तद् ।** पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । केशकीटावपन्नं च मृत्प्रक्षेपेण शुध्यति (मनु० ५।१२५) ॥ केशकीटावपन्नम् (गौ० ध० २।८। ९)। **उक्तोऽर्थः ।**

**—पा (पा पाने)** । अयं मित्राय वरुणाय शन्तमः सोमो भूत्ववपानेषु (ऋ० १।१३६।४) । **अवनतं पानमवपानमिति सायणः । अवनस्य पानमित्यर्थः ।** अस्मिन्त्सु सोमेऽवपानमस्तु ते (ऋ० १०।४३।२) । गौराद् वेदीयाँ अवपानमिन्द्रो विश्वाहेद् याति सुतसोममिच्छन् (ऋ० ७।९८।१) । **अवपानम्=पानस्थानं पल्वलादि ।** ऋश्यो न तृष्यन्नवपानमा गहि (ऋ० ८।४।१०) । माप स्थातं महिषेवावपानात् (ऋ० १०।१०६।२) । **उक्तोऽर्थः । ऋश्यो मृगः ।**

—पा (पाल् लुगागमः)। **अवपालितोऽरक्षितो** भवतीति कोशकाराः।

—पाशय् (पाश+णिच्)। शमीशाखाभिरास्तीर्य दृढपाशावपाशिताम् (रा० ३।१५।२२)। **अवपाशितां सर्वतो बद्धाम्। अत्रोपसर्गस्य प्रसिद्धार्थस्य बाधः।**

—पीड् (पीड अवगाहने)। ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव (भा०१।६२६२)। **अवपीड्य=आबाध्य।** ममज्जेव मही तस्य भूरिभाराव-पीडिता (भा०पु० १।३७।१०)। **अवपीडिता=अवगाढा।** (नेत्रे) पार्श्वावपीडिते (सुश्रुत० २।१०४।४)। **पार्श्वयोः प्रान्तयोरवगाढे इत्याह। अवपीड इति** नस्य-भेदः (सुश्रुत० २।४२।८)।

—पॄ (पॄ पालनपूरणयोः)। मधुमेदोऽवपूर्णा च पृथिवी (हरि० ३।२६।५४)। **अवपूर्णा=पूर्णा। इहावशब्दो नार्थं धातोर्विशिनष्टि। मधुमेदोम्बुपूर्णा चेति पाठान्तरम्।**

—प्लु (प्लुङ् गतौ)। द्रोणाय व्यसृजद् राजन् स रथादव पुप्लुवे (भा० द्रोण० १२७।५३)। **पुप्लुवेऽवततार।** सिंहासनादवप्लुत्य (बृ० श्लो० सं० २।८७)। **प्लुत्याऽवतीर्येत्यर्थः।** अवप्लुत्य रथात् कृष्णः (भा० पु० १०।७८।३)। **उक्तोऽर्थः।** अवप्लुत्य पदानि षट् स्वरथं पुनरास्थितः (भा० द्रोण० १४।७४)। **अवप्लुत्य=अवतीर्य गत्वा।** रथादवप्लुत्य ततोऽभ्यधावत् (भा० वन० २६६।१०)। अवप्लुतः सिंह इवाचलाग्रात् (भा० भीष्म० ८५।३८)। **अवकूर्दितः।** धर्मवांस्त्वमधर्मज्ञ सतां मार्गादवप्लुतः (भा० सभा० ४६।२०)। **अवप्लुतः=प्रच्युतः=भ्रष्टः=विचलितः।** अवप्लुतौ रथोपस्थाद्युधामन्यूत्तमौजसौ (भा० द्रोण० १३०।४१)। **अवप्लुतौ=अवतीर्णौ।** अवप्लुतः स्यादाविःपृष्ठो वा (आश्व० गृ० २।१।५)। **अवप्लुतः=निमग्नः (धृते)।** अवप्लुतम् (भा० शल्य० ५७।१६)। **प्रहारवञ्चनार्थं नम्रीभूय निःसरणमवप्लुतमिहोक्तम्।**

—बन्ध् (बन्ध बन्धने)। अवबन्धो हि बुद्धस्य कर्मभिर्नोपपद्यते (भा० शां० ३३१।५२)। **अवबन्धो नीचो देहबन्धः।** अवबन्धः (सुश्रुते २।३०६।१२)। **नेत्रपात्रयोः स्तम्भोऽवबन्ध इहोक्तः।** प्रसित. प्रसक्तो यस्तत्र नित्यमेवावबद्धः स उच्यते (पा० २।३।४४ सूत्रे काशिकायाम्।

—बुध् (बुध अवगमने, बुधिर् बोधने)। यश्चाधरोत्तरानर्थान् विगीता-न्नावबुध्यते (मनु० ८।५३)। **अवबुध्यते=सम्यग् जानाति।** दैवतमन्तरेण न शक्यो देवतापदार्थः सम्यगवबोद्धुम् (नि० ७।१ इत्यत्र दुर्गवचनम्)। **अवबोद्धुं साकल्येनावगन्तुम्।** तत्र मे कौशलं सर्वमवबुद्धं विशाम्पते (भा० वि० ३।१०)। तत्त्वावबोधैकरसो न तर्कः (विक्रम०)। **उक्तोऽर्थः।**

—भाष् (भाष व्यक्तायां वाचि)। इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे

(भा० स्वर्गा० २।४०)। अवशब्दो धात्वर्थं न विशिनष्टि। द्वित्वाभाव आर्षः।

—भुज् (भुजो कौटिल्ये)। अवभुग्नभोगिफणमण्डलां भुवम् (१५।५४)। अवभुग्नमवनमितम्।

—भृ (भृञ् भरणे)। दीक्षान्तोऽवभृथः (अमरः)। अवभ्रियते यज्ञोऽनेनेति व्युत्पत्तेः। इहावशब्द उत्तरपदार्थस्य न्यूनतां नाह यथान्यत्र। रूढश्चायं प्रयोगो नापवाद्यः।

—मन् (मन ज्ञाने मनु अवबोधने)। जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे (उत्तर० ७।८)। अवजानासि, अवगणयसीत्यर्थः। योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः (मनु० २।११)। उक्तोऽर्थः।

—मान् (मान पूजायाम्)। भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् (मनु० २।५०)। प्रत्याख्यानेन न तिरस्कुर्यात्।

—मुच् (मुच्लृ मोक्षणे)। मेखलामवमुञ्चते (गो० गृ० ३।४।२३)। अवमुञ्चते=अधस्तान्मुञ्चते=अवतारयति। अवमुक्तोपानत्कः=अवमुक्ते परिहृते उपानहौ येन सः।

—मूर्च्छ् (मुर्छा मोहसमुच्छ्राययोः)। कस्मादेषां कलहो नावमूर्च्छेत् (भा० उ० २६।३)। अवमूर्च्छेत्=वर्धेत। अत्र मूर्च्छतेः केवलस्य योऽर्थः समुच्छ्रायलक्षणः स एवावपूर्वस्य। अपि वाऽवो विशेषकः स्यात्। नावमूर्च्छेत्=नापकृष्येत, न शाम्येत्। अवोऽसाकल्ये।

—मृज् (मृजू शुद्धौ)। अथ यदन्तर्यामि हुत्वा। अवाञ्चमवमार्ष्टि (श० ब्रा० ४।५।५।६)। अवमार्ष्टि=अवस्तान्मार्ष्टि=शोधयति। सर्वं तूष्णीमनुक्रामन्नुच्च मार्ष्टि अव च मार्ष्टि (बौ० श्रौ० २।१८।३६)। उन्मार्ष्टि=ऊर्ध्वभागे मार्ष्टि। अवमार्ष्टि=अवस्तादधोभागे मार्ष्टि। इमा ते वाजिन्नवमार्जनानि (ऋ० १।१६३।५)। अवमृज्यतेऽनेनेत्यवमार्जनमवमर्दनसाधनम्। कङ्कतविशेषः।

—मृद् (मृद क्षोदे)। शत्रुबलावमर्दन (रा० ३।३५।११४)। अवमर्दनः=विध्वंसकः। हस्तपादावमर्दनम् (पञ्चत०)। उद्वर्तनमित्यर्थः।

—मृश् (मृश आमर्शने आमर्शनं स्पर्शः)। अवमृशन्ती कलहंसकान् (काद०)। परामृशन्ती स्पृशन्तीत्यर्थः। तद्धावमृश्य न विवेद (छां० उ० ६।१३।१)। अवमृश्य=अन्विष्य।

—यज् (यज देवपूजासंगतिकरणदानेषु)। तांस्ते यज्ञस्य मायया सर्वान् (वरुणस्य पाशान्) अवयजामहे (तै० ब्रा० ३।१०।८।२)। अवयजामहे=यज्ञकर्मणा पराणुदामः। सुन्वानो हि ष्मा यजत्यव द्विषः (ऋ० १।३३।७)।

**उक्तचर एवार्थः ।** अव देवानां यज हेडो अग्ने (अथर्व० १६।३।४) । **अवयज= तिरस्कुरु । यजतिः पूजाकर्मा । अवस्तद्वैपरीत्यकृत् । पूजायाश्च वैपरीत्यमनादरः पराक्रिया ।** यदेनश्चकृमा वयमिदं तदवयजामहे (वा० स० ३।४५) । **अवयजामहे=अपनोदयामः=अपाकुर्मः ।** या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि याऽऽदित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे (आप० श्रौ० ५।४।१६।४) । **अवयजे=यजे=पूजयामि । अत्रानर्थकोऽवः ।** यदेकस्याधि धर्मणि तस्यावयजनमसि (वा०सं०२०।१७) । या तेषामवया दुरिष्टिः (अथर्व० २।३५।१) । **अवया अवयजनं यागाननुष्ठानम् इति सायणः । अपकर्षवचनोऽवोऽत्र नञर्थे वर्तते । साधीयसी खल्वेषा वृत्तिः ।** अवेष्टा दन्दशूकाः (श० ब्रा० ५।४।१।१) **अवेष्टा दूरीकृता अपनुन्नाः ।** प्रजाः सृष्ट्वांहोऽवयज्य सोऽकामयत वृत्रं हन्यामिति (मै०सं० १।१०।१४) । **अंहोऽवयज्य=अंहोऽवेज्य=पाप्मानं विपूय ।**

**—या (या प्रापणे) ।** अव देवैर्देवकृतमेनोऽयासिषम् (वा० सं० ३।४८) । **अवयासिषम्=अवायासिषम्=अवानैषमित्यर्थः ।** वरुणस्य हेडोऽवयासिसीष्ठाः (ऋ० ४।१।४) । **वरुणस्य क्रोधमपनेषीष्ठा इत्याह ।** नू चित्सुदानुरवयासदुग्रान् (ऋ०६।६६।५)। **अवयासत्=अपगमयेत् ।** अवययुरमरस्त्रियोऽस्य यत्नं विजयफले विफलं तपोधिकारे (कि० १०।१५) । **अवययुः=अवजग्मुः ।** न जनोऽयमित्यवयये च स तापसैः (कि० १२।१५) । **अवयये=जज्ञे । कर्मणि लिट् ।** अथवा धर्ममसुबोधसमयमवयात बालिशाः (शिशु० १५।१६) । **अवयात=जानीत ।** भवा मरुद्भिरवयातहेडाः (ऋ० १।१७१।६) । **अवयातहेडाः=शमितक्रोधः ।** अवयाता सदमिद् दुर्मतीनाम् (ऋ० १।१२६।११) । **अवयाता=अपाकर्ता=शमयिता ।** अवयाता हरसो दैव्यस्य (अथर्व० २।२।२) । **अवयाता=अपगमयिता=शमयिता । उभयत्रान्तर्णीतण्यर्थको यातिः ।** नेह भद्रं रक्षस्विने नावयै नोपया उत (ऋ० ८।४७।१२) । **अवयै=अवयातुम्=इतोऽपवर्तितुम्=अपसर्प्तुम् । उपयै=उपयातुमुपसर्प्तुम् ।** उद्यानं ते पुरुष नावयानम् (अथर्व० ८।१।६) । **अवयानम्=अवाङ्गमनम् ।**

**—यु (यु मिश्रणामिश्रणयोः) ।** अवयुवती (नि० ४।११) । **वियुञ्जाने ।**

**—राध् (राध साध संसिद्धौ) ।** अवैतेनारात्सीरसौ स्वाहा (अथर्व० ५।६।६) । **अवरात्सीः=अवारात्सीः=व्यृध्यसि=न भवसि=न सिध्यसि=न सिद्धार्थो भवसि ।** यथैव षडवराध्नोति स रिक्तः (ऐ० ब्रा० ३।७) । **षट् छन्दो वषट्कारमाह । अवराध्नोति समृद्ध्यभावमाप्नोति ।**

**—री (रीङ् स्रवणे) । अवरीणो** धिक्कृतश्चापीत्यमरः ।

—रुच् (रुच दीप्तौ प्रीतौ च)। अदो यदवरोचते चतुष्पक्षमिवच्छदिः (अथर्व० ३।७।३)। **अवभासते। अवशब्दो रोचनस्यासाकल्यमाह। एवं विरोचते इत्यस्य प्रतिद्वन्द्वि भवत्यवरोचत इति।**

—रुज् (रुजो भङ्गे)। अवरुज्य ययौ गुल्मान्पथस्तस्य समीपजान् (भा० आदि० १५१।३)। **अवरुज्य=अवभज्य=नीचैर्भग्नान् कृत्वा।** परश्वधैः शाल इवावरुग्णः (भा० कर्ण० ८२।५)। **अवरुग्णोऽधोभग्नः।**

—रुद् (रुदिर् अश्रुविमोचने)। अवक्षुतमवरुदितं तथा श्राद्धे च वर्जयेत् (भा० अनु० ६१।४१)। **यस्योपरि अश्रूणि पतितानि तद् (अन्नम्) अवरुदितमुच्यते।**

—रुध् (रुधिर् आवरणे)। स ह गवां सहस्रमवरुरोध (बृ० उ० ३।१।१)। **व्रजेऽपिदधौ।** कथं तर्हीमौ द्वौ प्रधानशब्दौ युगपदवरुध्येते ( )। **नियम्येते इत्यर्थः। गामवरुणद्धि व्रजम्। यदा प्रवेशयतीत्यर्थस्तदा (ऽधिकरणस्य) कर्मसंज्ञा विहिता** (पा० १।४।५१ सूत्रे न्यासे)। स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण (सुश्रुते १।३२८।८)। **अवरुध्यन्ते=पिधीयन्ते।** आव श्मशा रुधद्वाः (ऋ० १०।१०५।१)। **अपोरुणदित्याह। अपां गतिं रुद्धवानित्यर्थः।** समुदायनिपातनाच्चार्थविशेषेऽवरुध्यन्ते (द्विदण्डयादयः) (पा० ५।४।१२८ सूत्रे काशिकायाम्)। **अवरुध्यन्ते=नियम्यन्ते।** यस्य चार्थेऽवरुध्यसे (रा० २।३०।६)। **अवरुध्यसे=वार्यसे=बहिष्क्रियसे=अपनुद्यसे।** सा मेऽमुष्मादिदमवरुन्ध्यात् (कौ० उ० २।३)। **अवरुन्ध्यात्=प्रापयेत्=आसादयेत्=उपनमयेत्।** सर्वेषां छन्दसां वीर्यमवरुन्धे (ऐ० ब्रा० १।१)। **प्राप्नोतीत्यर्थः। अवरोधः प्राप्तिरिति षड्गुरुशिष्यः।** चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः (ध्वन्यालोके १।१४ व्याख्यायाम्)। **अवरुध्यते=आलिङ्ग्यते।** तेऽर्चन्तः श्राम्यन्तश्चेरुः। अमृतत्वमवरुरुत्समानाः (श० ब्रा० १०।४।३।६)। **अवरुरुत्समाना अवरोद्धुं प्राप्तुमिच्छन्तः, ईप्सन्त इत्यर्थः।** निगदितरूपैर्जलधरजालैस्त्र्यहमवरुद्धं द्व्यहमथवाऽहः। यदि वियदेवं भवति सुभिक्षम्…(बृ० सं० २४।२०)। **अवरुद्धमाच्छादितम्।** अन्यक्षेत्रे अवरुद्धं चरन्तम् (अथर्व० ३।३।४)। **अवरुद्धं शत्रुभिर्निरुद्धमिति सायणः।** अथ बोधिसत्त्वस्तथेत्यस्मै प्रतिश्रुत्य यत्र ते नृपसुतास्तेनावरुद्धास्तत्रैवाभिजगाम (अवदा० सुत० जा०)। **अवरुद्धाः=निरुद्धाः।** तासां चेदवरुद्धानां चरन्तीनां मिथो वने (मनु० ८।२३६)। **अवरुद्धानां पालेन नियमितानाम्।** अवरुद्धोऽचरत्पार्थो वर्षाणि त्रिदशानि च (भा०)। **अवरुद्धः संवृताकारः।** अवरुद्धा रथिनः केकयेभ्यः (भा० उ० २२।२०)। **अवरुद्धाः=निष्कासिताः=निःसारिताः=निर्वासिताः।** देव्यः परिणयाहृताः।

अवरुद्धापि जयमत्यभिधाना (राज० ७।७२४)। **अवरुद्धाऽन्तःपुरे निक्षिप्ता विधिवदनूढा ।** अवरुद्धासु दासीषु भुजिष्यासु तथैव च (याज्ञ० २।२९०)। **पुरुषान्तरोपभोगतो निरुद्धाः सेवार्थं रक्षिता इति मिताक्षरा ।** प्रहर्षेणावरुद्धा सा व्याहर्तुं न शशाक ह (रा० ६।११३।१४)। **हर्षपरीतां हर्षवशगां हर्षेण परवतीमाह ।** अवरुद्धं वने राम दिष्ट्या त्वमनुगच्छसि (रा० २।११७।२२)। **अवरुद्धं पित्रा नियुक्तमिति तिलकः ।** न शशाकोत्तरैर्वाक्यैरवरोद्धुं समुद्यतम् (रा० ३।१।३३)। **अवरोद्धुम्=उपरोद्धुम्=नियन्तुम् ।** सर्वग्रहणं शूद्रावरोधनार्थम् (मनु० १।२ इत्यत्र मेधातिथिवचनम्) । **अवरोध उपसङ्ग्रहः ।** बहून्यद्भुतरूपाणि द्रष्टव्यानीह मातले । तव कार्यावरोधस्तु तस्माद् गच्छाव माचिरम् (भा० उ० ९८।२५) ॥ **अवरोधः=उपरोधः=अन्तरायः ।** अज्ञातचर्या बालानामवरोधश्च माधव (भा उ० ९०।५९) । **अवरोधो राज्याप्रदानरूपो वृत्तिनिरोध इति नीलकण्ठः ।** अच्युतो रोधावरोधाद् ध्रुवो राष्ट्रे प्रतितिष्ठति (कौ० सू० ९८)। **अवरोधोऽधः पातनम्, मज्जनम् ।** **फेनायमानं** स्रोतोवरोधः (सुश्रुते) । **अवरोधः=उपरोधः ।** निन्ये विनीतैरवरोधदक्षैः (कु० ७।७३)। **अवरोधः शुद्धान्तः=अन्तःपुरम् ।** यस्यावरोधस्तनचन्दनानां प्रक्षालनाद् वारि विहारकाले (रघु० ६।४८) । **अवरोधोन्तःपुरस्था योषितः । दुर्गावरोधः=शत्रुबलेन कृतो दुर्गरोधः ।** प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् (रा० १।४।३५)। **प्रत्ययभेदो नार्थभेदः ।** मन्ये प्रकाशीकृतमूर्धजानि रणं प्रविष्टान्यवरोधनानि (ऊरु० १।३८)। **अवरोधनानि=अन्तःपुरजनः ।** राजावरोधनवधूरवतारयन्तः (शिशु० ५।१८)। **अवरोधनमन्तः पुरम् ।** अवरोधनानि सिन्धोः (शिशु० ८।८)। **समुद्रमहिष्यो नद्य इत्यर्थः ।** योग्यः कन्यावरोधने (वि० पु० ६।१।१२)। **भार्यात्वेन ग्रहण इत्यर्थः ।** यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद (ऐ० ब्रा० ४।१४)। **अंश आद्योऽवरोधः स्यात् ।** सर्वेषां कामानामवरुद्ध्यै (ऐ० ब्रा० २।१७)। **अवरुद्धिः प्राप्तिः, तस्यै ।** अन्नाद्यस्यावरुद्ध्यै (जै० ब्रा० १।७८)। **उक्तोऽर्थः ।** कस्य चित्त्वथ कालस्य साङ्काश्यादागत· पुरात् । मिथिलामवरोधकः...(रा० १।७१।१६)। **अवरोधक आगतः=अवरोद्धुमागतः । अत्रार्थे परिवेष्टनरूपे केवलो रुधिरपि शक्यप्रयोगः ।** देवराज, दुरवरोधोऽयमनयोर्महावीरयोर्मिथो विमर्दः (महावीर० ६) । **दुरवरोधो दुर्निवारः ।**

**—रुह्** (**रुह बीजजन्मनि**)। अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वाऽवरोहेत् (आश्व० गृ० २।६।१२)। **अवरोहेत्=ससदं प्रपद्येत ।** यानासनस्थश्चैवैनमवरुह्याभिवादयेत् (मनु० २।२०२)। **अवरुह्यावतीर्य ।** यौ व्याघ्रा-

ववरूढौ जिघत्सत: पितरं मातरं च (अथर्व० ६।१४०।६)। **अवरूढौ=इत उपेतौ=अर्वाङ्मुखौ प्राप्तौ।** यदत्रिर्वामवरोहन्नृबीसम् (ऋ० ५।७८।४)। **अवरोहन्=अवगाहमानः=प्रविशन्।** अवरोहशताकीर्णं वटमासाद्य तस्थतुः (रा० २।५२।६६)। **अवरोहोऽवलम्बमानाः शाखा या भूमौ पुनर्मूलानि बध्नन्ति। अमरोप्याह**—शाखाशिफाऽवरोहः स्यात्। **शाखाया अवलम्बिनी शिफा।** इतरेष्वागमाद् धर्मः पादशस्त्ववरोपितः (मनु० १।८२)। **अवरोपितोऽवकलितो हीनः कृतः।** शूनपाणिपादोदरमपगताक्षमुद्वृत्तनाभिमवरोपितं विद्यात् (कौ० अ० ४।६)। **अवरोपितं शूलारोपितम्।**

—**लग् (लगे सङ्गे)।** अवलगनरूपेणोपगम्य (तन्त्रा० १।३)। कृशावलग्नसंलग्नसप्तकीसभृतश्रियम् (शि० भा० २।५६)। **अवलग्नम्=मध्यम्, उदरम्।** क्षिप्तो हस्तावलग्नः प्रसभमभिहतः (ध्वन्यालोके ५।५१ व्याख्यायाम्)। **अवलग्नः स्पृष्टः।**

—**लम्ब् (लबि अवस्रंसने)।** किं न पश्यसि, सर्वोऽयं जनस्त्वामवलम्बते (भट्टि० १८।४१)। **त्वामवलम्बते=त्वत्सापेक्षः, त्वय्याधृतः।** उर्वशी राजानमवलम्बते (विक्रम०)। **राजशरीर आत्मानमवस्रंसयति।** व्यवहारोऽयं चारुदत्तमवलम्बते (मृच्छ०)। **चारुदत्तेन सम्बध्यत इत्यर्थः।** सोऽय क इति बुद्धिस्तु साजात्यमवलम्बते (भाषापरि०)। **साजात्यं समानजातित्वमवलम्बतेऽपेक्षते।** के भवन्तोऽवलम्बन्ते गर्ते ह्यस्मिन्नधोमुखाः (भा० आदि० १३।१६)। **अवलम्बन्ते=निपतिताः।** अन्तरेण तालुके। य एष स्तन इवावलम्बते (तै०उ०१।६।१)। **अवलम्बतेऽन्तरा तिष्ठति।** भूतं हित्वा च भाव्यर्थे योऽवलम्बेत मूढधीः (भा०आदि० २३३।१५)। **अवलम्बेत=श्रयेत।** शक्यमिदानीं जीवितमवलम्बितुम् (माल०)। **अवलम्बितुम्=धर्तुम्।** हस्तेऽवलम्ब्य तम् (कथा० १२१।१७६)। **अवलम्ब्य—आदाय, गृहीत्वा।** ययौ तदीयामवलम्ब्य चाङ्गुलिम् (रघु० ३।२५)। **उक्तोऽर्थः।** अवलम्ब्यापराः कण्ठे हरिम् (हरि० २।८८।२६)। **अवलम्ब्य=आसज्य परिरभ्य।** चित्रलेखाहस्तावलम्बिता (विक्रम० १)। **अवलम्बिता=अवष्टब्धा।** कनकशृङ्खलावलम्बिनी (मुद्रा० २)। **अवलम्बिनी=अवस्रंसमाना।**

—**लिख् (लिख अक्षरविन्यासे)।** नीवीमवलिखतो द्विगुणः (कौ० अ० १।७।२५)। दारुमयानां पात्राणामुच्छिष्टसमन्वारब्धानामवलेखनम् (बौ० ध० १।६।१३।२६)। **अवलेखनं घर्षणम्।** यथा दन्तप्रक्षालनोत्सादनावलेखनानीति (आप० ध० १।२।८।५)। **अवलेखनं कङ्कतादिना केशानां विभागेनावस्थाप-**

नम् । अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं मधु (भा० पु० ७।१२।१२)। **अवलेखा शरीरमृजा, अलङ्करणम् । अन्यत्र दुर्लभोऽत्रार्थे प्रयोगः ।**

**—लिप् (लिप उपदेहे)** । कर्णा याम्याः, अवलिप्ता रौद्राः, नभोरूपाः पार्जन्याः । **अवलिप्ता दूषिताः । अवशब्दो लेपस्य दौष्ट्यमाह ।** भार्गव भार्गव ! अति हि नामावलिप्यसे (महावीर० ३)। **अतिगर्वितोसीत्याह ।** गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् (रा० २।२१।१३) । **अवलिप्तस्य गर्वितस्य ।** अवलिप्तं मुखं ब्रह्मन् दिव्यान्गन्धान् बिभर्मि च (भा० आदि० १६७।३७) । **अवलिप्तं दूषितं लालादिना ।** अवलेपः स्याद् गर्वे लेपने दूषणेपि चेति मेदिनी । अहंकृताव-लिप्तैश्च प्रार्थ्यमानामिमां सुताम् (भा० आदि० १५८।११) । **अहंकृतमहङ्कारः, तेनावलिप्तैर्दूषितैः ।** न मूर्खैर्नावलिप्तैश्च (संवसेत्) (मनु० ४।७९) । **अव-लिप्ता धनादिमदगर्विताः ।** केनान्येनावलिप्ताः (मुद्रा० ३।२७) । **अवलिप्ताः =निर्बर्हिताः, निसूदिताः, हिंसिताः ।** अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि (हरि० १।२७।७) । **अवलेपो गर्वः, दर्पः ।**

**—लिह् (लिह आस्वादने)** । आसुरी वै दीर्घजिह्वी देवानां प्रातःसवन-मवालेट् (ऐ० ब्रा० ८।४) । **अवालेट्=किञ्चिदलिक्षदित्यर्थः ।** नोत्सहे परि-भोगाय श्वावलीढं हविर्यथा (भा० ३।२६१) । **उक्तोऽर्थः ।** नवयौवनावलीढा-वयवा (दशकु०) । **यौवनाभिव्याप्तगात्रा । औपचारिकः प्रयोगः ।** अस्त्रज्वाला-वलीढप्रतिबलजलधेरन्तरौर्वायमाणे (वेणी० ३।७) । **उदितचर एवार्थः ।** पापामचोक्षामवलेहिनी च (भा० अनु० ११।१२) । **अवलेहिनीम्=सृक्किणी लेलिहानाम् ।**

**—ली (लीङ् श्लेषणे)** । कर्णचापच्युतैर्बाणैर्बध्यमानास्तु सोमकाः । अवालीयन्त राजेन्द्र वेदनार्ता भृशार्दिताः (भा० कर्ण० २४।२६) ।। **अवालीय-न्त=अवानमन्, भुवमालिङ्गन् ।** दोषाः स्रोतस्ववलीयमाना घनीभावमापन्नाः (सुश्रुत० २।१९५।१०) । **अवरुध्यमाना अप्रवहन्तोऽविसर्पन्तः ।** लज्जया त्वव-लीयन्ती स्वेषु गात्रेषु मैथिली (रा० ६।९९।४३) । **अवलीयन्ती=अवलीय-माना=सङ्कुचन्ती=प्रविशन्तीव ।** विहगादिभिरवलीनैः (बृ० सं० ५३।११४)। **अवलीनैः=अवतीर्णैः** । पुनर्वृक्षमवलीनो मन्थरकमब्रवीत् (तन्त्रा० २।४) । **वृक्ष आलीनः, वृक्षमाश्रितः।** आलानमवलीनानां वन्यानामिव दन्तिनाम् (यो० वा० ६ (२) ९३।७७) । **अवलीनाः संलीना दुर्बलाः कृशाः ।**

**—लुप् (लुप्लृ छेदने)** । वृकवच्चावलुम्पेत । **अवलुम्पेत=अवकृन्तेत्= सरभसमामृशेत् ।** अन्योन्यस्यावलुम्पन्ति सारमेया यथामिषम् । राजन्या

भरतश्रेष्ठ भोक्तुकामा वसुन्धराम् (भा० भीष्म० ६।७३)॥ **अवलुम्पन्ति=अपच्छिन्दन्ति आच्छिन्दन्ति ।** अवलुप्यमान इव दृष्टिपातैः (काद०)। **औपचारिकः प्रयोगः ।**

**—लोक्** (**लोकृ दर्शने**)। नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् (भर्तृ०)। वृतिं च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत् (गौ० ध० सूत्र-व्याख्यायां मिताक्षरायामुद्धृतः पाठः, मनौ ८।२३९ इत्यत्र तु...न विलोकयेदिति पाठः स्थितः)। **वृतिं कण्टकादिमयीं तथोच्छ्रितां कुर्याद्यथोद्ग्रीवोऽपि क्रमेलकस्तां नातिपश्येदित्युक्तं भवति । अवशब्दोऽधोवचनः साम्प्रतम् ।** सलिलेष्ववलोकयत इवात्मानं प्रतिष्ठानस्य (विक्रम० २)। **उच्चैः स्थितस्य प्रसन्नेषु वारिषु प्रतिबिम्बमात्मनो लभमानस्येत्यर्थः।** आत्मानमात्मन्यवलोकयन्तम् (कु० ३।५०)। धन्यास्म्यनुगृहीतास्मि देवैश्चाप्यवलोकिता। यत्...(मार्क० पु० १६।६५)॥ **अवलोकिता=अनुध्याता=अनुकूलमीक्षिता । अप्यत्र** ज्ञायन्ते पुत्रकृतका वृक्षाः। जानामि जानामि। अवलोकितपत्रका उल्लोकयितव्याः सम्प्रति संवृत्ताः (प्रतिमा ७)। **अवलोकितपत्रका अधोनिक्षिप्ताभ्यां दृग्भ्यां शक्यदर्शनानि पत्रकाणि किसलयानि येषां ते तथाभूताः। स्थानेऽवस्य प्रयोगः। स्थानेतरां चोल्लोकयितव्यशब्द उच्छब्दस्य । अहो एवमुपसर्गेष्ववहितः कविः ।** सुरपतिगुरुणावलोकिते (बृ० सं० ५।६२) । **अवलोकिते=प्रभाविते । अवलोकेषु** वारीणां सहस्राणि शतानि च (भा० आदि० २१८।१८)। **समाजग्मुरित्यनुषङ्गः।** दीर्घिकावलोकनगवाक्षगता (माल०)। **अधः स्थिता दीर्घिका यतो लोकयितुं शक्या स दीर्घिकावलोकनो गवाक्षस्तं गता तत्र स्थिता।** दिगवलोकनप्रासादः । **यत्र स्थितेन सर्वा दिशोऽवलोकयितुं शक्यन्ते स तथाभूतः।** प्रेषितस्ते यदा वीर हनूमानवलोककः (रा० ६।१०१।१३)। **अवलोककः=अन्वेषकः=स्पशः=चरः ।**

**—लोच्** (**लोचृ दर्शने**)। **अवलोचनमिति** कामवासनाया अभाव इति कोषः।

**—वद्** (**वद व्यक्तायां वाचि**)। मा श्रियोऽववादिष्मेति दुरववदं हि श्रेयसः (ऐ० ब्रा० ५।२२)। निन्दया **मा हिंसिष्म, माऽवक्रुक्षामेति वाऽऽह। अववाद**स्तु निर्देशो निदेशः शासनं च तत् (अमरः)। कार्यमवलम्ब्य वादो वदनं कथन**मववादः ।** किं मह्यभाक्तेति। एतमेव निष्ठावमववदितारमित्यब्रुवन् (ऐ० ब्रा० ५।१४)। **अववदिता=अवच्छिद्य वदितुं समर्थः** (सायण)। **अववदिता शिक्षकः। अवः सान्त्वन इति षड्गुरुशिष्यः।**

—वा (वा गतिगन्धनयोः)। न्यग् वातोऽववाति (ऋ० १०।६०।११)। अववाति नीचैर्वाति। न्यक्छब्दसमभिव्याहारादवोऽनर्थकः।

—वी (गतिव्याप्तिप्रजनकान्त्यसनखादनेषु)। अववेति सुक्षयं सुते मधु (ऋ० १०।२३।४)। अववेति=अन्वेषते।

—वृष् (वृषु सेचने)। यस्याग्निहोत्रं स्रुच्युन्नीतमुपरिष्टादववर्षेत् (श० ब्रा० १२।४।२।१०)। अग्निहोत्रमिति द्वितीयान्तम्। यस्याग्निहोत्रमववर्षेत् (आप० श्रौ० ९।१।२।४०)। होमार्थद्रव्यस्योपरिवर्षबिन्दुर्निपतेदित्युभयत्र साधारणोऽर्थः।

—व्यध् (व्यध ताडने)। अवाजुष्टान् विध्यति कर्ते अव्रतान् (ऋ० ९।७३।८)। अवविध्यति=अधः क्षिपति। अवविद्धं तौग्र्यमप्स्वन्तः (ऋ० १।१८२।६)। अवविद्धम्=अवहितम्=निपातितम्=अधः क्षिप्तम्।

—शद् (शद्लृ शातने)। अग्नेर्व्यवशादमन्वसुरा व्यवशेदुः (श० ब्रा० २।१।२१६)। व्यवशेदुः=विशशरुः=विशीर्णा अभूवन्।

—शस् (शसु हिंसायाम्)। अवशसा निःशसा यत्पराशसोपारिम जाग्रतो यत्स्वपन्तः (अथर्व० ६।४५।२)। अवशसा अवस्ताद् हिंसनेन। अवपूर्वाच्छसेः क्विप्।

—शिष् (शिष्लृ विशेषणे, शिष असर्वोपयोगे)। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते (बृ० उ० ५।१।१)। कियदवशिष्टं रजन्याः (शा० ४)। उर्वरितमित्यर्थः।

—शुष् (शुष शोषणे)। अद्यापि नावशुष्यन्ति प्रदेशे रघुनन्दन (कृताभिषेकैर्न्यस्ता वल्कलाः) (रा० ३।७४।२७)। अल्पमपि न शुष्का इत्यर्थः।

—श्यै (श्यैङ् गतौ)। नावश्यायः पपातोर्व्याम् (भा० आदि० १७३।४०)। अवश्यायस्तुषारबिन्दवः। अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् (उत्तर० ६।२०)।

—श्रन्थ् (श्रन्थ विमोचनप्रतिहर्षयोः)। उदुत्तमं वरुण पाशमस्मदवाऽधमं वि मध्यमं श्रथाय (अथर्व० १।८।४।६६)। अवश्रथाय=अवश्रथान=अवस्तान्मोचय।

—सञ्ज् (षञ्ज सङ्गे)। त्रिवृद् दर्भमयं पवित्रं कृत्वा वसूनां पवित्रमसीति शाखायां शिथिलमवसजति मूले मूलान्यग्रेऽग्राणि (आप० श्रौ० १।२।६।८)। अवसजति=ईषल्लग्नं करोति। अवः सङ्गस्यापूर्णतामाह, सा च शिथिलमित्यनेन क्रियाविशेषणेन प्रागेवोक्तेति नार्थोऽवेन। अवसक्तः पितुस्तेऽद्य मृतः स्कन्धे भुजङ्गमः (भा० आदि० ४१।३)। स्कन्धेऽवसक्तः=स्कन्धे

**अवसन्नेषूपरतेषु** । काश्यपस्तमथावोचदवसन्नोऽसि खेचर (बृ० श्लो० सं० ३।१२३) । **अवसन्नोऽधरीभूतः=पराजितः** । अपन्नदन्नवसन्नवृथामांसानि (गौ० ध० २।८।३१) । **अवसन्नो व्याधितः** । आचारेणावसन्नोपि पुनर्लेखयते यदि (याज्ञ० २।७ मिताक्षरायामुद्धृतं कात्यायनवचनम्) । **अवसन्नो हीनः** । निर्ऋत्यै त्वा इत्यवसन्नां संशीर्णां वा (आप० श्रौ० १०।६।१८।१०) । **अवसन्ना (गौः) या न शक्नोत्युत्थातुम्** ।

**—सिच् (षिच क्षरणे)** । को हि क्षते क्षारमिवावसिञ्चेत् (अवदा० जा० २६, २६) । **अवसिञ्चेत्=उपरि पातयेत्** । मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलिभिराप्लावयति (कौ० सू० ३२।३,४) । अवसिञ्चति वा । दूरादावसथान्मूत्रं दूरात्पादावसेचनम् (मनु० ४।१५१) । **पादावसेचनम्=पादप्रक्षालन जलशेषः** । प्रदीपैः काञ्चनैस्तत्र गन्धतैलावसेचितैः (भा० भीष्म० ९७।३१) । **अवसेचितैः=कृतावसेकैः । अवसेको नाम तैलस्य प्रदीपेन्तरासेचनम्** ।

**—सृज् (सृज विसर्गे)** । अव राजन्पशुतृपं न तायुं सृजा (ऋ० ७।८६।५) । **अवसृज=मुञ्च** । प्रथमोत्पादितं मेध्यमश्वमवासृजः (भा०वन०१२।१८) । **विसृष्टवानसि, अमुञ्च इत्यर्थः** । वृत्रस्य स ततः क्रुद्धो घोरं वज्रमवासृजत् (भा०) । **अवासृजत्=प्राक्षिपत्=प्राहरत्** । पत्न्या चानुगतो दुःखी वने प्राणानवासृजत् (हरि० १।१४।५) । **अवासृजत्=पर्यत्यजत्=अजहात्** । य आस्यन्ये अवासृजन् (अथर्व० ४।६।७) । **अवासृजन्=समीपस्थाः प्राक्षिपन्** । तासु वीर्यमवासृजत् (हरि० १।१।२७) । **रेतोऽसिञ्चदित्याह** । अथैनं कामेष्ववसृजेत् (चरक० सूत्र० १५।१७) । **निर्यन्त्रणं कुर्यादित्यर्थः** । तान्पण्डितो नावसृजेत् परेषु (भा० सभा० ६६।७) । **ताननतिवादान् परेषु परान्प्रति नावसृजेन्न मुञ्चेन्न मुखान्निःसारयेदित्यर्थः** । तान्पण्डितो नावसृजेत्परेभ्यः (भा० उ० ३४।८०) । प्रमादादरण्ये पशूनुत्सृष्टान्दृष्ट्वा ग्राममानीय स्वामिभ्योऽवसृजेत् (आप० ध० २।२८।८) । **अवसृजेत्=अर्पयेत्** । सूर्याया वहतुः प्रागात्सविता यमवासृजत् (ऋ० १०।८५।१३) । **अवासृजत् प्राजत् प्रासुवत्** । अवसृष्टा परापत शरव्ये ब्रह्मसंशिते (अथर्व० ३।१९।८) । **अवसृष्टा=धनुषो विनिर्मुक्ता** । यथेषुका परापतदवसृष्टाधि धन्वनः (अथर्व० १।३।९) । **उक्तोऽर्थः** । बृहस्पतिनावसृष्टां सर्वे देवा अधारयन् (अथर्व० १४।२।५३) ।

**—सृप् (सृप्लृ गतौ)** । असौ योऽवसर्पति नीलग्रीवो विलोहितः (वा० सं० १३।७) । **अवसर्पति=अवाचीनं सर्पति सरति** । तदप्येतद् उत्तरस्य गिरेर्मनोरवसर्पणम् (श० ब्रा० १।८।१।६) । **अवसर्पणमवरोहणम्** ।

**—सो (षो अन्तकर्मणि)**। अव स्य हरी वि मुचा सखाया (ऋ०६।४०।१)।

अवस्य । अवोपसृष्टस्य अवस्यतेर्लोण्मध्यमैकवचने रूपम् । सखायौ हरी वाजिनौ विषितौ कुर्वित्याह । स्यतिरुपसृष्टो विमोचने (नि० १।१७) । अवस्यति हैतद्यद् गार्हपत्यं चिनोति । ... य उ वैके चाग्निचितोऽस्यामेव तेऽवसिताः (श० ब्रा० ७।१।१।१) । अवस्यति=स्वस्यावस्थितिं करोति । स्वकृत इरिणे नावस्येत् (आप० श्रौ० ५।७।२५।६) । नावस्येत्=न तिष्ठेत् । इरिणेऽतृणे । अगदः सोमेन पशुनेष्ट्येष्ट्वाऽवस्येत् (आश्व० गृ० ४।१।४) । अवस्येत् गृहं प्रविश्य वसेदिति हरदत्तः । यानि वा इमानि पृथिव्याश्चित्राणि तानि नक्षत्राणि तस्मादश्लीलनामानि चित्रे नावस्येन्न यजेत (तै० ब्रा० १।५।२।६) । अवस्येत् निवसेदिति सायणः । आद्यन्तयोः पृथगवस्यसि मध्यतश्च (भा०पु० ७।९।३०) । अवस्यसि=स्थितो भवसि । कारणत्वेनावधित्वेन च विरामं करोषीति श्रीधरः । प्रतिष्ठा वा एतस्य एष्टव्या यः कृषिमवस्यति (काठक० १७।१२) । शक्तिर्ममावस्यति हीनयुद्धे (कि० १६।१७) । अवस्यति=समाप्तिमेति, क्षीयते । वाणीं काणभुजीमजीगणदवासासीच्च वैयासिकीम् (मल्लिनाथः संजीवन्या उपक्रमे) । अवासासीत्=निरचिनोत्, निश्चितमजानात् । अवसेयाश्च कार्याणि धर्मेण पुरवासिनाम् (भट्टि० १९।१२) । अवसेयाः=जानीयाः । आशिषि लिङि प्रयोगः । देवयजन एवैनं तदवसाययति (ऐ० ब्रा० ३।२) । उपवेशयतीत्यर्थः । अवसानं जोपयेत् (आश्व० गृ० २।७।२, गो० गृ० ४।७।२) । अवसानं वास्तु । यमो ददात्यवसानमस्मै (ऋ० १०।१४।९) । अवसानमावासः । दहनस्थानमिति सायणः । ददाम्यस्मा अवसानमेतत् (अथर्व० १८।२।३७) । अवस्यन्ति निवसन्त्यत्रेत्यवसानमावासस्थानम् । अवसानं भवत्वत्र (भा० उ० ३१।१६) । अवसानं वसतिस्थानम् । दोहावसाने पुनरेव दोग्ध्रीम् (रघु० २।२३) । दोहस्यान्ते दोहकर्मणि परिणते सति । तच्छिष्याध्ययननिवेदितावसानाम् (रघु० १। २ अवसानं विरामः, अन्तः । अवसानेऽङ्गराजस्य योद्धव्यं भवता किल (वेणी० ५।३९) । अवसानं निधनम् । इदमुच्छ्रेयोऽवसानमागाम् (अथर्व० १९।१४।१) । अवस्यति पर्याप्तं भवति प्रयाणमत्र स्थाने इत्यवसानम् । विमुच्या वयोऽवसायाश्वान् (ऋ० १।१०४।१) । अवसाय=वियोज्य । स्यतिरुपसृष्टो विमोचने (नि० १।१७) । अवसितं हसितं प्रसितम् (भट्टि० १०।६) । अवसितम्= समाप्तम्=अपगतम् । अवसितो दर्शनार्थः (माल० २) । उक्तोऽर्थः । नवावसिते वैनमाहरेयुः (श० ब्रा० २।३।२।८) । नवे गृह इत्याह । शरवर्षैरवसायमाश्रयाशः (शिशु० २०।७२) । अवसायः=अन्तः=नाशः । अवसायो भविष्यामि दुःखस्यास्य कदा न्वहम् (भट्टि० ६।८१) । अवसायः=समापकः । अत्रा युक्तोऽवसातारमिच्छात् (ऋ० १०।२७।६) । अवसातारम्=विमोक्तारम्

अवसेन वा अध्वानं यन्ति (श० ब्रा० २।६।२।१७) **अवसः पाथेयं पथ्यदनम् । अन्तावसायी श्वपचे मुनिभेदे च नापिते** (मेदिनी) । **अत्रावपूर्वस्य स्यतेर्निवासोऽर्थं इति प्रव्यक्तम् ।**

**—स्कन्द् (स्कन्दिर् गतिशोषणयोः)** । पुरीमवस्कन्द लुनीहि नन्दनम् (शिशु० १।५१) । **अवस्कन्द=आक्राम** । स नद्यवस्कन्दमुपास्पृशच्च (भट्टि० २।११) । **नदीं नदीमवस्कद्यावतीर्येत्याह** । अवस्कन्दं करिष्यामि शिबिरेऽस्याद्य दुष्करम् (भा० सौप्तिक० ३।२७) । **अवस्कन्दः=आक्रमणम् । न नाम** प्रतिबन्धेन न चावस्कन्दकर्मणा । शक्य एष गिरिस्तात देवैरप्यवमर्दितुम् (हरि० २।४२।४५) । **अवस्कन्देन=उपर्युत्प्लवनेन** ।

**—कृ (कृ विक्षेपे, स्कृ=कृ+सुट्)** । रोधांसि धीरमवचस्करिरे महोक्षाः (शिशु० ५।६३) । **अवचस्करिरे=आलिलिखुः । काशिकायां त्वत्रार्थेऽपोपसर्गः प्रयुक्तः—अपस्किरते वृषभो हृष्टः** । गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् (नारदः) । **अवस्करोऽन्नमलम् । अवकरेऽर्थेऽप्यस्य प्रयोगो दृश्यते ।**

**—स्तम्भ् (स्तम्भू रोधने, धारणे वा सौत्रो धातुः)**। अघानि हिम्मको योधैरवाष्टम्भि यशोधरः (राज० ६।२५०) । **अवाष्टम्भि=अग्राहि । अवष्टब्धो धृत इत्यर्थः** । अवष्टब्धा सेना (पा० ८।३।६८ सूत्रे काशिकायाम्) । **समीपस्थेत्यर्थः** । अवष्टब्धा गौः । **निरुद्धा सती समीपस्थेति तत्त्वबोधिनी** । पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी (रा० ५।५६।२३) । **मया दृष्टेति हनूमद्वचः । अवष्टब्धा=निरुद्धगमना** । शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् । अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् (याज्ञ० २।३ इत्यत्र मिताक्षरायामुद्धृत नारदवचनम्) । **अवष्टब्धस्य प्रतिबद्धस्य** । अवष्टब्धधनुं रामं क्रुद्धं तं रिपुघातिनम् (रा० ३।२५।१) । **अवष्टब्धधनुम्=गृहीतधनुषम् । अवलम्बितकार्मुकम्=धृतकोदण्डम्** । अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः (रा० २।४।१८) । **आक्रान्तमित्याह** । प्रकृतिं स्वामवष्टभ्य (गीता० ६।८) । **स्वामविष्ठायेति पाठान्तरम्** । वृद्धो भार्यामवष्टभ्य (रा०            )। **आधृत्य । तस्याः कृत इति तात्पर्यार्थः** । कोसलनृपतेर्द्वारमवष्टभ्य (रत्ना० ४) । **रुद्ध्वेत्यर्थः** । अवष्टभ्यासौ माम् (महावीर० ५।५) । **परिष्वज्य, उपगुह्य** । क्रोडविभागेन मामवष्टभ्य (काद०) । **उक्तोऽर्थः** । तिमिरेणावष्टभ्यमाने जीवलोके (काद०)। **अवगुण्ठ्यमाने, आच्छाद्यमान इत्यर्थः** । अवष्टभ्यमान इव जलधरैः (का०) । **उपरुध्यमानः, पुरः सरणाद् वार्यमाणः** । अथ शोकं समुत्सृज्य······स्वावष्टम्भेन (कथा० ६।२२)। **स्वावष्टम्भेन=आत्मावलम्बनेन** । प्रसन्नवदनो हृष्टः······ सावष्टम्भो नरः शुचिः (पञ्चत० १। २१५)। **अवष्टम्भोऽध्यवसायः, निर्भीकं शक्तिश्रद्धानं वा** । तत्कथमहं धैर्यावष्टम्भं

करोमि (पञ्चत० १)। **धैर्यस्यावलम्बनम् आश्रयणम्।** खड्गलतावष्टम्भनिश्चलः (मालती० ३)। **अवष्टम्भोऽवलम्ब आश्रयः।** मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः (भा०पु० ५।१६।११)। **उक्तोऽर्थः। सावष्टम्भम्=सगर्वम्।** सावष्टम्भाकृतिना (काद०)। **सावष्टम्भा ओजस्विन्याकृतिर्यस्य तेन।** ईदृशोऽस्यावष्टम्भः (रत्ना० ४)। **अध्यवसायः, निश्चयः।** पलायनमवष्टम्भो वा (पञ्चत० ४)। **स्थिरीभूय विरोध इत्यर्थः।** रघोरवष्टम्भमयेन पत्त्रिणा (रघु० ३।५३)। **स्तम्भरूपेणेति मल्लिनाथः। अवष्टम्भः स्वर्णम्, तन्मयेन तद्विकारेणेत्येवमपि शक्यं व्याख्यातुम्।**

—**स्तृ (स्तृञ् आच्छादने)।** शरासनज्यातलवारणध्वनिः······प्रकम्पयन्गामवतस्तरे दिशः (कि० १४।२६)। **अवतस्तरे=आच्छादयामास। व्यानश इत्यर्थः।** उरसि रसादवतस्तरे स्तनाभ्याम् (शिशु० ७।४७)। **अवतस्तरे=उपजुगुहे।** नभोऽवस्तीर्यते जृम्भकैः (उत्तर०)। **आच्छाद्यत इत्यर्थः। अवस्तारो जवनिका।** (पा० ३।३।१२० इत्यत्र काशिका)। आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणम् (आप० ध० २।३।६।१५)। **अवस्तरणमुपरिपटः।**

—**स्था (ष्ठा गतिनिवृत्तौ)।** मा रायो राजन्सुयमादवस्थाम् (ऋ० २।२७।११)। **माऽवस्थाम्=दूरे मा स्थाम्। वियुक्तो मा स्म भूवम् इत्यर्थः।** सोऽवतिष्ठति (श० ब्रा० ५।४।३।२२)। **अवरोहतीत्याह।** क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ (रघु० ८।८७)। **अवतिष्ठते=तिष्ठति, ध्रियते।** समुद्रमासामवतस्थे अग्रिमा (ऋ० ५।४४।६)। अयं यो भूरिमूलः समुद्रमवतिष्ठति (अथर्व० ६।४३।२)। **अवक्रम्य तिष्ठति। उभयत्रावपूर्वस्तिष्ठतिः सकर्मकः।** मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता (कु० २।२८)। **अवस्थिता=स्थिता। लम्बत आयत्तेति तात्पर्यार्थः।** ते कपिं तं समासाद्य तोरणस्थमवस्थितम् (रा० ५।४३।२७)। **अवस्थितं सज्जम्, जागरूकम्।** अवस्थितमसम्भ्रान्तं (माम्) (रा० ५।५८।३६)। **अवस्थितो निश्चेष्टः।** विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव (शा०५)। **अवस्थितम्=व्यवस्थितम्=निर्णीतम्।** नारीर्हत्वाऽनवस्थिताः (मनु० ११।१३८)। **अनवस्थिताः—इत्वरीः, स्वैरिणीः, असंस्थुलाः।** आदित्यं वौशनसं वाऽवस्थाय प्रयोधयेत् (आश्व०गृ० ३।१२।१६)। ततो निर्याय कौरव्य अवस्थाप्य च तद्बलम् (भा० वन० १६।२६)। **अवस्थाप्य=सान्त्वयित्वा, समाहितं कृत्वा।** द्वैराज्यमवस्थापयितुकामोऽस्मि (माल० ५)। **प्रतिष्ठापयितुमना इत्याह।** न शक्नोमि हृदयमवस्थापयितुम् (उत्तर० ४)। **अवस्थापयितुम्=स्थिरीकर्तुम्।**

—स्मि (ष्मिङ् ईषद्धसने)। अव स्मयन्त विद्युतः पृथिव्याम् (ऋ० १। १६८।८)। अवाङ्मुखं प्रकाशन्त इत्याह।

—स्यन्द् (स्यन्दू स्रवणे)। नट अवस्यन्दने इति धातुपाठः। अवस्यन्दनं नाट्यम्।

—स्रंस् (स्रंसु अवस्रंसने)। लवि अवस्रंसन इति धातुपाठः। अवशब्दोऽधोवचनो यथान्यत्र—अवलम्बन्ते तरुशाखासु वल्कलानि यतीनाम्। परिस्खलितगतिरवस्रस्तवासाः समायातः (तन्त्रा० १।३)। श्लथीभूतपतितवसन इत्यर्थः। असावस्रसिनः शापशासनपट्टस्य (हर्ष० १)। अंसस्याधः पतत इत्यर्थः।

—स्वप् (ञिष्वप् शये)। अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् (रा० २।५६।१)। अवसुप्तमीषत् सुप्तम् इति तिलककारो रामः। तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे (रा० ३।५०।१)। उक्तोऽर्थः। स्थानेऽवशब्दप्रयोगो वश्यवाचः कवेः। ईषत्सुप्त एव शब्दं शृणुयान्न प्रसुप्तः सुषुप्तो वा। इयं पद्मावत्यवसुप्ता (स्वप्न० ५)। अत्रास्थानेऽवः। न ह्यत्र स्वापस्याल्पताऽभिप्रेता। लेखकप्रमादो वाऽयं स्यात्। अचकितमवसुप्तं पाण्डवानामनीकम्। निशि सुनिशितशस्त्रो द्रोणसूनुर्जघान (का० नी० सा० १६।७१)॥ अत्रावः सुतमामनिष्टः, अर्थं हि विपर्यासयति। गाढं सुप्तानामेव पाण्डवानां वधः शक्यो द्रौणिना न त्ववसुप्तानामीषत्सुप्तानाम्। मन्ये कामन्दकोऽत्रानर्थकमवं प्रयुङ्क्ते स्वापमात्रं च विवक्षते।

—स्वृ (स्वृ शब्दोपतापयोः)। अव स्वराति गर्गरः (अथर्व० २०।६२। ६)। मन्दं शब्दायत इत्यर्थः।

—हन (हन हिंसागत्योः)। व्रीहीनवहन्ति। उलूखले मुसलेनावताड्य तुषं विविनक्ति। अवासां जहि शर्धो यातुमतीनाम् (ऋ० १।१३३।३)। अवजहि=चूर्णय। अवैनान् दुन्दुभे जहि (अथर्व० ५।२०।१)। संचूर्णय, संपिण्डढि। अव ब्रह्मद्विषो जहि (अथर्व० २०।६३।१)। उद्यंस्त्वं देव सूर्य सपत्नानव मे जहि (अथर्व० १३।१।३२)। उक्तोऽर्थः। अत्रोदाहरणेषु सर्वत्रावोऽयमुपसर्गः साकल्यमाह क्रियाया नासाकल्यं यथाऽन्यत्र। इदमवश्यमभ्युपेयम्। व्यवहारोऽत्र मानम्। कर्णविघातनिपुणेन च ताड्यमाना दूरीकृताः करिवरेण (तरङ्गभङ्गाः) (नी० प्र० २)। अवघातः=प्रहारः। अधरे दत्तदन्तावघाते (सा० द०)। उक्तोऽर्थः। अवघातो व्रीहीणाम्। अवघातः कण्डनम्। अवहननम्=कण्डनम्। अवहननायोलूखलम्। (पा० २।१।३६।वृत्तौ)। अवहननमिति फुप्फुसस्यापि समाख्या भवति तथा च याज्ञवल्क्ये प्रयोगः —वपा वसाऽवहननम् (३।६४)। वज्रेणावहतः शयाम् (=शेताम्) (अथर्व० ६।१३४।२)। अवः साकल्ये।

—हस् (हसे हसने)। यच्चावहासार्थमसत्कृतोसि (गीता० ११।४३)। अवहासः=प्रहासः परिहासः। अवहासं ततो मुक्त्वा रावणो वाक्यमब्रवीत् (रा० ७।१८।८)। अवहासः सनिन्द उपहासः। कथं नु सर्वलोकस्य नावहास्या भवेमहि (भा० द्रोण० ७५।३)। अवहास्याः=उपहासयोग्याः। अन्तर्लीनमवहस्य। इहावहासः स्मितपर्यायः। सार्थकोऽवशब्दः। तत्रावहसितश्चासीत् प्रस्कन्दन्निव संभ्रमात् (भा० आदि० १।१३६)। अवहसितोऽनादरेणोपहसितः। अवशब्दोधोऽर्थे।

—हा (ओहाक् त्यागे)। परायद्भ्योऽवहीये सखिभ्यः (ऋ० १०।३४।५)। अवहीये=पृष्ठतस्त्यज्ये। अस्मास्ववहीनेषु (शा०)। उक्तोर्थः। अवहीनाः कथाः (दशकु०)। अवहीनाः=अवसिताः=विरताः।

—हृ (हृञ् हरणे)। समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर (भा०वि० ४०। २)। अवहर=अवतारय। अवोऽधोऽर्थे। स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् (भा०द्रोण० १६।५१)। अवहारयत्=अवाहारयत्=प्रतिसमहरत्। रतिं चावहरेत्समम् (यो० वा० ५।२४।४४)। अवहरेत्=परिहरेत्। अवहरत्यग्नेऽभ्यावर्तिन्निति (का० श्रौ० १६।५।१५)। अवहरति=आत्मसमीपं प्रापयति। श्याद्व्यधेति (३।१।१४१) सूत्रेण णप्रत्ययेऽवहारशब्दः कर्तरि साधितः। अवहरति नीचैरप्सु कर्षतीत्यवहारो ग्राहः। अवहारश्चौर इत्याभिधानिकाः। प्रयोगस्तु नयनयोरयनं न यातः। सम्भवत्यवहरति पचति (पा० ५।१।५२) सूत्रे प्रस्थमवहरति स्थाली प्रास्थिकीत्युदाहरणं काशिकायाम्। उपसंहरणमवहार इति च तत्रैव। आधाराद्आधेयप्रमाणस्य न्यूनताऽवहार इति पदमञ्जर्यां हरदत्तः। क्रियतामवहारोऽस्माद् युद्धाद् ब्राह्मणसंवृतात् (भा० आदि० १६०।३५)। अवहारः कञ्चित्कालं युद्धविरामः। एवं राजन्नवहारो बभूव (भा० उ० १८२।३०)। ततोऽवहारः सैन्यानां तव तेषां च भारत (भा०भीष्म० ४८।१२०)। शिबिरं प्रति संहार इहावहार उक्तः। अर्भकमवहृतं भवति (नि० ३।२०)। अवहृतमूनपरिमाणम् इति स्कन्दस्वामी। उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति (का० श्रौ० ३।२।२४)। अवहृत्य=अवतार्य। आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः। अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ (मनु० ८।१४५)॥ अवहार्यौ=प्रत्यर्पणीयौ। अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम् (मनु० ८।१६८)। अवहार्यः=दण्ड्यः, षट्शतं दमं दाप्य इत्यर्थः। युद्धावहारिकं यच्च पितुः स्यात्स हरेत्तु तत् (भा० अनु० ४७।४६)। युद्धेऽवह्रियतेऽपह्रियते जयेन प्राप्यते रथगजायुधकवचादिकं तद् युद्धावहारिकम् प्रधनधनम्। धर्म्यं शुल्कमवहारयेत् (अधिकृतैः) (आप० ध०

२।१०।२६।६) । ग्राहयेदित्यर्थः । कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् । यथोक्तमवहार्यन्ते शुल्कं शुल्कोपजीविभिः (भा० सभा० ५।११४) ॥ **अवहार्यन्ते =दाप्यन्ते ।**

### अवाङ् (अव+आङ्)

**—कॄ (कॄ विक्षेपे)** । कदा राघवौ लाजैरवाकरिष्यन्ति (रा० २।४३।१३) । **आकीर्णाववस्तीर्णौ करिष्यन्ति लोकाः** । तेन मामभितः स्थित्वा शरवर्षैरवाकिर (भा० द्रोण० १३१।२३) । **उक्तोऽर्थः ।**

**—चि (चिञ् चयने)** । अवाचिनोति कर्माणि न च सप्रचिनोति च (भा० शां० १६०।२७) । **अवाचिनोति भोगेनापकर्षति । न्यूनतामापादयति ।**

### अवनि

**—ष्ठिव् (ष्ठिवु निरसने)** । अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः (मनु० ८।२८२) । **अवमानार्थं निष्ठीवत इत्यर्थः ।**

## निस् (निर्)

**—अज् (अज गतिक्षेपणयोः)** । निर्वो गोष्ठादजामसि (अथर्व० २।१४।२)। **निरजामसि=निरजामः=निःसारयामः=प्रकालयामः ।**

**—अय् (अय गतौ)** । यो भियातो निलयते (अथर्व० ११।२।१३) । **निलयते=निरयते** । (निसः प्रयोगश्चेत्) । **निष्क्रामति, अपयातीत्यर्थः** । स निलायत सोऽपः प्राविशत् (तै० सं० २।६।६।१) । **निलायत=अन्तरधात् । यो निलायं चरति यः प्रतङ्कम्** । (अथर्व० ४।१६।२) । असित ते निलयनमास्थानमसितं तव (तै० ब्रा० २।४।४।१) । **निलयनं रक्षास्थानम्, शरणम् ।**

**—अस् (असु क्षेपे)** । स होतृषदनादेकं तृणं निरस्यति (श० ब्रा० १।५।१।२३) । **निरस्यति=बहिष्प्रक्षिपति** । यशांसि सर्वेषुभृतां निरास्थत् (भट्टि० १।३)। **निरास्थत्=प्रामार्जीत् । मलिनान्युपरक्तानीवाकरोदित्यर्थः** । युवयोर्हि कृते वृद्धः स कंसेन निरस्यते (वि० पु० ५।१९।१३) । **निरस्यते=अवहेल्यते =अवज्ञायते** । सर्व ऊष्माण अग्रस्तानिरस्ता विवृता वक्तव्याः (छां० उ० २।२२।५) । **अनिरस्ताः=त्वरयानुच्चारिताः । निरस्तं त्वरितोदितमित्यमरः ।** अह्नाय तावदरुणेन तमो निरस्तम् (रघु० ५।७०) । **निरस्तम्=अपाकृतम्, अपनीतम्, अपगमितम्** । कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः (रघु० १४।८४) । **निरस्ता=बहिष्कृता=निर्वासिता** । निरस्तपादपे देशे एरण्डोपि द्रुमायते (हितोप० १।६७) । **निरस्ता नष्टाः पादपा यत्र स निरस्तपादपो देशः तस्मिन् । इह निरासोऽसंनिधानमाह लक्षणया । त्वं पुण्डरीक-**

मुख बन्धुतया निरस्तमेको निवापसलिलं पिबसीत्ययुक्तम् (मालती० ९।४०)। निरस्तं निक्षिप्तम्। निरस्तः प्रहिते बाण इत्यमरः। निरस्तः प्रहितमाह बाणे विषये। यदा यः प्रहितः स बाणो भवति तदा निरस्तशब्दः प्रहितार्थक इति कोषकृद्धृदयम्। न तु निरस्तः पुंसि प्रहितबाणमाहेति तद्विवक्षितम्। त्रिषूत्तरे इत्युपक्रम्य प्रकृतः पाठः। वाच्यलिङ्गका निरस्तदिग्धलिप्तका भवन्तीति तदर्थः। कश्चिद् बाणविशेषस्य संज्ञा इमा इति मन्यमानो भ्रान्तः।

—इ (इण् गतौ)। निर्यत् पूतेव स्वधितिः शुचिर्गात् (ऋ० ७।३।९)। निरगात्=निरक्रमीत्। चिरप्रविष्टो निरगान्नैव सोन्तःपुरान्नृपः। निरगादरिवर्गस्य हृदयात्तु रुजाज्वरः (कथा० १८।८३)॥ उक्तोऽर्थः। तीक्ष्णाञ्जनेनाञ्जितलोचनस्य यः सम्प्रदुष्टो न निरेति नेत्रात्। श्लेष्मा··· (चरक० सूत्र० ५।१७-२१ इत्यस्य चक्रदत्तव्याख्यायाम्)। स्पष्टोऽर्थः। निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्। स एव निरयं प्राप्तो मत्स्यस्य परिचारकः (भा० वि० १८।२५)। निरयं पारतन्त्र्यम् इति नीलकण्ठः। दुःखमिति तु साधीयः स्यात्। दुर्लभो ह्यस्य निरयः शशाङ्कस्येव कल्मषम् (रा० २।३६।२७)। निरयः पापम्।

—ईक्ष् (ईक्ष दर्शने)। यावदेतान्निरीक्षेहं योद्धुकामानवस्थितान् (गीता० १।२२)। निः शब्दः साकल्ये। सर्वत ईक्ष इत्यर्थः। निरीक्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव (विक्रमाङ्क० १।२९)। न चोदके निरीक्षेत स्वं रूपमिति धारणा (मनु० ४।३८)। स्वशरीरच्छायां नावलोकयेदित्यर्थः। इह निरः कश्चिदर्थविशेषो नास्ति। निरीक्षमाणस्तां ददर्श (रा० २।७४।१५)। निरीक्षमाणः=इतस्ततो विचिन्वानः। निरीक्ष्य दिशः सर्वाः (रा० ३।५६।५)। सर्वतो विलोक्येत्यर्थः।

—ईह् (ईह चेष्टायाम्)। निरीहस्य हतद्विषः (रघु० १०।२४)। निरीहस्य=निश्चेष्टस्य।

—उक्ष् (उक्ष सेचने)। किं स्रुच्यप आनीय निरौक्षीः (श० ब्रा० ११।५।३।४)। निःशेषमसिच इत्यर्थः। तां दिश निरुक्षति यस्यामस्य द्वेष्यो भवति (बौ० ध० २।५।८।५)। निरुक्षति=अभ्युक्षति।

—उब्ज् (उब्ज आर्जवे)। अहन्वृत्र निरपामौब्जदर्णवम् (ऋ० १।८५।९)। निरौब्जत्=प्रावाहयत्।

—ऊह् (ऊह वितर्के)। आरादग्निं क्रव्यादं निरौहम् (अथर्व० ८।२।९)। निरूहामि=निर्गमयामि। गार्हपत्यादुदीचोऽङ्गारान्निरूहति (भा० श्रौ० ६।१०।५)। निरूहति उद्धरति। प्राणानस्य निरौहीत् क्षिप्रेऽमुं लोकमेष्यतीति

(श० ब्रा० १०।५।५।६)। **निरौहीत् निरक्रमयत्** । निरूहै त गर्भम् (श० ब्रा० ४।५।२।३)। **उक्तोऽर्थः** । गार्हपत्यादुष्णं भस्म निरुह्य (श० ब्रा० १२। ४।२।२)। **निरुह्य=निष्कास्य एकतो राशीकृत्येत्यर्थः** । निरूढपशुबन्धः (शां० श्रौ० ६।१।३३)। **निरूढः=दत्तविरेचनः** । निरूहैः सानुवासनैः (चरक० सूत्र० १६।२२)।

—**ऋ (ऋ गतिप्रापणयोः)** । इयं वै (पृथिवी) निर्ऋतिरिय वैतं निरर्पयति यो निर्ऋच्छति (श० ब्रा० ७।२। २।२।११)। **निर्ऋच्छति पापमाचरति । निरर्पयति नीचैर्गमयति । विनाशयतीत्यर्थः** । मा ते गोदत्र निरराम राधसः (ऋ० ८।२१।१६)। **निरराम=निर्गता मा भूमेत्याह । स्वे राधसि न आभजेति तात्पर्यार्थः** । मा वो दात्रान्मरुतो निरराम (ऋ० ७।५६।२१)। **उक्तोऽर्थः** । देवान्त्सब्राह्मणानृत्वा जिह्मो लोकान्निर्ऋच्छति (अथर्व० १२।४।५३)। **निर्ऋच्छति=निर्गच्छति । प्रच्यवत इत्यर्थः** ।

—**कस् (कस गतौ)** । पिशुनस्थमिव रहस्यं समन्ततो निष्कसति पुष्पम् (पद्म० श्लो० ४)। **निष्कसति उद्गच्छति** । निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका (शिशु० ६।१०)। **निरकासयत्=निरगमयत्, निरवासयत्** । प्रायणीयस्य निष्कास निदध्यात् (ऐ० ब्रा० २।५)। **स्थाल्यां लग्नः पुलाको निष्कासः** । स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या (याज्ञ० २।२९० इत्यत्र मिताक्षरायामुद्धृतं नारदवचनम्)। **निष्कासिनी स्वाम्यनवरुद्धा दासी** ।

—**कुष् (कुष निष्कर्षे)** । (तान्) गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः (भा० पु० ३।१६।१०)। **कुषन्ति=कुष्णन्ति=निष्कर्षन्ति (आन्त्राणि)** । उपान्तयोर्निष्कुषितं विहङ्गैः (रघु० ७।५०)। **निष्कुषितम्=खण्डितम्** ।

—**कृ (डुकृञ् करणे)**। यन्मे अक्ष्योरादिद्योत पार्ष्ण्योः प्रपदोश्च यत् आपस्तत्सर्वं निष्करन् (अथर्व०६।२४।२)। **निष्कुर्वन्तु निर्गतं कुर्वन्त्वित्याह** । यददो देवा असुरांस्त्वया निरकुर्वत (अथर्व० ४।१९।४)। **निरकुर्वत=निराकुर्वत=प्रत्यादिशन्** । यश्चकार स निष्करत् (अथर्व० २।९।५)। **ग्रहविकारस्य निष्कृतिं शमनं करोत्वित्याह** । अनार्त्तेनैव तदार्त्तं यज्ञस्य निष्करोति (श० ब्रा० १२। ४।२।१)। **निष्करोति=अपनयति । अपाकरोति** । यद् दण्डेन यदिष्वा यद्वारुर्हरसा कृतम् । तस्य त्वमसि निष्कृतिः सेमं निष्कृधि पूरुषम् (अथर्व० ५। ५।४)। **निष्कृधि=अगदं निर्गतरोगं कुरु** । यदामयति निष्कृथ (हे ओषधयः) (ऋ० १०।९७।९)। **उक्तोऽर्थः** । निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः

शवसा क्रन्त सूरयः (ऋ० १।१४१।३)। **निरक्रन्त=निरकुर्वन्=निरकारयन्=निरगमयन्।** निराह्रावान् कृणोतन (ऋ०१०।१०१।५)। **निराकृणोतन=कल्पयत=सज्जान्कुरुत।** ते मित्रावरुणावब्रुवन्युवभिदं निष्कुरुतम् (ऐ० ब्रा० ८।४)। **निष्कुरुतम्=संस्कुरुतम्।** निर्मिता (शक्ति.) निरकारि मे (भट्टि० १५।५४)। **निरकारि=अभेदि=व्यशारि।** निष्कृण्वाना आयुधानीव धृष्णवः (ऋ० १।९२।१)। **संस्कुर्वाणाः=शोधयन्तः—सज्जीकुर्वन्तः।** निष्कर्ता विह्रुतं पुनः (अथर्व० १४।२।४७)। **निष्कर्ता=समाधाता।** यूयमीशिध्वे वसवस्तस्य निष्कृतेः (अथर्व० ४।२७।६)। **निष्कृतेः=निष्करणस्य=परिहारस्य।** ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे। निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः (पञ्चत० ३।१५७)॥ **निष्कृतिः प्रायश्चित्तम्, तपसा कृच्छ्रचान्द्रायणादिभिर्व्रतैः पापापनोदनम्।** यं मातापितरौ क्लेशं सहेते संभवे नृणाम्। न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि (मनु० २।२२७)॥ **निष्कृतिः=आनृण्यम्।** तस्मा अर्चाम कृणवाम निष्कृतिम् (ऋ० १०।१६५।१)। स्त्रियास्तथापचारिण्या निष्कृतिः स्याददूषिका (भा० शां०३४।३०)। **निष्कृतिर्दासीवदन्नाच्छादनमात्रेण दूरे स्थापनम्, धिक्करणमिति यावत्।** भीमसेन त्वया कार्या तस्य (बालभवने) वासस्य निष्कृतिः (भा० वि० ३३।१३)। **निष्कृतिर्वेतनं भृतिर्निर्वेशः। उपकारप्रतिक्रियेत्यर्थः।** गर्भनिष्कृतिः (हर्ष०)। **परिनिष्ठितो विवृद्धो गर्भः।** पुनरुत्स्यूतं वासो देयं पुनर्निष्कृतो रथः (का० सं० ८।१५)। **निष्कृतः सम्यक् कल्पितः सज्जीकृतः।** निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः (मनु० ११।५३)। **अनिष्कृतैनसः=अकृतप्रायश्चित्ताः=प्रायश्चित्तेनापूतपाप्मानः।** एमीदेषां निष्कृतं जारिणीव (ऋ० १०।३४।५)। **निष्कृतं संकेतस्थानम्।** सोमो देवानामुपयाति निष्कृतम् (ऋ० ९।८६।७)। **निष्कृतं संस्कृतं स्थानमिति सायणः।**

**—कृत् (कृती छेदने)।** य उस्रिया अप्या अन्तरश्मनो निर्गा अकृन्तदोजसा (ऋ० ९।१०८।६)। **निरकृन्तत्=निरमोक्षयत्।** **तस्य** तं शल्यं निरकृन्तत् (श० ब्रा० १।७।४।४)। **निरकृन्तत्=उदहरत्।**

**—कृष् (कृष विलेखने)।** कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत् (भा० भीष्म० ५।१९)। **निष्कर्षयत्=निष्कर्षयति=उद्धरति=संहरति।** तममुत्र निरये वर्तमानं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति (भा० पु० ५।२७।२१)। **कर्षणेन विश्लेषयन्ति।** ततः सत्यवतः कायात्...अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् (भा० वन० २९७।१७)। **निश्चक्राम=उज्जहार।** वह्निं यथा दारुणि निष्कर्षन्ति गूढम् (भा० भीष्म० ४।२७)। **निष्कर्षन्ति=**

**निर्मथ्नन्ति।** निष्क्रष्टुमर्थं चकमे कुबेरात् (रघु० ५।२६)। **निष्क्रष्टुम्=आहर्तुमाच्छेत्तुम् आमष्टुं म्।** इषीकां च यथा मुञ्जात्कश्चिन्निष्कृष्य दर्शयेत्। (भा० आश्व० १९।२२)। **निष्कृष्य=उद्धृत्य। अयमत्र निष्कर्षः। सार इत्यर्थः।** एतद्विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम् (मनु० ४।१२५) **। अय्याः सारं प्रणवव्याहृत्यादिकम्।** अनुकर्षं च निष्कर्षं व्याधिपावकमूर्छनम् (भा० सभा० १३।१३)। **निष्कर्षं करार्थं प्रजापीडनम् इति नीलकण्ठः।** स्त्रीणां बुद्ध्यर्थनिष्कर्षादर्थशास्त्राणि शत्रुहन्। बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वा (भा० अनु० ३९।१०-११)। **निष्कर्षः सारः।** निष्कर्षान्निश्चयात् (भा०) **निष्कर्षः संक्षेपः।**

**—क्रम् (क्रमु पादविक्षेपे)।** स चक्रमे महतो निरुरुक्रमः समानस्मात् सदसः (ऋ० ५।८७।४) **। निश्चक्रमे=निर्जगाम।** निरेवान्यतरः क्रामति प्रान्यतरः पद्यते (श० ब्रा० ४।३।१।९)। **उभयोरेकतरो निर्याति, एकतरश्च प्राप्नोतीत्याह।**

**—क्री (डुक्रीञ् द्रव्यविनिमये)।** पशुमालभते सर्वाभ्य एव तद् देवताभ्यो यजमान आत्मानं निष्क्रीणीते (ऐ० ब्रा० २।३)। **निष्क्रीणीते=निर्वेशेन मूल्येन क्रीत्वाऽऽत्मानं निर्मुक्तबन्धं करोतीत्यर्थः।** अग्नेरेवास्य शरीरं निष्क्रीणामि सोमाद्रसम् (तै० सं० २।१।२।७)। ऋषेऽह ते शतं ददाम्यहमेषामेकेनात्मानं निष्क्रीणै (ऐ० ब्रा० ७।१५)। **उदितचर एवात्र सर्वत्र पदार्थः।** निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः (भा० आश्व० ८९।१०)। **निष्क्रयो मूल्यम्।** दक्षिणा चात्र देया वै निष्क्रयश्च सुवर्णकम् (भा० १८। ३०६)। ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् (रघु० १५।५५)। **निष्क्रयमात्ममोचकमूल्यम्।** सम्यक् सम्पादितो वत्स भवद्भ्यां गुरुनिष्क्रयः (भा० पु० १०।४५)। **गुरुनिष्क्रयो गुरुदक्षिणा। इह भागवतकारस्य निष्क्रयशब्दस्योच्चारणं कण्ठे नास्खलदिति चित्रम्। अथवा विदितोऽस्य रूढि प्रत्यनादर इति नातिचित्रम्।** असत्तुषाराद्रिसुतासम्भ्रमस्वयंग्रहाश्लेषसुखेन निष्क्रयम् (शिशु० १।५०)। **निष्क्रयो मूल्यं वेतनम्।** न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते (मनु० ९।४६)। **निष्क्रयो विक्रयः। विसर्गस्त्यागः।**

**—क्वथ् (क्वथे निष्पाके)।** सलिलद्रोणे निःक्वाथ्य (सुश्रुत० २।८०।१६)। **निःक्वाथ्य=निष्क्वाथ्य=निष्पच्य।**

**—क्षिप् (क्षिप प्रेरणे)।** मक्षिका व्रणजातस्य निः क्षिपन्ति यदा कृमीन् (सुश्रुत० २।१५।३)। **निक्षिपन्तीत्यर्थः। अस्थाने नेः स्थाने निसः प्रयोगः। सोऽयं बहुलः, किंकृत इति न सुवेदम्।** किं शेषे हा हतो भुवि। निःक्षिप्य दीर्घौ

निश्चेष्टौ (रा० ६।६३।१२)। निःक्षिप्तशस्त्रः पृथिवीं निरीक्ष्य पृथिवीपतिः (हरि० १।३०।२१)। **निःक्षिप्तशस्त्रः संन्यस्तायुधः।**

—**गम् (गम्लृ गतौ)**। अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् (मनु० ९।८३)। **स्पष्टोऽर्थः।** अर्शांसि निर्गतानि (सुश्रुत० २।४८।१)। **निर्गतानि= विगतानि।** स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा। विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागतः (भा० पु० १।१८।३०)॥ **विनिर्गच्छन् (आश्रमाद्) निष्पतन्, निश्चरन्, निष्क्रामन्। ततः प्रयानित्यर्थः।**

—**गल् (लौकिको धातुः स्यन्दनार्थकः)**। निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि (रघु० ५।१७)। **निर्गलितो निःशेषेण स्रुतोम्बुगर्भो यस्य तं तथाभूतम्।**

—**गुप् (गुपू रक्षणे)**। निर्जुगोप निशाचरान् (प्रहस्तः) (भट्टि० १४।१०६)। **कात्स्न्र्येन ररक्षेति भावः।**

—**गॄ (गॄ निगरणे)**। दासेरकः सपदि संवलितं निषादैर्विप्रं पुरा पतगराडिव निर्जगार (शिशु० ५।६६)। **निर्जगार उद्गीर्णवान् इत्यर्थः।** तं निर्जगार बलवान्मीनः (भा० पु० १०।५५।४)। **निगीर्णवान्, न्यगारीत्, न्यगालीत्। नेरर्थे निरः प्रयोगः। सोऽयं भागवतकारस्यैव शोभते।** कण्ठनिर्गीर्णशोणित— (रा० ३।३५।६२)।

—**ग्रह् (ग्रह उपादाने)**। विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः (उत्तर०)। **निः शेषं ग्राह्यो निर्ग्राह्यः।** रूपाश्रयेयं संज्ञा। रूपनिर्ग्रहश्च प्रयोग उपदेशे वा (पा० १।१।२२ सूत्रभाष्ये)। **निर्ग्रहः स्पष्टावभासः।**

—**चर् (चर गतिभक्षणयोः)**। परिजनाह्वानेष्वादिशेत्यशरीरा वाचो निश्चेरु (हर्ष० ४)। **निश्चेरुः=निर्जग्मुः।** वातोपि निश्चरस्तत्र प्रवेशे विनिवार्यते (भा० आदि० ४२।३२)। **निश्चरन्=वान्। पवमानः।** न च स्म किंचिच्छक्नोति भूतं निश्चरितु ततः (भा० आदि० ४२।३२)। **निश्चरितुम्=निष्क्रमितुम्=निरेतुम्, बहिर्गन्तुम्।** ततः सूर्यान्निश्चरितां कर्णः शुश्राव भारतीम्। (भा० उ० १४६।१)। **निश्चरिताम्=उद्गताम् =उच्चरिताम्।**

—**चल् (चल कम्पने)**। पादाग्रे दृशमवधाय निश्चलन्तीम् (मुद्रा० ५।१३)। **अनपक्रामन्तीम् इत्यर्थः।**

—**जि (जि जये, जि अभिभवे)**। श्रेयान्मृत्युर्न निर्जयः (भा० द्रोण० २००।२७)। **निर्जयः पराजयः।** स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत्

(मनु० ८।१५४)। **निर्जिताम्=स्वस्वत्वेनात्मसात्कृताम्।**

**—ज्ञा (ज्ञा अवबोधने)।** यत्र यत्र वै देवा यज्ञस्य च्छिद्रं निरजानंस्तद् धाय्याभिरपिदधुस्तद्धाय्यानां धाय्यात्वम् (ऐ० ब्रा० ३।१८)। **निरजानन्=अजानन्=अविदुः।** यद्धैतौ (सूर्याचन्द्रमसौ) नोदियातां न हैवेह स्वचन पाणी निर्जानीयुः (श० ब्रा० ४।२।१।२)। **निरिति न विशेषकृत्।**

**—डी (डीङ् विहायसा गतौ)।** निर्डीनं निश्चलं यानम् (भा० कर्ण० ४१।२७)।

**—तक्ष् (तक्ष त्वक्ष् तनूकरणे)।** निस्तक्ष्णुवन्त्येव शिताग्रशस्त्राः (अवदा० जा० २६।२५)। **निस्तक्ष्णुवन्ति निःशेषं तक्ष्णुवन्ति।**

**—तप् (तप सन्तापे)।** यथा हिरण्यं निष्टपेदेवमेनमग्निष्टुन्निष्टपति (पञ्च०ब्रा० १७।६।४)। **निष्टपेत्=निःशेषं तपेत्। निष्टप्तं रक्षो निष्टप्ता अरातयः** (वा० सं० १।७।५६)। **निःशेषं तप्ता इत्यर्थः।** निस्तपति स्वर्णं स्वर्णकारः। **पुनः पुनस्तपतीत्यर्थः। निसस्तपतावनासेवने (पा० ८।३।१०२) सूत्रे वृत्तावुदाहरणप्रत्युदाहरणे।** तं निष्टपन्तं तपसा घर्मम् ( )। **निष्टपन्तम्=अग्निना पुनानम्।**

**—तुद् (तुद व्यथने)।** सूचिभिरिव निस्तुद्यते (सुश्रुत० १।६१।१८)। **निस्तुद्यते=तोतुद्यते।**

**—तॄ (तॄ प्लवनतरणयोः)।** स निस्तरति दुर्गाणि स्वर्गलोकं च गच्छति (भा० वन० २००।३२)। **दुर्गाणि विषमाण्यतितरतीत्याह।** कथं च निस्तरेमास्मात्कृच्छ्रात् (भा० वन० २६३।४०)। **निर्गच्छेमेत्यर्थः।** निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः (भा० वन० १०६।२४)। **निस्तरेत्=यापयेत्=नयेत्क्षपयेत्।** प्रतिज्ञां तामनिस्तीर्य (भा० स्त्री० १५।१६)। **अनिस्तीर्य=अपारयित्वा=अनपवृज्य=अनिरुह्य।** अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् (याज्ञ० २।६)। **अनिस्तीर्य=अपरिहृत्य।** साल्हणि स तु निस्तीर्णः स्वभ्रात् (राज० ८।२६७०)। **निस्तीर्णो निर्गतः।** अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हृतकल्मषः (भा० पु० १०।८६।३०)। **अतीर्णप्रतिज्ञानः=अपारितसङ्गरः।** नावं निस्तीर्णकान्ताराः (अवमन्यन्ते) (भा० उ० १०५४)। त्रयोविंशतिरात्र यो योधयामास भार्गवम्। न रामेण निस्तीर्णः (भा० शां० ४६।१४)। **निस्तीर्णः=निर्जितः।** संसार तव निस्तारपदवी न दवीयसी। अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः (भर्तृ० १।६८)। **निस्तारः पारगमनम्।** गृहीतराजवर्तनस्य तावन्निस्तारः कृतः (हितोप०)। **निस्तारो निर्मोक्षः।**

**—त्यज् (त्यज हानौ)**। स मां निरस्त्यक्तवान् (रा० ४।४६।८)। **निरस्तवानित्यर्थः।**

**—दंश् (दंश दशने)।** निर्दश्य दशनैश्चापि क्रोधात्स्वरदनच्छदम् (भा० भीष्म० ४६।४२)। **निर्दश्य=अवखण्ड्य। अत्र निरिति साकल्यं नाह यथाऽन्यत्र। आदश्येति पाठान्तरम्।** दन्तान्निर्दशमानः (हरि० २।२४।३०)। **अन्योन्यं ताडयन् घर्षन्नित्यर्थः।**

**—दा (डुदाञ् दाने)।** निर्दत्तम् (पा० ७।४।४७ इत्यत्र वृत्तावुदाहरणम्। **निःशेषेण दत्तमित्यर्थः।**

**—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यकारः)।** इमे पञ्चैते चत्वारोऽसावेक इति निर्दिशेयुः (पञ्च० ब्रा० १०।३)। **निर्दिशेयुः=प्रविवेकेण कथयेयुः कीर्तयेयुः।** नक्षत्राणि न निर्दिशेत् (भा० १३।४६६२)। **तत्तन्नाम्ना न कीर्तयेत् नोद्दिशेत्।** धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् (मनु० ८।५७)। **निर्दिशेत्=घोषयेत्।** शाखाभङ्गेऽकस्माद् वृक्षाणां निर्दिशेद्रणोद्योगम् (बृ० सं० ४५।२५)। **निर्दिशेत्=ज्ञापयेत्।** संज्ञया शकारं निर्दिशति (मृच्छ०)। **हस्तादिसंकेतेन शकारं बोधयतीत्यर्थः।** आदावेष भूपतिं युद्धोद्योगं स्वभृत्यागं निर्दिशति (हितोप० ३।३६)। **कर्तव्यत्वेनोपदिशति।** परिगणनया निर्दिशन्तो बलाकाः (मेघ० २२)। **गणनया कीर्तयन्तः।** निर्दिष्टानि दशैतानि शरीराणि महर्षिणा (सुश्रुत० १।६।११)। **निर्दिष्टानि वर्णितानि।** मानुषान्मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा (भा० वन० १७३।१५)। **निर्दिष्ट.—निश्चित्य घोषितः।** उल्का नक्षत्रग्रहघाते तद्भक्तीनां क्षयाय निर्दिष्टा (बृ० सं० ३२।१७)। **उक्तोऽर्थः।** इदं दशरथाय वै निर्दिष्टं पायस मया (गोरेसियो सं० रा० १।१५।८)। **दशरथमुद्दिश्य निर्मितमित्यर्थः।** स्वकर्मफलनिर्दिष्टं ततो जात्यन्तरं गता. (मार्क० पु० १५।७६)। **निर्दिष्टं निर्धारितम्।** प्रथमानिर्दिष्टं समास उपसर्जनम् (पा०१।२।४३)। **प्रथमया यन्निर्दिश्यत उच्चार्यते तत्।** निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते (मनु० ७।१४४)। **निर्दिष्टमुक्तलक्षणम्।** निर्दिश्यापह्नुते च यः (मनु० ८।५३)। **निर्दिश्य=विशिष्य निवेद्य।** निर्दिष्टकारी=**यथोक्तकारी।** **विस्तारवचनं निर्देशः** (सुश्रुत० २।५५७।१७)। ओं तत्सद् इति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः (गीता १७।२३)। **निर्देशो निरूपणं वर्णनम्।** एतत्सर्वमनिर्देशेनैवमुक्तं यत्कर्तव्य पुरुषेणेह लोके (भा० शां० १०८।३३)। **अनिर्देशेन सामान्येन सामस्त्येन अपृथक्त्वशः, न तु शृङ्गग्राहिकया। समुदितमिति यावत्।** कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम्। भेदैर्ये व्यपकुर्वन्ति ते वै निरयगामिनः (भा०

अनु० २३।७३) ॥ **निर्देशः प्रतिज्ञानम्, संवित्, समयः।** सुरापानं ब्रह्महत्या गुरुतल्पमथापि वा। अनिर्देश्यानि मन्यन्ते प्राणान्तमिति धारणा (भा० शां० १६५।३४) ॥ **अशोध्यानि पातकानीत्यर्थः। येषां प्रायश्चित्तं न निर्दिश्यते विधीयते तानि तथोक्तानि।**

—दिह् (दिह उपचये)। **निर्दिग्धं मांसलं भवतीति कोषकारो हलायुधः।**

—दी (दीङ् क्षये)। अध श्येनो जवसा निरदीयम् (ऋ० ४।२७।१)। **निरदीयम् उदपतम्।**

—दुह् (दुह प्रपूरणे)। निरस्य रसं गविषो दुहन्ति ते (ऋ० १०।७६।७)। **निर्दुहन्ति=निष्कासयन्ति।** वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च (मनु० २।७६)। **निरदुहत्=उदहरत्।** ततस्तथा ददौ तस्मै रत्नानि मगधाधिपः। निर्दुग्धरत्नरिक्तेव पृथिवी बुबुधे यथा (कथा० १६।८३)॥ **निर्दुग्धानि उद्धृतानि।**

—दॄ (दॄ विदारणे)। निर्दारितांसहृदयान्सरथाश्वनागान् (ऊरु० १।३२)। **निर्दारितं विदीर्णमंसहृदयं येषां तान्।**

—दै (दैप् शोधने)। यथैव क्षेत्रनिर्दाता निर्दातं क्षेत्रमेव च (भा० शां० ६७।६)। **निर्दाता=तृणाद्यपनयेन शोधकः।** यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति (मनु० ७।११०)। **उक्तोऽर्थः।**

—द्युत् (द्युत दीप्तौ)। राथन्तरमेव तद्रूपं निर्द्योतयति (पञ्च० ब्रा० ११। २।७)। **स्पष्टयति, विशदयतीत्याह।**

—द्रु (द्रु गतौ)। बहिर्बिलं निर्द्रवतु (अथर्व० ६।८।११)। **निर्द्रवतु=निर्धावतु=त्वरितं निष्क्रम्यापगच्छतु।** ग्रीवास्ते कृत्ये पादौ चापि कर्त्स्यामि निर्द्रव (अथर्व० १०।१।२१)। **उक्तोऽर्थः।** यस्माद्वा प्रागुदीचीरापो निर्द्रवेयुः (लौ० गृ० ११।१)। **अभिष्यन्देरन्, प्रवहेयुः।**

—धा (डुधाञ् धारणपोषणयोः)। निररत्नौ मघवा तं दधाति (ऋ० १०।१६०।४)। **निर्दधाति निष्कृष्य धारयतीत्यर्थः।**

—धाव् (धावु गतिशुद्ध्योः)। सदानीरेत्युत्तराद् गिरेर्निर्धावति (श० ब्रा० १।६।३।१६)। **निर्धावति=उद्धवति।**

—धू (धू विधूनने)। निर्धूनुते (शां० ब्रा० ३१।८)। **प्रेज्य बहिष्कुरुत इत्यर्थः।** यथा निर्धूतसक्तुर्भस्त्रैवं संलीनः शिष्ये (श० ब्रा० १।६।३। १६)। **निर्धूता विधूय निःसारिताः सक्तवो यस्याः सा तथोक्ता।** निर्धूतान्वायुना पश्य संततान् पुष्पसञ्चयान् (रा० २।६५।१०)। **निर्धूतान् प्रकीर्णान् विक्षिप्तान्।** बालमृगैश्च निर्धूतैः (रा० ५।३७।४२)। **अनुसारेण प्रधावितैरित्याह।** परुषाणि च संश्राव्य निर्धूतोस्मि बलीयसा (रा०

४।८।३२) । **निर्धूतः=अवक्षिप्तः=तिरस्कृतः** । ज्ञाननिर्धूतकल्मषाः (गीता ५।१७) । **ज्ञानापहतपाप्मान इत्याह** । साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः (याज्ञ० २।७१) । **निर्धूतो बन्धुभिस्त्यक्तः** । दुःख शोकं च निर्धूय (भा० वि० ६६५) । **निर्धूय=अपनुद्य=कम्पनेनेवापाकृत्य** ।

**—धृ (धृञ् धारणे)** । किमलम्बताम्बरविलग्नमधः किमुवर्धतोर्ध्वमवनीतलतः । विससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः (शिशु० ६।२०) ॥ **निरधारि=निरणायि । व्यवासायि** । वायुर्निगच्छति तं निर्धारयेत् (वा० प्रा० २।३।४१) । **निर्धारयेत्=विधारयेत्=उपरमयेत्** । यतश्च निर्धारणम् (पा० २।३।४१) । **जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् इति वृत्तिः** । निर्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् (शिशु० २।७०) । **निर्धारिते निर्णीते व्यवस्थापिते** ।

**—धे (धेट् पाने)** । ते यज्ञस्य रसं धीत्वा यथा मधुकृतो निर्धयेयुः (श० ब्रा० ३।२।२।१) । **संचूषेयुरित्यर्थः** । अग्निर्विषमहेर्निरधात् (अथर्व० १०।४।२६) । **निरधात्=निरपात्** । निर्धयति (आदित्यः) यदिदं किं च शुष्यति (श० ब्रा० २।६।३।१४) । **निःशेषेण रसमस्य पिबतीत्याह** । तं निर्धीय निरस्यति (श० ब्रा० ११।६।४।२०) । **निर्धीय=निर्धाय=निष्पाय=निष्पीय । निःशेषेण संचूष्य** । स एव धीतः पश्चाद् ददृशे इति च तत्रैव । **निर्धीतो निष्पीतः** ।

**—ध्मा (ध्मा शब्दाग्निसंयोगयोः)** । निरव्रताँ अधमो रोदस्योः (ऋ० १।३३।५) । **निरधमः=पराणुदः** । निरन्तरिक्षादधमो महामहिम् (ऋ० ८।३।२०) । **उदीरितोऽर्थः** ।

**—ध्यै (ध्यै चिन्तायाम्)** । निध्यायतोऽनिशम् । सुधासूतिकलामौलिम् (राज० १।२७६) । **निध्यायतः=निरन्तरं ध्यायतश्चिन्तयतः** ।

**—नम् (णम प्रह्वत्वे शब्दे च)** । अब्रवीत्कुपिताकारा कराला निर्णतोदरी (रा० ५।२५।२०) । निर्णतोदरी **लम्बोदरी, उदरिला, पिचण्डिलेत्यर्थः । अत्यन्तनिम्नोदरीम् इति तु तिलककारो रामः । तनुमध्यात्वं हि स्त्रीणां गुणः सुरूपतां विशेषयति । सा च विनतानाम्नी करालेति नेदं विशेषणं युज्यते । देवशत्रुर्महाकायस्ताम्रास्यो निर्णतोदरः** (भा० ७।७८६४, हरि० १५६०४) । **उक्तोऽर्थः । अन्यत्रापि रामायणे** (३।१७।२६) **शूर्पणखावाक्ये निर्णतोदरीति प्रयोगः । तत्राप्युक्त एवार्थः** । नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति (नि० ८।५) । **निर्णततमा । पुत्रस्तावत् पितुर्नीचैर्नतो भवति, ततोपि नीचैर्नततमः पौत्र इति दुर्गः** । वयसः पक्षयोर्निर्णामौ भवतः (श० ब्रा० १०।२।१।५) ।

**—नश् (णश अदर्शने)** । निर्नष्टनामकृत्य—(राज० १।८३) । नितरां

नष्टानि नामकृत्यानि येषां ते । निष्क्रव्यादमनीनशत् (ऋ० १०।१६२।२) । **निरनीनशत् समूलकाषमकषत्, समूलमुदच्छिनत् ।**

—**निज्** (**णिजिर् शौचपोषणयोः**) । पात्राणि निर्णेनिजति (श० ब्रा० १।३।१।२) । गात्राणि ताभिर्निर्णेनिक्ते (काठक० ३४।११) । **इहोपसर्गो धात्वर्थानुवादी, न विशेषकः । निर्णिगिति पापशोधने उल्बणे वासस्यलङ्करणे वा दृश्यते** । वृद्धातिक्रमसंभृतस्य महतो निर्णिक्तये पाप्मनः । प्रायश्चित्तमथादिशन्तु गुरवो रामेण दान्तस्य मे (महावीर० ४।२५) ॥ **निर्णिक्तिः शुद्धिः ।**

=**नी** (**णीञ् प्रापणे**) । निर्वै क्षत्रं नयति हन्ति वर्चः (अथर्व० ५।१८।४)। **निर्णयति** (**ब्रह्मगवी**)=**अपनयति** । अग्निर्विषमहेर्निरधात् सोमो निरणयीत् (अथर्व० १०।४।२६)। **निरणयीत्=निरणयत्=निरकासयत्** । भगस्त्वेत इति हस्तेगृह्य निर्णयति (कौ०सू० ७६।१०) । **निर्णयति निष्क्रमयति । कुमारीमिति शेषः** । अभिपूर्व निर्णयते नमो अस्त्वस्मै (अथर्व० ११।२।२२) । पुरावृत्तकथोद्गारैः कथं निर्णीयते परः (हितोप० ३।१०५) । **निर्णीयते स्वरूपतोऽवधार्यते, परिच्छिद्यते** । अलंकृत्य शिशुं सम्यगभ्यर्च्य धवलाक्षतैः । स्वस्ति वाच्य समारूढवाहन निर्णयेद् गृहात् (वीरमित्रोदये २५४ तमे पृष्ठे समुद्धृतं बृहस्पतिवचनम्) ॥ **निर्णयेत् निष्क्रमयेत्** । हस्तेगृह्य निर्णय (कौ० सू० ७६।१०) । **निर्णय =निर्गमय=निःसारय । समौ निर्णयनिश्चयौ** (**अमरः**)। अवितृप्तया तथापि मे हृदयं निर्णयमेव धावति (कि०२।२६) । **निर्णयं सन्देहान्तगमनमेवानुसरति अपेक्षत इत्याह** । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय (माल० १)। **निर्णयो व्यवसायात्मिका बुद्धिः । सत्यानृतयोः प्रकर्षापकर्षयोः साध्वसाधुनोरव्यभिचरितं विनिगमनम्** । सन्देहनिर्णयो जातः (शा० १।२७) । **सन्देहविगमः, निश्चय इति यावत्** । चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् (भा० वि० १७।३) । **निर्णयमपनयम्, खण्डनम्, अपनोदम् ।**

—**नुद्** (**णुद प्रेरणे**) । क्षुधा निर्णुदति प्रज्ञाम् (भा० आश्व० ९०।९०) । **अपहरति, अपाकरोतीत्यर्थः** । निर्णुदति यत्पुराकृतम् (भा० शां० १९४।६१) । निरमुं नुद ओकसः सपत्नो यः पृतन्यति (अथर्व० ) । **निर्णुद=वहिर्गमय** । निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद (ऐ० ब्रा० ५।११) । **उक्तोऽर्थः** । धाना मत्स्यान् पयो मांसं शाकं चैव न निर्णुदेत् (मनु०४।२५०)। **न निर्णुदेत्=न प्रत्याचक्षीत ।**

—**पच्** (**डुपचष् पाके**) । **निष्पक्वं** क्वथितम् (अमरः) ।

—**पत्** (**पत्लृ गतौ**) । **असङ्ख्या** मूर्त्तयस्तस्य निष्पतन्ति शरीरतः (मनु० १२।१५) । **निष्पतन्ति निष्क्रामन्ति** । वधाय निष्पेतुरुदायुधास्ते युग-

क्षये केतवो यद्वदुग्राः (भा० भीष्म० ७७।४२)। **शिबिरान्निर्ययुः।** निष्पतेदात्म-लाभे वा व्यसने वा रिपोः श्रितः (कथा० ११।३२)। **निष्पतेत्=निर्गच्छेत्।** सन्दिग्धार्थं स्वतन्त्रो यः साधयेद् यश्च निष्पतेत् (याज्ञ० २।१६)। **निष्पतेत्=पलायेत।** अक्ष्णः कृशानुः किल निष्पपात (कु० ४।७१)। **निर्ययावित्यर्थः।** निष्पतिष्यति वा बाह्यां कक्ष्याम् (हर्ष०)। **निर्गत्य बाह्यां कक्ष्यां प्रवेक्ष्यतीत्यर्थः।** नि स्तुवानस्य पातय परमक्ष्युतावरम् (अथर्व० १।८।३)। **निष्पातय=निष्कासय।** तांस्तु निष्पतितांस्त्रस्तान् (भा० सौ० ८।१०६)। **निष्पतितान्, निष्क्रान्तान्, विद्रुतान्।** इदं हि तव विस्तीर्णं धनधान्यसमाचितम्। हस्त्यश्वरथ-सम्पूर्णं राज्यं निष्पातितं मया (रा० २।७५।१५)॥ **निष्पातितम् उत्सादितम्।**

—**पद्** (**पद गतौ**)। नेन्मेग्निर्वैश्वानरो मुखान्निष्पद्याता इति (श० ब्रा० १।४।१।१०)। **निष्पद्यातै=निष्क्रामेत्।** स मे मुखान्निरपादीति (**श० ब्रा०** १।४।१।१६)। **उक्तोऽर्थः। निरपादि—निष्पूर्वात्पद्यतेः कर्तरि लुङि।** योनौ रेतो मुक्तं न निष्पद्यते (**श० ब्रा०** ६।४।३।७)। **न निष्पद्यते=न जायते।** निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक् (मनु० ६।२४७)। **निष्पद्यन्ते जायन्ते रोहन्ति पच्यन्त इति वा।** कथमप्यम्भसामन्तरा निष्पत्तेः प्रतीक्षते (**कु०** २।३७)। **निष्पत्तिः परिपाकः।** मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया (पञ्चत० १।२७१)। **निष्पत्तिः सिद्धिः।**

—**पा** (**पा रक्षणे**)। येना निरंहसो यूयं पाथ नेथा च मर्त्यमति द्विषः (**ऋ०** १०।१२६।२)। **निष्पाथ=सर्वतो रक्षथ।**

—**पा** (**पा** पाने)। हिरण्याद् घृतं निष्पिबति (तै० सं० २।१३।११।८)। **उद्धृत्य पिबतीत्यर्थः।** सलिले क्षीरमासक्तं निष्पिबन्निव सारसः (**रा०** ३। १६।८)। **निष्कृष्य पिबन्नित्यर्थः।** मल्लात्मजन्मनोः शोकः कोपेन निरपीयत (राज० ७।१४६७)। **स्पष्टोऽर्थः।** स यथा दृतिर्निष्पीत एवं संलीनः शिश्ये (**श० ब्रा०** १।६।३।१६)। **यस्मात् पानीयं पीतं तेन यो रिक्तोऽभूत् स उच्यते निष्पीत इति।**

—**पिष्** (**पिष्लृ संचूर्णने**)। दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः (**भा० वि०** १६।१४)। **संचूर्णयामासेत्यर्थः।** निष्पिपेषोरसा कांश्चित् कांश्चित् **पद्भ्याम्** (रा० ६।८४।२३)। **ताडं ताडं ध्वंसयामासेत्यर्थः।** करं करेण निष्पिष्य निःश्वसन्दीनमानसः (भा० आदि० १५१।४२)। **निष्पिष्य=निपीड्य=मृदित्वा।**

—**पीड्** (**पीड अवगाहने**)। दन्तनिष्पीडितो रसः (सुश्रुत० १।१८७।१०)।

दन्तैः पीडयित्वा निःसारितः। तस्य निष्पीडयमानस्य भुजान्तरगतस्य च (रा० ४।१०।२०)। **निष्पीडयमानस्य बलवद् बाध्यमानस्य, गाढं सङ्कोचमापाद्यमानस्येत्यर्थः।**

**—पू (पूञ् पवने)।** अथापि निष्पुनाति (श० ब्रा० १।१।४।२१)। **अवधूनोतीत्यर्थः।** परापूतमिति निष्पुनाति (का० श्रौ० २।४।१८)। **शूर्पचालनोत्थेन वायुना तुषान् पृथक् कृत्वाऽधः पातयतीत्यर्थः।** प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम्। न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः (भा० पु० ६।१।१८)॥ **इह पुनन्तीत्येतावताऽलम्। नार्थो निरा।** आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः (वासिष्ठे धर्मसूत्रे)। पुनन्तु मा देवजनाः पुनन्तु वसवो धियः (ऋ० ६।६७।२७)। **इत्यादौ वैदिके वाङ्मये शोधनेऽर्थे शुद्धः पुनातिः प्रयुक्तो दृश्यते। लोकेपि तथा—** पुनाति पङ्क्तिं वंश्यांश्च (मनु० १।१०५)। हृद्गाभिः पूयते विप्रः (मनु० २।६२)। तज्ज्ञः पुनात्युभयतः पुरुषानेकविंशतिम् (याज्ञ० १।५८)। पाप्मभ्यश्च पुनातु वर्धयतु च श्रेयांसि सेयं कथा (उत्तर० ७।२०)। **इत्यत्र यथा। निरुक्तयोर्ऋषिकृत्योः शतपथश्रौतसूत्रयोस्तु निरोऽर्थवत्ता न शक्याऽपह्नोतुम्।**

**—पृच् (पृची सम्पर्के)।** फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः (भा० वन० १८१।१५)। **निष्पृक्तोऽसम्बद्धोऽसङ्ग इत्यर्थः।**

**—पृ (पृ पालनपूरणयोः)।** विश्वस्मान्नो अंहसो निष्पिपर्तन (ऋ० १।१०६।१)। **पारयतेत्यर्थः।** हव्यं कव्यं च विविधं निष्पूर्तं हुतमेव च (भा० द्रोण० ५६।१६)। **निष्पूर्तं तटाकारामादि।**

**—बन्ध् (बन्ध बन्धने)।** अथ निर्बध्नासि नाहं वक्ष्यामि (स्वप्न० )। निर्बध्नन्नपि हस्तेन सोथ कोपादताड्यत (राज०७।६२२)। **अभिनिविशमानः, हठं कुर्वन्नित्यर्थः।** निर्बध्नतातिमात्रं च गालवेन (भा० उ० १२३।१६)। **बलवत् प्रेरयमाणेनेत्यर्थः।** गुरुणा चैव निर्बन्धो न कर्तव्यः कदाचन (भा० अनु० १०४।८०)। **निर्बन्धो हठः, आग्रहः।** स विदित्वाऽथ भार्यायास्तं निर्बन्धं विकर्मणि (भा० पु० ३।१४।३०)। **निर्बन्धो हठेन प्रवृत्तिरासक्तिः।** पदशं नीतिनिर्बन्धः कर्तव्यो मुनिभाषिते। अनुस्मरणतात्पर्यान्नाद्रियन्ते हि लक्षणम्॥ **उक्तोऽर्थः।** जातो वै वैरनिर्बन्धः कृष्णेन सह तस्य वै (भा० सभा० १६।२२)। **वैरनिर्बन्धः =सन्ततं वैरम्।** निर्बन्धसंजातरुषा (गुरुणा)। (रघु० ५।२१)। **निर्बन्धेन प्रार्थ-**

**नातिशयेन, प्रार्थनायाः पुनः पुनः करणेन।** निर्बन्धपृष्टः स जगाद सर्वम् (रघु० १४।३२)। **निर्बन्धेन=आग्रहेण।** वयमभ्युद्धृताः कृच्छ्रान्निर्बन्धादार्ययाऽनया (मालती० १०।१९)। **निर्बन्धो महानभियोगो यत्नः।** ततस्तत्तनयाश्वखुरगतिनिर्बन्धेन (वि०पु० ४।४।१८)। °**निर्बन्धेन=अश्वखुरचिह्नानुसरणेन।** गुरोश्चालीकनिर्बन्धः (मनु० ११।५५)। **गुरोश्चानृतेन योजनम्।** **अनृताभिशंसनमित्यर्थः।** पुंसामित्यभिदां भिदां च न वयं निर्बध्य निश्चिन्महे (आप० ध० १।२२।२ उज्ज्वलायाम्)। **निर्बध्य=अभिनिविश्य।** मम रोगावस्थां प्रष्टुमागतः परिजनो मां निर्बध्य निवेदयति (अवि० ५)। निर्बन्धिनः किंचन नास्त्यसाध्यम् (बुद्ध० १३।६०)। **निर्बन्धोऽस्त्यस्येति निर्बन्धी आग्रही, तस्य।**

—**ब्रू (ब्रूञ् व्यक्तायां वाचि)।** नेदविद्वान्निर्ब्रुवाणि (शां० ब्रा० २१।१)। **व्यक्तं पृथक्त्वेन वा ब्रवाणि। नेवित्याशङ्कायां निषेधवचनः।** क्रमेत सर्वाणि पदानि निर्ब्रुवन् (ऋ० प्राति० ११।३२)। **विगृहीतानि पठन्नित्यर्थः।**

—**भज् (भज सेवायाम्)।** मा नो निर्भाग् वसुनः सादनस्पृशः (ऋ० ६।७२।८)। **माऽस्मान्निर्भाक्षीः, निर्भागान्मा स्म करोर् वसुनो राय इत्याह।** नाभानेदिष्टं मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्त्सोऽब्रवीदेत्य किं मह्यमभाक्तेति (ऐ० ब्रा० ५।१४)। **निरभजन्=दाये भागरहितमकुर्वन्।** प्रजापतिर्वै रुद्रं यज्ञान्निरभजत (गो० ब्रा० उ० १।२)। **उक्तोऽर्थः।** निर्द्विषन्तं दिवो निः पृथिव्या निरन्तरिक्षाद् भजाम (अथर्व० १६।७।६)। **इह निरित्यावृत्तो भूयसेऽर्थाय। अर्थे त्वविशेषः।** पृथिव्यास्तं निर्भजामो योस्मान्द्वेष्टि यं वयं द्विष्मः (अथर्व० १०।५।२५)। तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निरभजन् (ऐ० ब्रा ६।७)। **फलीकरणांस्तुषान्दत्त्वा रक्षांसि हविर्यज्ञेभ्योऽवञ्चयन्तेत्याह।** सर्वस्मात्सपत्नान्निर्भजति (श० ब्रा० १।५।४।१६)। **उक्तोऽर्थः।** निष्टं भज यो अमित्रो अस्य (अथर्व० ४।२२।२)। **निष्टं निस्तम्। तं निर्भज=ग्रामादिभ्यो निर्भक्तं कुर्वित्यर्थः।** यदैव तं स्वेन भागधेयेन निर्भजन्त्यथैव स निर्भक्तो भवति (श० ब्रा० ११।७।४।२)। **अत्र तृतीयाश्रुतेरर्थान्तरप्रत्ययः। भागधेयेन निर्भजन्ति=भागवन्तं कुर्वन्ति।** यज्ञपतिमृषय एनसाहुर्निर्भक्तम् (अथर्व० २।३५।२)। **निर्भक्तं निर्भागं दौर्गत्ययुक्तम्। एनसेति इत्थम्भूतलक्षणे तृतीया।** कूटाक्षदेविनः पापान्निर्भजेद् द्यूतमण्डलात् (नारदीयमनु०)। **निर्भजेत्=निर्वासयेत्।** निर्भक्तमौषधं बहूपकरोति। **किञ्चिदन्यदशनमनशित्वा सेवितं निर्भक्तमुच्यते।** स निर्भाज्यः स्वकादंशात् किंचिद् दत्त्वोपजीवनम् (मनु० ६।२०७)। **निर्भाज्यः=निर्भागो भागरहितः सम्पाद्यः।**

—भञ्ज् (भञ्जो आमर्दने)। एवा तान्त्सर्वान्निर्भङ्ग्धि (अथर्व० ३।६।३)। आमर्दनेत्यर्थः। यंसग्रहणादभिप्रयतः सम्प्रदानसंज्ञा निर्भज्यते (पा० १।४।३२ सूत्रभाष्ये)। निर्भज्यते=निराक्रियते। असावत्यन्तनिर्भग्नस्तव पुत्रो भविष्यति। अनाथवत् सुखेभ्यश्च राजवंशाच्च वत्सले (रा० २।८।५५)॥ निर्भग्नः प्रच्यावितः, हीन इत्यर्थः।

—भर्त्स् (भर्त्स तर्ज भर्त्सने)। अशोकनिर्भर्त्सितकर्णिकारम् (कु० ३।५३)। औपचारिकः प्रयोगः। अशोकनिर्भर्त्सितः=अशोकनिर्जितः, अशोकेन पश्चात्कृतः। अतिशयित इत्यर्थः। उपवनं निरभर्त्सयत प्रियान् वियुवतीर्युवतीः शिशिरानिलः (शिशु० ६।६२)।

—भा (भा दीप्तौ)। ताभ्यां धर्मो हि निर्बभौ (मनु० २।१०)। निःशेषेण प्रकाशतां गत इत्यर्थः।

—भिद् (भिदिर् विदारणे)। अथैनं छिन्नधन्वानं...निर्बिभेद रणे राजा (भा० भीष्म० ८४।१५)। गर्हितं विव्याध। यथाऽश्वत्थ निरभिनोन्तर्महत्यर्णवे (अथर्व० ३।६।३)। निर्भिद्योत्पन्नोसीत्याह। अकर्मकोऽत्र भिदिरविवक्षितकर्मा। तस्याभितप्तस्य मुखं निरभिद्यत (ऐ० आ० २।४।१)। व्यदीर्यतेत्यर्थः। संवृतं विवृतमभूत्। पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः (रा० १।४०।४)। निर्भेदः संहारः। विष्णुर्मधुनिहन्ता च चकार मधुवाहिनीम्। नदीं प्रस्रवनिर्भेदाम् (हरि० १२०।१७)। निर्भेदो निर्दरः। निर्भेदाद्दतेपि मालविकायामयमुपन्यासः शङ्कयति (माल० ४)। निर्भेदो विस्पष्टं कीर्तनम्।

—भुज् (भुजो कौटिल्ये)। तथौष्ठौ निर्भुजत्यपि (याज्ञ० २।१४)। निर्भुजति=वक्रयति। एकी कृतस्त्वचि निषिक्त इवावपीड्य निर्भुग्नपीनकुचकुड्मलयाऽनया मे (मालती० ६।१२)। निर्भुग्ने वक्रीकृते कुचकुड्मले यस्यास्तया।

—भू (भू सत्तायाम्)। प्रेमन्धः ख्यन्निःश्रोणोभूत् (ऋ० ८।६८।२)। अन्धः पश्यति खञ्जश्च गच्छतीत्याह। व्यन्धो अख्यदहिमाददानो निर्भूदुखच्छित् समरन्त पर्व (ऋ० ४।१९।९)। उक्तोऽर्थः।

—मन्त्र् (मत्रि गुप्तपरिभाषणे)। सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे (अथर्व० ९।१२।१)। मन्त्रैर्दूरी कुर्म इत्याह।

—मस्ज् (टुमस्जो शुद्धौ)। आनाभि निरमज्जंश्च रथचक्राणि शोणिते (भा० द्रोण० १४६।८९)। भृशं न्यमज्जन्। स पीडितो गिरिस्तेन निर्ममज्ज समन्ततः (हरि० २।४२।८२)। जलोद्गमोऽस्याभूदित्यर्थः प्रतिभाति।

**—मा (मा माने, माङ् माने)**। निरिर्मा मात्रां मिमीमहे (अथर्व० १८।२।४२)। **निर्मिमीमहे=साधु मिमीमहे। निरित्युपसर्गो निर्गतदोषतां निर्दुष्टतां मानस्य द्योतयति**। माऽन्तरिक्षम्। निर्मीयन्तेऽस्मिन्भूतानि (नि० २।८।१)। **इयत्तया परिच्छिद्यन्ते इत्यर्थः**। एतौ युद्धविदौ रङ्गे कालनिर्माणयोधिनौ (हरि० २।२२।८८)। **कालनिर्माणेन कालं विमाय नियतकालमित्यर्थः। नित्ययोधिनाविति वा**। यतश्चाध्वकालनिर्माणम् **इति वार्त्तिकेप्ययमेवार्थः, अन्यत्र निर्पूर्वोऽयं धातुः प्रायेणोत्पादने रचनायां प्रकल्पनायां वा वर्तते तथा च प्रयोगाः प्रथन्ते**—निर्ममे निर्ममोऽर्थेषु मधुरां मधुराकृतिः (रघु० १५।२८)। निर्ममे निर्मितवान् निवेशयामास। यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृप. (मनु० ७।५)। **निर्मितः कृतः**। निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः (विक्रम० १।९)। **निर्मातुम्=रचयितुम्, कल्पयितुम्**। त्रैलोक्यनिर्माणकरं जनित्रम् (भा० उ० ७१।७)। **उक्तोऽर्थः**। निर्माणमेव हि तदादरलालनीयम् (मालती० ९।४९)। **निर्माणं संनिवेशः**।

**—मुच् (मुच्लृ मोक्षणे)**। नि र्मा मुञ्चामि शपथात् (आप० श्रौ० ७।६।२१।६)। **निर्मुञ्चामि=निर्मुक्तं करोमि**। निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः (मृच्छ० ३।६)। **त्वचा मुच्यमान इत्यर्थः**। विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी (रा० २।४३।२)। **निर्मुक्ता त्यक्तकञ्चुका। निर्मुक्तो मुक्तकञ्चुक इत्यमरः**। निर्मुच्यमानभुजगोदरनिर्मलस्य (स्वप्न० ४।२)। **उक्तोऽर्थः**। निर्मुक्ताशीविषाभानां सम्पातोऽभूत्सुदारुणः (भा० द्रोण० ९८।२२)। सा भीमभुजनिर्मुक्ता निर्मुक्तोरगसंनिभा (भा० द्रोण० ११४।७२)। **भुजनिर्मुक्ता=बाहुविसृष्टा, दोष्प्रहिता (गदा)**। आददानश्च नाराचान्निर्मुक्ताशीविषोपमान् (भा० भीष्म० ४४।१७)। स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः (रघु० १६।१७)। **निर्मोकः कञ्चुकोऽहित्वक्, निर्ल्वयनी**। तृणनिर्मोकवसनाश्चीरवल्कलवाससः (भा० अनु० १४१।१००)। **मृगनिर्मोको मृगचर्म। निर्मोको मोचने सन्नाहे सर्पकञ्चुके इति मेदिनी**। निर्मुच्यमाननिर्मोकं भोगं भोगिवधूमिव (बृ० श्लो० सं० ३।४)। **भोगः फणिकायः। अहेः फणकरणयोर्भोगः**।

**—मृज् (मृजू शुद्धौ)**। य आगच्छेत्तं ब्रूयाच्छणशुल्वेन जिह्वां निर्मृजानः शालायाः प्रस्कन्देति (कौ० सू० २५।२२)। **निर्मृजानः शुन्धन्नित्यर्थः**। यस्तयोः प्रथमं जातः स कुशैर्मन्त्रसंस्कृतैः। निर्मार्जनीयो नाम्ना हि भविता कुश इत्यसौ (रा० ७।६६)।

**—यत् (यती प्रयत्ने, यत निकारोपस्कारयोः)**। यमो वैवस्वत-

स्तस्य निर्यातयति दुष्कृतम् । हृदि स्थितः कर्मसाक्षी **क्षेत्रज्ञो यस्य तुष्यति** (भा० आदि० ७४।३१) ॥ निर्यातयति परिहरति । ततस्तादृशो भवान्बन्धनाद्राजानमन्तः पुराद्राजदारिकामुभे निर्यातयतु (प्रतिज्ञा०) । **निर्यातयतु=निष्क्रमयतु** । असतीं वपुष्टमां चैव निर्यातयत मे गृहात् (हरि० ३।५।२१) । **उक्तोऽर्थः** । न्यासभूतमिद राज्यं तव निर्यातयाम्यहम् (रा० ४।१०।६) । **प्रत्यर्पयामि** । निर्यातय हस्तन्यासम् (विक्रम० ५) । **उक्तोऽर्थः** । परिचारकं चात्मान बोधिसत्त्वस्य निर्यातयामास (अवदा० चुडू० जा०) । **निर्यातयामास समर्पयाञ्चकार** । निर्यातयत मे सेनां प्रभूतरथकुञ्जराम् । द्रक्ष्यामि वनसस्थं च धृतराष्ट्रं महीपतिम् (भा० आश्रम० २२।१६) ॥ **निर्यातयत सज्जी कुरुत, उपस्कुरुध्वम्** । रामलक्ष्मणयोर्वैरं स्वयं निर्यातयामि वै (रा० ६।६३।४) । **निर्यातयामि=शोधयामि, विगणयामि, (वैरं परकृतमृणमिति गण्यते तद्विगणनीयं भवति समर्थेन)** । संयुज्यमानानि निशम्य लोके निर्यात्यमानानि च सात्त्विकानि (भा० शां० ३५४।६) ॥ **निर्यात्यमानानि निपीड्यमानानि** । पुत्रो निर्यातितः क्रोडात् (हरि० २।३२।१८) । **निरस्त इत्यर्थः** । चतुर्दश समा वीर वने निर्यातितास्त्वया (रा० ६।१०४।२६) । **निर्यातिता नीताः क्षपिताः** । चतुर्दश समाः सौम्य वने निर्यातितास्त्वया (रा० ६।११६।२१) । **उक्तोऽर्थः** । प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः (मनु० ३।१६६) । **प्रेतनिर्हारक इत्यर्थः** । प्रतिप्लवनमेवाथ मधुनिर्यातनं तथा (रा० १।३।३३) । **मधुनिर्यातनं क्षौद्रहरणम् । मधूनां हरणं तथेति पाठान्तरम्** । क्षत्रियवधे गोसहस्रमृषभैकादशं राज्ञ उत्सृजेद् वैरनिर्यातनार्थम् (बौ० ध० १।१०।१६।१) । **वैरस्य पापस्यापयातनार्थम् । अपयातनं नाशः** । विनिवृत्तेषु मेघेषु निर्यात्य जगतो जलम् (           ) । **समर्प्य, वितीर्य** । निर्यात्य महिषं तस्य (कथा० ६२।२२४) । **उक्तोऽर्थः** । निर्यात्य वैरं सफलं सपुष्पं तस्मै नरेन्द्राधमपूरुषाय (भा० वन० १७६।१०) । **स एवोदितपूर्वोऽर्थः । फलं राज्यप्राप्तिः । पुष्प शत्रुवध इति नीलकण्ठः** । निर्यात्य रथवरं ब्राह्मणाय (अवदा० जा० ६) । चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये (मनु० ११।१६४) । **तत्=स्तेयं चोरितं धनम्** । मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि (रा० ५।२१।२१) । **निर्यातयितुम् प्रत्यर्पयितुम्** ।

**—या (या प्रापणे)** । **अज्ञाता चैव** निर्याति न चायाति **पिपीलिका** (शि० भा० २७।११) । **प्रकाशं निर्गच्छति न प्रच्छन्नम्** । अद्य निर्यास्यति हि रावणः (रा० ६।६१।१६) । **प्रेष्यति**, मरिष्यति । सेनां **निर्यापयामास** धृष्टद्युम्नः पुरोगमाम् (भा० उ० १६४।१) । **निर्यापयामास=प्रेषयामास** ।

तेजसा मणिना हीनं शिविरान्निरयापयत् (भा० पु० १।७।५६)। **निरयापयत् =बहिरकरोत्**। यदि कालेन निर्याणं सुखं दुःख भवाभवौ। भिषजो भैषजं (=भैषज्यम्) कर्तुं कस्मादिच्छन्ति रोगिणः (भा० शां० १३९।५५)॥ **निर्याणं मृत्युः**। अत्र निर्याणकालेऽपि तमः सम्प्राप्यते महत् (भा० उ० १०९।२०)। **निर्याणकाले मृत्युकाले**। निर्याणं धृतराष्ट्रस्य (श्रुत्वा) शोकः समभवन्महान् (भा० आश्रम० ३७।४०)। **उक्तोऽर्थोऽसकृत्**। आपदर्थं च निर्यातं धनं त्विह विवर्धयेत् (भा० शां० ८७।२३)। **निर्यातं रक्षितमिति शार्मण्य सं० कोषः। दत्तमिति तु नील०**। निर्यापितो महोत्सवः (भा० पु० ४।३।८)। निर्यापितः प्रारब्धः। **अपाङ्गदेशो निर्याणम् इत्यमरः। गजस्यापाङ्गदेशो निर्याणमुच्यत इत्यर्थः**। प्रत्यन्यदन्तिनिशिताङ्कुशदूरभिन्ननिर्याणनिर्यदसृजं चलितं (महेभं) निषादी (शिशु० ५।४१)। **पशुपादबन्धनरज्जुरपि निर्याणमुच्यते**। निर्याणहस्तस्य पुरो दुधुक्षतः (शिशु० १२।४०) **इत्यत्र यथा**।

**—याच् (टुयाचृ याच्ञायाम्)**। मृत्योरहं ब्रह्मचारी यदस्मि निर्याचन् (अथर्व० ६।१३३।३)। **निर्याचन् निः शेषेण याचे**। निर्याचन् भूतात् पुरुषं यमाय एष ते रुद्र भागो यं निरयाचथाः (तै० सं० ३।१।९।४, ५।१।२।४)। **उक्तोऽर्थः**।

**—यु (यु मिश्रणामिश्रणयोः)**। निर्युवाणो अशस्तीः (ऋ० ४।४८।२)। **निर्युवाणः पृथक् कुर्वाणः=अपाकुर्वन्**।

**—युज् (युजिर् योगे)**। निर्योगाद् भूषणान्माल्यात् सर्वेभ्योऽर्धं प्रदाय मे (प्रतिमा० १।२६)। चिरमुपनतकार्यं चापि निर्युक्तमन्त्रम् (प्रतिज्ञा० ४।१३)। फुल्लं कुबरकं पश्य निर्युक्तालक्तकप्रभम्। यो नखप्रभया स्त्रीणां निर्भर्त्सित इवानतः॥ हन्त निर्युक्तमित्युक्त्वा रामः कवचमाविशत् (रा० ३।२४। १६)। **निर्युक्तं निर्व्यूढम्। निश्चयेनोपायश्चिन्तित इत्याह**। शिरसः स्थान-निर्युक्ता...(हरि० २।४१।४५)। **निर्युक्ता निश्चयेन योजितेत्यर्थः। निर्मुक्तेति पाठान्तरम्**।

**—राज् (राजृ दीप्तौ)**। अस्पृष्टचरण ह्यस्य चूडामणिमरीचिभिः। नीराजयन्ति भूपालाः पादपीठान्तभूतलम् (प्र० च० २।८)॥ **नीराजयन्ति=भासयन्ति=दीपयन्ति**। परलोकविजयाय नीराज्यमानमिव ज्वरज्वलनेन (हर्ष० ५)। **उक्तोऽर्थः**।

—री **(री गतिरेषणयोः)**। निश्चर्मणो गामरिणीत धीतिभिः (ऋ० १। १६१।७)। **चर्मणो निरिणीत=पृथक्** कुर्यात्, **विश्लेषयेदित्यर्थः। गां निस्त्वचं** कुर्वीतेत्याह।

**—रुच्** (रुच दीप्तावभिप्रीतौ च)। निरग्नयो रुरुचुर्निरु सूर्यः (ऋ० ८।३।२०)। **नीरुरुचुः सुतरां प्रदीप्य पराणुनुदुः** (अहिम्)। **सोपसर्गको रुचिरिह सकर्मकः।**

**—लिख्** (लिख अक्षरविन्यासे)। निर्लिखित दारुमयम् (आप० ध० १।५।१७।१२)। **निर्लिखितं तष्टं सत् प्रयतम्।**

**—लिह्** (लिह आस्वादने)। द्विः स्रुचं निर्लिह्य (आप० श्रौ० ६।३।१२।२)। **निर्लिह्य=अभिलिह्य।**

**—लुठ्** (लुठ स्तेये)। परकाव्येन कवयः परद्रव्येण चेश्वराः। निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे॥ **निर्लोठितेन=चोरितेन=स्तेयलब्धेन, लोप्त्रेण।**

**—लुड्** (लुड विलोडने)। अनिर्लोडितकार्यः (शिशु० २।२७)। **अनवगाढकृत्यः। अपरीक्षितकार्यः।**

**—लू** (लूञ् छेदने)। कुलिशनिर्लूनपक्षभ्रष्ट इवाचलः (कथा० ६८।२२)। एकैकमल्लनिर्लूनकन्धराः (कथा० ४८।६०)। प्रहस्तश्चासिनिर्लूनचर्माणं करणक्रमात्। (कथा० ५०।२८)। **सर्वत्र निरिति पार्थक्यमाह।**

**—वच्** (वच परिभाषणे)। स्वर्ग्यो धर्मो ह्येषां निरुच्यते (भा० शां० ८।३२)। **उत्कृष्टत्वेन कीर्त्यत इत्यर्थः।** शल्यान्निरवोचमहं विषम् (अथर्व० ४।६।४)। **निर्गतं ब्रवीमीति सायणः।** वचसा निर्गमयामीत्यन्ये। निरुक्तमेनः कनीयो भवति (श० ब्रा० २।५।२२०)। **निरुक्तं प्रतिपन्नमित्यर्थः।** अनिरुक्तः प्रजापतिः (श० ब्रा० १४।२।२।२१)। **अनिरुक्तो वचसाऽनिरूपितः, अकृतलक्षण इत्यर्थः। अत एव कः प्रजापतेरभिख्या भवति, सर्वस्य प्रष्टव्यत्वात्।** अक्षौहिणी तु पर्यायैर्निरुक्ता च वरूथिनी (भा० उ० १५६।२५)। **निरुक्ता=व्याख्याता=स्पष्टीकृता।** एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति तदिदं वचनं तेषां निरुक्तं वै जनार्दन॥ क्षयं याता हि राजानः ··· (भा० शल्य० २४।४४-४५)। **निरुक्तं विस्पष्टम्। अवितथमित्यर्थः। तेषां सिद्धानाम्।** पात्र त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः (भा० पु० ७।१४।३४)। **विस्पष्टमुक्तम् लक्षणेनोक्तम्।** वेदांश्च वेद्य तु विधिं च कृत्स्नमथो निरुक्तं परमार्थतां च (भा० शां० २४५।३०)। स एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति (छां० उ० ८।३।३)। **षडाश्रयणाच्छरीरम् इति शरीरनिर्वचनेन पूर्वोक्तोत्पत्तिक्रम एव दृढीकृतः** (मनु० १।१७ इत्यत्र कुल्लूकः)। **निर्वचनं निरुक्तिर्व्युत्पत्तिः।** गुणतः शब्दनिष्पत्तिर्निर्वचनम् (कौ० अ० १५।१।१८०)। नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः (भा० पु० ६।२०।३७)।

निर्वचनमाशिषाम् (शां० श्रौ० ६।१।३७) । **निर्वचनमाशंसनप्रकारः ।** प्रनष्टं शान्तनोर्वंशं समीक्ष्य पुनरुद्धृतम् । ततो निर्वचनं लोके सर्वराष्ट्रेष्ववर्तत (भा० आदि० १०९।२३) ॥ **निर्वचनं प्रशस्तिः ।** ततो निर्वचन लोके सर्व-राष्ट्रेष्ववर्तत । वीरसूनां काशिसुते देशानां कुरुजाङ्गलम् (भा० १।४३५९) ॥ **निर्वचनं लोकवादः प्रवादः, आभाणकः ।** न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् (भा० वन० २७।३७) । **उक्तोऽर्थः ।** श्वद्दृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा । इति लोके निर्वचनं पुरश्चरति भारत (भा० वन० ३३।८२) ॥ **उक्तपूर्व एवार्थः ।** येषां तटाकानि महोदकानि वाप्यश्च कूपाश्च प्रतिश्रयाश्च । अन्नस्य दानं मधुरा च वाणी यमस्य तेऽनिर्वचना भवन्ति ॥ **यमवार्तामपि न शृण्वन्तीत्यर्थः ।** माल्येन तां निर्वचन जघान (कु० ७।१९) ॥ **निर्वचनं शब्दो-क्तिमन्तरेण, निश्शब्दम्, तूष्णीम्, निभृतम् इत्यर्थः ।**

—**वद् (वद व्यक्तायां वाचि) ।** वाचं विषस्य दूषणीं तामितो निरवा-दिषम् (अथर्व० ४।६।२) । **निरवादिषम्=ताल्वोष्ठपुटव्यापारेण निर्गमय्य उच्चारयामीति सायणः ।** आयुर्मा निर्वादिष्टम् (वा० सं० ५।१७) । **निकृष्टं पशुधनादिरहितं मा उच्चारयतम् इति भाष्ये । वचसा मा हार्ष्ट मा निरा-कार्ष्टमित्यर्थस्तु शब्दशक्त्या सुलभतरो रोचते नः ।** निर्वादैर्निर्वदेदेनम् (भा० उ० १३५।३) । **निन्दावचनैरपभाषेतावमन्येतेत्यर्थः ।** यो निर्वदेत्संमोहाद् ब्राह्मणं वेदपारगम् । (भा० शां० ३२७।५०) । **निर्वदेत्=निन्देत् ।** न निर्व-दति राजानं लभते सम्पद पुनः (भा० वि० ४।४०) । **उक्तोऽर्थः । अवर्णाक्षेप-निर्वादपरीवादापवादवत् इत्यमरः ।** किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत सन्त्यजामि (रघु० १४।६४) । **निर्वादकथा निन्दावचनम् ।**

—**वप् (डुवप बीजसन्ताने) ।** निर्गा ऊपे यवमिव स्थिविभ्यः (ऋ० १०।६८।३) । **निरूपे=निरुप्तवान्=निवेदितवान्=अर्पितवान् ।** आग्नावैष्णवं पुरोडाशं निर्वपन्ति (ऐ० ब्रा० १।१) । **उक्तोऽर्थः ।** न निर्वपति पञ्चाना-मुच्छ्वसन्न स जीवति (मनु० ३।७२) । **न निर्वपति=न ददाति ।** श्रोत्रि-यायाभ्यागताय महोक्षं वा महाजं वा निर्वपेत् (अज्ञातमूल सूत्रकारवचनम्) । यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः (नि० ७।१८) । **निरुप्यत इति निः पूर्वस्य वपतेः कर्मणि लटि रूपम् ।** न च तत्स्वयमश्नीयाद् विधिवद्यन्न निर्वपेत् (भा० अनु० १११।८५) । **इत्यत्रैतत्संवादि वचः श्रूयते । सर्वासूदा-हृतिषु समानो धातोरर्थः ।** यमायाकम्पनं तेन निरुवाप महापशुम् (भट्टि० १४।८६) । **तेन कालेनाकम्पनं नाम राक्षसं महापशुरूपं बलिं हृतवानित्यर्थः ।** नाह-मभागो निर्वप्स्यामि (तै० ब्रा० ३।३।८।५) । **यावदहमभागस्तिष्ठामि तावद्**

**देवतादिभ्यो हविरादीनि न निवेदयिष्यामीत्यर्थः ।** अपसव्येन हस्तेन निर्वपेदुदकं भुवि (मनु० ३।२१४) । **आसिञ्चेत्,** निक्षिपेत् । पितुश्चकार तेजस्वी निर्वापम् भ्रातृभिः सह (रा० २।१०३।२८) । **निर्वापं निवापम् । पितृदानं निवापः स्यादित्यमरः ।** नीलवैदूर्यवर्णांश्च मृदून्यवससचयान् निर्वापार्थं पशूनां ते ददृशुस्तत्र सर्वशः (रा० १।६१।७६)।। **निर्वापाय जग्ध्यर्थं पुरतो विक्षेपाय ।**

—**वम्** (**टुवम उद्गिरणे**) । शोणित निर्वमन्ति स्म (भा० द्रोण० ६३। ३८) । **निरतिशये । अतिशयितं रुधिरं वमन्ति स्मेत्यर्थः ।** सा तन्निरवमच्छुक्रं नासिकायां विवस्वत· (हरि० १।६।५४) ।

—**वर्ण्** (**वर्ण वर्णक्रियाविस्तारगुणवचनेषु**) । **निर्वर्णनं तु दर्शनालोकनेक्षणम् इत्यमरे निर्वर्णनं निध्यानादिभिरभिन्नार्थम् ।** अनिर्वर्णनीय परकलत्रम् (शा० ५) । **न निध्यातव्यमित्याह ।** तस्माद् यद्य स्तोत्रेण गुणनिर्वर्णन त्विमौ (वि० पु० १।११।४८) । **इह निर्वर्णनं विस्तरशो वर्णनेऽर्थे प्रयुक्तम् ।**

—**वस्** (**वस निवासे**) । कृच्छ्रं वने वासमिम निरुष्य (भा० वन० २५।१८) । **निःशेषेणोषित्वा ।** तस्मिन्गुरौ गुरुवासं निरुष्य (भा० १४।७) । **उक्तोऽर्थः ।** निर्वासिताप्यतस्त्वयाहं तपस्विसामान्यमवेक्षणीया (रघु० १४। ६७) । **निर्वासिता निष्कासिता ।** अनिर्वृत्ते तु निर्वासे (भा० वि० ४७।५) । **असमाप्ते निर्वासकाले इत्यर्थः ।**

—**वह्** (**वह प्रापणे**) । निष्टौग्र्यमूहथुरद्भ्यस्परि (ऋ० १०।३९।४) । **तौग्र्यमद्भ्यो निरूहथुरुज्जह्रथुः=उद्धृतवन्तौ ।** युव भुज्युमर्णसो निः समुद्राद् विभिरूहथुः (ऋ० १।११७।१४) । **उक्तोऽर्थः । ओघ** इमाः सर्वाः प्रजा निर्वोढा (श० ब्रा० १।८।१।२) । **निर्वोढा=प्रवाहयिष्यति=आप्लावयिष्यति ।** आपो रिप्रं निर्वहत (आप० श्रौ० ७।४।५) । चर्यां विना योगोपि न निर्वहति (सर्व० सं०) । **न निर्वहति न सिध्यति ।** तत्कर्म निर्वहेच्च नः (कथा० ३२।३२) । **उक्तोऽर्थः ।** गृहस्थाश्रयेण सर्वाश्रमिणो निर्वहन्ति (मनु०३।७७ इत्यत्र कुल्लूकवचनम्) । **निर्वहन्ति योगक्षेमिणो भवन्तीत्यर्थः ।** स वो निर्वक्षद् दुरितादवद्यात् (अथर्व० १२।२।४८) । **निर्वहेद् निर्गमयेदित्यर्थः । लेटि सिपि रूपम् ।** तं निर्वहत परि ग्रामादितः (अथर्व० १८।२।२७) । **निष्क्रमयतेत्यर्थः ।** यदा तु निर्वाहयति स्म ते प्रियं तदा हि मूकस्तुरगाधमोऽभवत् (बुद्ध० ८।४०) । **निरक्रमयदित्यर्थः ।** भीमः कृष्णभुजावलम्बितगतिर्निर्वाह्यते पाण्डवैः (ऊरु० १।२५) । **निर्वाह्यते समराङ्गनाद् बहिर्नीयते ।** यथा प्रियसखी बन्धुजनशोच्या न भवति तथा निर्वाहय (शा० ३) । **तथा संविधेहि, तथोपायान्कुरु ।** निर्वाहः **प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम्** (मुद्रा० २।१८)। **निर्वाहः**

**प्रतिपालनम् निर्वर्तनम्, निर्व्यूढिः ।** इत्यभ्रातृकाया अनिर्वाह औपमिकः (नि० ३।४) । **अनिर्वाहः=अविवाहः ।** स्रुचः शरावव्रखातं सनिर्वाहं षडङ्गुलम् (कर्मप्रदीपे) । **सनिर्वाहम्=घृतनिर्गममार्गसंहितम् ।** गार्हपत्यादुष्णं भस्म निरुह्य (श० ब्रा० १२।४।२।२) । **निरुह्य=अपोद्धृत्य=निष्कास्य ।**

—**वा (वा गतिगन्धनयोः)।** निर्ववुः शतशश्चैव वृष्टिवाताः सविद्युतः (रा० ४।२६।११)। **निर्ववुः=निरतिशयं ववुः, वान्ति स्म ।** त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् (सुभाषितम्)। **निर्वाति शाम्यति, शैत्यं भजते ।** वपुर्जलार्द्रपवनैर्न निर्ववौ (शिशु० १।६५)। **उक्तोऽर्थः । गृह्या न निर्वान्ति** मया प्रदीपितास्तथैव तावद् हृदयानि मन्त्रिणाम् (प्रतिज्ञा०४।२२)। **न शाम्यन्तीत्याह ।** इति सर्वं समुन्नद्धं न निर्वाति कथं चन (भा० शल्य० ५।२१) । सखि अन्यादृश एव तेऽद्य निर्वापयति शरीरस्पर्शः (मालती० ६) । **निर्वापयति सुखयति ।** अग्निं हृदय्यं शोकं तं ते निर्वापयामसि (अथर्व०६।१८।१)। **निर्वापयामः शमयामः ।** निर्वाप्यते प्रतिभयं पृथिवीपतीनां सार्वत्रिकं तु रभसाद् भुवि बुद्धिवृद्धैः । **निर्वाप्यते शमं नीयते।** यं त्वमग्ने समदहस्तमु निर्वापया पुनः (अथर्व० १८।३।६) । **निर्वृतं सुखितं कुर्वित्याह ।** धौतारकूटकोमलातपत्विपि निर्वाति वासरे (हर्ष० २) । **निर्वाति=अवसानं गच्छति सति ।** अपि निर्वाणमायाति नानलो याति शीतताम् (हितोप० १।१३१) । **निर्वाणमायाति=निर्वाति=शाम्यति ।** निर्वाण नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् (भा०वन० ३१।२६) । **निर्वाणमपवर्गम् मोक्षम् ।** निर्वाण समुपगमेन यच्छते ते (नमः) (कि० १८।३६) । **निर्वाणं सन्तापशान्तिम् ।** स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति (गीता ५।२४) । **ब्रह्मनिर्वाणम्=ब्रह्मानन्दम् ।** अये लब्ध नेत्रनिर्वाणम् (शा० ३) । **निर्वाणं परमं सुखम्, परा निर्वृतिः ।** स पीत्वा शीतलं तोयं पिपासार्तो महीपतिः । निर्वाणमगमद् धीमान्सुसुखी चाभवत्तदा (भा० वन० १०४।३८) । **उक्तोऽर्थः ।** प्राप्य संकल्पनिर्वाणं नातिप्रीतोऽभ्यगात्पुरम् (भा० पु० ४।६। २७) । **संकल्पनिर्वाणं संकल्पितार्थसिद्धिम् ।** विहाय सर्वसंकल्पान्बुद्ध्या शारीरमानसान् । शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः (भा० आश्व० १६।१२) ॥ **निर्वाणं शममुपरतिं वा ।** पितुः शरीरनिर्वाणं निष्टनन् विषसाद ह (रा० २।७७।८) । **शरीरनाशस्थानमित्यर्थः ।** त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु (रा० १।३६।१३) । **निर्वाणमुपप्लवनाशजं सुखम् ।**

—**विद् (विद सत्तायाम्)** कृच्छ्राल्लब्धमभिप्रेतं यदि कौसल्य नश्यति । तदा निर्विद्यते सोऽर्थात् परिभग्नक्रमो नरः (भा० शां० १०४।४०) । **निर्विद्यते=निर्वेदमापद्यते, अर्थे विषये लब्धव्ये विरक्तो भवति, निरीहः संजायते**

निरविद्यत धर्मात्मा जीवितेन वृकोदरः (भा० द्रोण० १३२।२०)। **जीविते वीतस्पृहोऽभूदित्यर्थः। नाल. परं जिजीविषाऽस्याभूदित्यभिप्रायः।** निरविद्यत धर्मात्मा जीवितेन परन्तप (भा० भीष्म० ११५।१०)। पश्यन्तु दुःखितां कृष्णां स च निर्विद्यतां पुनः (भा० वन० २३७।२१)। **पुनर्निर्विद्यताम्=भूयो नैराश्यमापद्यताम्।** साङ्ख्ययोगविभागज्ञो निर्विवित्सुः (भा० सभा० ५।७)। **निर्वेदो युद्धोपरतिः, तं कर्तुमिच्छन्निति नीलकण्ठः।** निर्वेदाच्च तमेवार्थमनुध्यायन्पुरं ययौ (हरि० १।२३।४)। **निर्वेदः शोकः।** अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम्। अनिर्वेदो हि सततं सर्वार्थेष्वनुवर्तते (रा० ५।१२।१०)॥ **निर्वेदो नैराश्यम्। अनिर्वेदस्तदभावः। आशाभङ्गस्य विरहः।** न चास्य जीविते राजन्निर्वेदः समजायत (भा० स्त्री० ५।१०)। **जीविते निर्वेदः=जिजीविषाविरहः। नातः परं जीवितुमिच्छामीति बुद्धिर्नाजायतेत्यर्थः।** तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च (गीता २।५२)। **निर्वेदो विरक्तिरौदासीन्यम्।** परिभवान्निर्वेदमापद्यते (मृच्छ० ८।१२)। **भग्नाशो जायते।** जन्मना यस्तु निर्विण्णो मरणेन तथैव च। आधिभिर्व्याधिभिश्चैव त देवा ब्राह्मणं विदुः (शङ्ख० ७।१०)। **निर्विण्णोऽखिन्न इत्यर्थः प्रतिभाति।** निर्विण्णोऽभूत्स जीवितात् (भा० द्रोण० १३६।१)। **जीवितान्निर्विण्णः=जीविते विकाङ्क्षः।** निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा (पञ्चत० १।२४०)। **निर्विण्णो विरक्तोऽपरक्तः। स्वामिन्यभक्त इत्यर्थः।** हृष्टे जहृषे निर्विवेदानुकूल्यतः (राज० ६।२६२)। **अत्र निर्विविदे इति तु युक्तम्। विदेः सत्तायाम् इत्यस्य तिङन्तेषु निर्वेदार्थस्य दर्शनात्।**

—**विद् (विद्लृ लाभे, विद ज्ञाने)।** तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् (बृ० उ० ३।५।१)। **निर्विद्य निःशेषेण विदित्वेति शङ्करः। प्राप्येति गोपालानन्दस्वामी।** सतो बन्धुमसति निरविन्दन् (ऋ० १०।१२९।४)। **अन्विष्याविन्दन् प्राप्नुवन्।** अथ स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः (ऋ० १।१२०।१२)। **निर्विदे=निर्मोक्षाय, परिहृतये।**

—**विश् (विश प्रवेशने)।** ज्योत्स्नावतो निर्विशति प्रदोषान् (रघु० ६।३४)। **निर्विशति=ससुखमनुभवति।** क्रीडारसं निर्विशतीव बाल्ये (कु० १।२९)। **उक्तोऽर्थः।** कर्मणि भृतौ (पा० ३।२।२२)। **सूत्रे भृतिर्वेतनं कर्म निर्वेश इति काशिका। निर्वेशो भृतिभोगयोरित्यमरः।** तदस्मिन्दीयते...(५।१।४७) सूत्रे—**रक्षानिर्वेशो राजभागः शुल्क इति वृत्तिः।** भर्तुः पिण्डस्य निवशं कर्तुमिच्छामि (रा० ३।३३।२५)। **उक्तोऽर्थः।** चरितनिर्वेशस्य भोक्तव्यम् (आप० ध० १।१८।१२)। **निर्वेशः प्रायश्चित्तम्।** चरितनिर्वेशं सवनीयं कुर्युः (बौ० ध० २।१।१।३७)। **उक्तोऽर्थः।** करिष्ये वधनिर्वेशम् (भा० पु० १०।७८।३३)

**उक्तपूर्व एवार्थः ।** अनिर्वेशः (भा० पु० ५।२६।१८)। **अकृतप्रायश्चित्त इत्यर्थः ।** आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलं (ययौ) (भा० पु० १०।१०।२६) । **निर्वेशः प्रवेशः । अपूर्वोऽर्थः ।** अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः (भा० पु० १०।४४।३६) । **निर्वेशो वैरनिर्यातनम् । अयं चाप्यन्यत्र न दृश्यतेऽर्थः ।** अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः (भा० वन० ३६।१६) । **राजपिण्डस्य निष्क्रयो देय इत्यर्थः ।** निर्विष्टं वैश्यशूद्रयोः (गौ० ध० २।१।४२) । **निर्विष्टं कर्मणोपात्तम्, भृत्या समुपलब्धम् अर्जितम् ।** सङ्ग्रामे निर्विष्टसहस्रबाहुः (रघु० ६।३८) । **सङ्ग्रामे निर्विष्टा अनुभूताः** प्रत्यक्षीकृताः **सहस्रं बाहवो यस्य** (स कार्तवीर्यः)। स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् (भा० पु० १।२।३३)। **निर्विष्टोऽनुप्रविष्ट इत्यर्थं विवक्षति ।** व्यक्तं निनिरावुपसर्गौ संकिरति कविः । भर्तृपिण्डस्य कालो यं निर्वेष्टुम् (रा० ६।६७।५) । **निर्वेष्टुम्=निर्वेशं दातुम्, निष्क्रयमर्पयितुम् ।** निर्वेष्टुकामस्तु पुरा अष्टावक्रो महातपाः (भा० अनु० १६।११) । **दारसङ्ग्रहार्थी, गृही बुभूषुः । अदेशे निरो योगः ।** निर्वेष्टव्यं मया तत्र प्राणानपरिरक्षता (भा० उ० १४६।१५) । **भुक्तस्य तदन्नादेरानृण्यं मया सम्पाद्यमित्याह ।** निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षिताम् (भा० पु० १।५।२३) । **सम्यं विवत्सताम् इति विवक्षति । शब्दमर्यादया तु नायमर्थो लभ्यः, परं शब्दमर्यादानुरोधे नायमादृतः कविः ।** अस्ति नूनं कर्मकृतं पुरस्तादनिर्विष्टं पापकं धार्तराष्ट्रैः (भा० उ० ४८।८) । **अनिर्विष्टमभुक्तम् ।** ज्येष्ठेऽनिर्विष्टे कनीयान्परिवेत्ता भवति परिविन्नो ज्येष्ठः (कृत्यकल्पतरौ द्वितीये खण्डे १०६ पृष्ठे) । **अनिर्विष्टः=अकृतपरिणयः । वस्तुतोऽपपाठ एषः । अनिविष्ट इत्येव पाठः ।** पुत्रस्नेहस्तु निर्विष्टो येन सुव्यक्तकारिणा (पञ्चत० २।३८) । **निरूढः, सम्यङ् निरूपितः ।** भो दर्शितः स्नेहः । निर्विष्टः पुरुषकारः (प्रतिज्ञा० ३) । **उक्तोऽर्थः ।** निर्विष्टः सर्वभावेन धनञ्जयमवेक्ष्य च (भा० उ० १५७।३०) । **निर्विष्टः=अभिनिविष्टः । अथ** मधुवनितानां नेत्रनिर्वेशनीयं (यौवनम्) (रघु० १८।५२) । **नेत्रनिर्वेशनीयं नयनभोग्यं नेत्रपेयं मधु (मधुरूपं यौवनम्) ।** निर्वेष्टव्यं शरीरं यैर्व्रतकैः पुण्यकैरपि (हरि० २।८०।१) । **निर्वेष्टव्यमलङ्करणीयम् । निर्वेष्टव्यं भोक्तव्यं भोग्यमिति मुख्योऽर्थः । शरीरं च संस्कृतमेव भोगार्हं भवतीति प्रोक्तार्थलब्धिः ।**

—वृ (**वृञ् वरणे, वृङ् संभक्तौ**) । निर्ववार मधुनीन्द्रियवर्गः (शिशु० १०।३) । **सुखं वेदयते स्म, सुखं निर्विवेश ।** निर्वरिता निर्वरीता (काशिकायां स्वरान्तसेट्धातुकारिकायामुदाहरणम्) । मार्क० पु० १००।१९ इत्यत्र निवृत इति निर्वाणाचिरित्यर्थे **प्रयुक्तम् ।** तदाऽयं सर्वभूतात्मा सुखं स्वपिति निर्वृतः

(मनु० १।५४) । **निर्वृतः=निवृत्तजाग्रत्स्वप्नव्यापार इति कुल्लूकः । निर्वार्यः** **कार्यकर्ता** यः सम्पन्नः सत्त्वसम्पदा (अमर)। निर्वार्यः=**निश्चयेन व्रियसे ।** हृदय निर्वृतं तेऽस्तु (रा० ३।४५।२५)। **निर्वृतं सुखितम्** । निर्वृते स्वः (शा० २) । **परितुष्टे इत्याह** । तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते (वेणी० ६।१)। **निर्वृते=शान्ते, निर्वाणतां गते ।** व्रजति निर्वृतिमेकपदे मनः (विक्रम० २।६) । **निर्वृतिरानन्दः, प्रमोदः** । न जातु बाला लभते स्म निर्वृतिं तुषारसङ्घातशिलातलेष्वपि (कु० ५।५५)। **निर्वृतिं विश्रान्तिम् ।** द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम् (भा० वि० ४।१४) । **निर्वृतिः संसारमोक्षः** । विचार्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः (भा० १२। १४१४) । **परितोषः, आनन्दः** । भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम् (सुश्रुत० १।१५२।१२) । **निर्वृतिः शमः ।**

—**वृत् (वृतु वर्तने)** । हस्तपादशिरसां पञ्च पिण्डका **निर्वर्तन्ते** (सुश्रुत० १।३२२।८-९) । **निर्वर्तन्ते । निष्पद्यन्ते** । निर्वर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः (मनु० ७।६१) । **निर्वर्तेत=सिध्येत्** । निरवर्त्स्यन्न चेद्वार्ता सीताया वितथैव नः । अकल्पस्यद्द्युतिः सर्वा (भट्टि० ८।६९)। **निरवर्त्स्यत्=असेत्स्यत् । अलभ्यतेति तात्पर्यार्थः । वार्ता प्रवृत्तिरुदन्तः** । निर्वर्त्स्यत्यृतुसङ्घातः (भट्टि० १६।६) । **सर्वदा न भविष्यतीति जयमङ्गला । कथमस्यार्थस्योपलब्धिरभूदिति भट्टिर्वा वेद जयमङ्गलाकारो वा ।** अङ्गारान् निर्वर्त्य (श० ब्रा० १२।८।१।६)। **अत्र णिच्सहितस्य धातोरुद्धरणमर्थः ।** अद्य निर्वर्तयिष्यन्ति क्षत्रमांसानि दानवाः (हरि० ३।५६।५३) । **अपनेष्यन्तीत्यर्थः** । लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् (मनु० १।३१) ॥ **निरवर्तयत्=निरपादयत्, अकल्पयत् । अजनयत् ।** निर्वर्त्यतां तावदयं कन्याभावरमणीयः कालः (स्वप्न० २) । **अतिवाह्यताम् । निर्विश्यतामिति त्वार्थिकोऽर्थः ।** निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलम् (यो० सू० २। ४३ भाष्ये) । **निर्वर्त्यमानमेव प्रक्रियमाणमेव, चर्यमाणमेव** । ऋते वर्षान्नि कौन्तेय न जातु निर्वर्तयेत् फलम् (क्षेत्रम्) (भा० उ० ६६।२) । **न साधयेदित्यर्थः । न पाचयेदिति वा ।** मङ्गलोदग्रं तदहो निरवर्तयत् (राज०३।२४९) । निरवर्तयत्=**अयापयत्** । निर्वृत्तम् (४।२।६८) । **कुशाम्बेन निर्वृत्ता निर्मिता नगरी कौशाम्बी ।** मुद्गलाद् ब्रह्म निर्वृत्त गोत्रं मौद्गलसंज्ञितम् (भा० पु० ९।५१।३३)। **निर्वृत्तं जातमुद्भूतम् । संभूतम्** । कारणेन निर्वृत्तं कृत्रिमं वैरम् (पञ्चत०) । निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे (कु०७।११) । **निर्वृत्तः सम्पादितः** । सा तस्य कर्मनिर्वृत्तैर्दूरं पश्चात्कृता फलैः (रघु० १७। १८) । **कर्मनिर्वृत्तैः=कर्मभिः पुराकृतैर्निष्पन्नैः** । निर्वृत्ते तु क्रतौ तस्मिन्हय-

मेधे महात्मनः (रा० १।१८।१)। निर्वृत्ते=समाप्ते=अवसिते।

—वृष् (वृषु सेचने)। निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा (रघु० ४।१५)। निःशेषं वृष्टा निर्वृष्टाः।

—वेष्ट् (वेष्ट वेष्टने)। शेप इव निर्वेष्टितः (नि० ५।८)। अनावृतोऽसंवृत इत्यर्थः। निःशब्दो धात्वर्थं विपरीतयति। वेष्टनमावरणं हि धातोरर्थस्तस्य विपर्यासोऽनावरणम्। एकैकस्मिन्मण्डले मुहूर्तस्य द्वौ द्वावेकषष्टिभागौ दिवसक्षेत्रस्य निर्वेष्टयन् (=ह्रापयन्)।

—व्यध् (व्यध ताडने)। निरविध्यत् प्रतोदेन नासिकायां पुनः पुनः (भा० अनु० २६।१०)। निः शेषम् अविध्यत्। तेन मर्मणि निर्विद्धः शरेणानुपमेन हि (रा० ३।४४।२०)। निर्विद्धः क्षतः, विक्षतः।

—शस् (शसु हिंसायाम्)। अवशसा निःशसा यत् पराशसोपारिम (अथर्व० ६।४५।२)। निःशसा=निःशेषेण हिंसनेन।

—श्वस् (श्वस प्राणने)। स्तनकम्पक्रियालक्ष्यैर्निःश्वसितैरिव (हृदयम्) (विक्रम० २।१९)।

—सञ्ज् (षञ्ज सङ्गे)। अनित्यभूतो निःसङ्गं वध्यतां वध्यतामपि (रा० २।२१।१२)। निःसङ्गम्=निःस्नेहम्=अनादरेण, तृणवत्। भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया भक्त्या कार्यधुरं वहन्ति (मुद्रा० १।१४)। निःसङ्गमाः=निःसङ्गाः=निष्प्रयोजनाः। स्वार्थपराङ्मुखा इत्यर्थः। निःसङ्गं प्रधिभिरुपाददे। विवृत्तिः (कि० ७।१२)। निःसङ्गं निष्प्रतिबन्धम्। निःसङ्गता मुक्तिपदं यतीनां सङ्गादशेषाः प्रभवन्ति दोषाः (वायु० पु० ४।२)। सङ्ग आसङ्गः आसक्तिः, ममत्वम्।

—सह् (षह मर्षणे)। अये विरम निःसहासि जाता (मालती० ३)। निःसहा=श्रान्ता। ग्लाना।

—सिच् (षिच क्षरणे)। शुचिः—निष्पिक्तमस्मात्पापकमिति नैरुक्ताः (नि० ६।६।१)। निष्षिक्तं निष्कृष्यान्यत्र सिक्तम् इति दुर्गः।

—सू (षू प्रेरणे)। निर्लक्ष्म्यं ललाम्यं निरराति सुवामसि (अथर्व० १।१८।२)। अस्माच्छरीरान्निरवशेषमुत्सारयाम इत्यर्थः।

—सृ (सृ गतौ)। ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः (मनु० ६।४)। निःसृत्य=निर्याय। यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः (रघु० २।३६)। निःसृतानां निःस्रुतानाम्।

—सृज (सृज् विसर्गे)। वज्रेण हत्वा निरपः ससर्ज (ऋ० १।१०३।२)। निःससर्ज=विसृष्टवान्। इदमहं तप्तं वार्बहिर्धा यज्ञान्निः सृजामि (वा० सं०

५।११)। **निःसृजामि=निष्क्रमयामि।** देवा मुञ्चन्तो असृजन्निरेणसः (अथर्व० २।१०।८)। **निरसृजन् निरगमयन्।** तस्यै त्रीन्भागान्पुरस्तादुपदधाति निःसृजति चतुरः (श० ब्रा०)। **निःसृजति=हापयति।**

—**स्तन् (स्तनगदी देवशब्दे)।** निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः (भा० उ० १४२।१२)। **निष्टनन्ति=गर्जन्ति=बृंहन्ति।**

—**स्था (ष्ठा गतिनिवृत्तौ)।** मद्राप्लक्षान्निस्तिष्ठन्ति (अथर्व० ५।५।५)। **निस्तिष्ठन्ति=प्रभवन्ति=उद्भवन्ति।** नळा इव सरसो निरतिष्ठन् (ऋ० ८।१।३३)। **निरतिष्ठन्=आरोहन्।** यदा वै निस्तिष्ठत्यथ श्रद्दधाति (छां० उ० ७।२०)। **निस्तिष्ठति निष्ठामाप्नोति। निष्ठावानेव श्रद्धावान्भवतीत्यर्थः।** यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति (छां० उ० ८।१।९)। **निस्तिष्ठन्ति=निष्पादयन्ति, निर्मिमते।** निष्ठितेषु पान्नेजनेषु (श० ब्रा० १३।५।२।२)। **सम्भृतेषु=आहृतेषु। निष्ठा निष्पत्तिनाशान्ताः (अमरः)। मनो निष्ठा-**शून्यं भ्रमति च किमप्यालिखति च (मालती० १।८१)। **निष्ठा स्थैर्यम्।** तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे (मनु० ८।२२७)। **निष्ठा निष्पत्तिः भार्यात्वेन।**

—**स्रु (स्रु गतौ)।** तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्म सहापत्यादेतस्मात् (आप० ध० १।५।२)। **निःसारयतीत्यर्थः।** क्रेयो वा निःस्रवस्तस्माद् वणिजां लाभकृत्स्मृतः (याज्ञ० २।२५१)। **निःस्रवोऽवशेषः।**

—**हद् (हद पुरीषोत्सर्गे)।** पश्यामि बहुलान्राजन्वृक्षानुदकसंश्रयान्। सारसानां च निर्हादमत्रोदकमसंशयम् (भा० वन० ३१२।८)। **निर्हादो विष्ठा, पुरीषम्।**

—**हन् (हन हिंसागत्योः)।** प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणम् (नि० १२।१४)। **आहत्य निष्कासयामास।** तत्पूषा प्राश, तस्य दतो निर्जघान (श० ब्रा० १।७।४।७)। **निर्जघान=बभञ्ज। भग्नदन्तः पूषेति प्रसिद्धिः।** कील आहन्यमानः प्रतिकीलं निर्हन्ति (नञ् २।२।६ सूत्रे भाष्ये)। **निर्हन्ति=निर्गमयति, उत्खनति।** स दोषो निर्घानिष्यते (शास्त्रपूर्वक इति वा० भा०)। **निःशेषेणापहनिष्यते।** निर्घातश्च महानभूत् (भा० सभा० ८।२२)। **निर्घातो वज्रशब्दः।** अहह दारुणो दैवनिर्घातः (उत्तर० २)। **निर्घातः प्रहारः।** वायुना निहतो वायुर्गगनाच्च **पतत्यधः। प्रचण्डघोरनिर्घोषो निर्घात इति कथ्यते** (व०बृ०सं०)॥ त (देवाः) एभ्यो लोकेभ्यो निरघ्नन् (असुरान्) (गो० ब्रा० उ० २।७)। **निरघ्नन्=पराणुदन्।** त (असुराः) एभ्यो लोकेभ्यो निर्हता ऋतून् प्राविशन् (गो० ब्रा० उ० २।७)। **निर्हताः=प्रहृतप्रद्राविताः।**

—हृ (हृञ् हरणे)। अन्तःपुरगतां वार्तां निर्हरेयुरलक्षिताः (का० नी० सा० १३।४५)। **निर्हरेयुः=निष्कर्षेयुः। वार्तां प्रवृत्तिं विभावयेयुरिति तात्पर्यार्थः।** यन्नर्तनो भवत्यभीक्ष्णशः प्रेतान्निर्हरन्ते (गो० ब्रा० पू० २।७)। **निष्कालयन्तीत्यर्थः।** समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम् (रा० ४।२५।१८)। **निर्हरिष्यन्ति=श्मशानाय विनेष्यन्ति वक्ष्यन्तीत्यर्थः।** त आत्मानं निर्हरन्तीह देहान्मुञ्जादिषीकामिव सत्त्वसंस्थाः (भा० उ० ४४।७)। **निर्हरन्ति=प्रवहन्ति=पृथक् कुर्वन्ति।** न च वासांसि वासोभिर्निर्हरेत् (मनु० ८।३९६)। **मिश्रयेत् परिवर्तयेद्वा।** हत्वा नृपान्निरहरत् क्षितिभारमीशः (भा० पु० ११।१।२)। **निरहरत्=पर्यहरत्।** यत् किञ्चिद् दोषमास्राव्य न निर्हरति कायतः (चरक० सूत्र० २६।८७)। **न निर्हरति नापनुदति, नापाकरोति।** उद्धुनीयात सत्केतून् निर्हरेताग्र्यचन्दनम् (भट्टि० १९।८)। **निर्हरेत=निर्गमयेत। वनादिति शेषः। आहरेतेत्यर्थः। नायं युक्तरूपः प्रयोगः। आङ् प्रयोक्तव्यः।** तानि निर्हरतो लोभात् (मनु० ८।३९९)। **निर्हरतः=देशान्तरं नयतः।** गवां निर्हारनिर्मुक्ताद् यावकात् तद्विशिष्यते (भा० अनु० २६।३८)। **निर्हारः=आहारनिर्गमनमार्गः।** कुर्याद् विहारमाहारं निर्हारं विजने सदा (शुक्र० ३।११२)। **निर्हारम् मलमूत्रविसर्गम्।** आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्याः (व० धर्म० ६।९)। **उक्तोऽर्थः।** न निर्हारं स्त्रियः कुर्युः कुटुम्बाद् बहुमध्यगात् (मनु० ९।१९९)। **निर्हारं रत्नालङ्काराद्यर्थं धनसञ्चयम् इति कुल्लूकः। निर्हारोऽभ्यवकर्षणम् (अमरः)। निर्हारो युक्त्या निःसाराकर्षणमिति स्वामी।** कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् (भा०पु० १०।८४।२९)। **निर्हारः परिहारः। अत्रार्थे स्वातन्त्र्यं कवेः।** इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च। निर्हारी संहतः स्निग्धो रूक्षो विशद एव च (भा० शां० १८४।२८)॥ **निर्हारी सर्वगन्धाभिभावी। हिङ्ग्वादो यथा।** तांस्तान् विषविशेषांश्च तत्तन्निर्हरणानि च (शि० भा० ३०।२०)। **निर्हरणानि परिहारोपायान्, भेषजानि। अयमप्यत्रार्थे भावतकारमनुगतः।** यदर्थिता निर्हृतवाच्यशल्यान् प्राणान्मया धारयितुं चिरं वः (रघु० १४।४२)। **निर्हृतमुद्धृतम्।** निर्हृत्य तु व्रती प्रेतं न व्रतेन वियुज्यते (मनु० ५।९१)। **निर्हृत्य=निर्याप्य=निरुह्य।** शल्यं निर्हृत्य समायत्य संनह्यति (काठक० १२।१)। **उद्धृत्येत्यर्थः।** चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः (मनु० ७।४)। **निर्हृत्य=आकृष्य।**

## निरति (निर्+अति)

—इ (इण् गतौ)। तद्भवान् वृत्तसम्पन्नः स्थितः पथि निरत्यये (रा० ४।

२६।१२)। निरत्ययः पन्थाः=अप्रतिभयो मार्गः, निष्कण्टक इत्यर्थः। निरत्ययं साम न दानवर्जितम् (कि० १।१२)। निरत्ययं निर्बाधम्, अच्छलमित्यर्थः। शक्तिरर्थपतिषु स्वयंग्रह प्रेम कारयति वा निरत्ययम् (कि० १३।६१)। अत्ययो व्यभिचारः, सोऽविद्यमानोऽस्येति निरत्ययम्। अपराधेप्यविकारीति तात्पर्यार्थः।

## निरधि (निर्+अधि)

—स्था (ष्ठा गतिनिवृत्तौ)। नैतानि (अस्त्राणि) निरधिष्ठाने प्रयुज्यन्ते कथंचन ((भा० वन० १७५।१६)। निरधिष्ठाने लक्ष्याभावे सति।

## निरनु (निर् अनु)

—इ (इण् गतौ)। स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत्कृतम्। निरन्वयं भवेत् स्तेयम् (मनु० ८।३३२)। निरन्वयं स्वामिपरोक्षम्। प्रागाधारनिरन्वयप्रमथनादुच्छेदमेवाकरोः (महावीर० ३।१३)। निरन्वयप्रमथनं निःशेषो विध्वंसः। नाशो द्विविधः। सान्वय-विनाशो निरन्वय-विनाशश्चेति। तत्र दीपादेरुत्तरोत्तरज्वालोदयशिरस्कः पूर्वज्वालाविनाशः सान्वयविनाशः। निर्वापणादिना सजातीयज्वालोदयानर्हविनाशस्तु निरन्वयविनाश इति वीरराघवष्टीकाकारः। का त्वमेकाकिनी भीरु निरन्वयजने वने (भट्टि० ५।६६)। निरन्वयजने निर्गतान्वयिजने, निरनुगे इत्यर्थः। अन्वेतीत्यन्वयोऽनुगोऽनुयायी, कर्तर्यच्।

—युज् (युजिर् योगे)। निरनुयोज्यैर्हेतुभिस्तस्य मौनव्रतमिवोपदिश्य (अवदा० जा० २३)। निरनुयोज्यैरप्रतिवक्तव्यैः।

## निरप (निर्+अप)

—इ (इण् गतौ)। उपायो निरपायोऽयमस्माभिरभिचिन्तितः (रा० १। १०।२)। अपायोतिक्रमो व्यभिचारः। निरपायोऽव्यभिचारी। फलाव्यभिचारी अमोघ इत्यर्थः।

—ईक्ष् (ईक्ष दर्शने)। न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे (कि० ११। ३९)। निरपेक्षं स्वतन्त्रम्। यदागमेन शास्त्रेणार्थि न भवतीत्यर्थ। समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् (मनु० ६।४१)। समुपोढेषु उपनमितेषु केन चित्स्वसामीप्यं नीतेषु कामेषु काम्येष्वर्थेषु निरपेक्षो वीतस्पृहः संन्यस्येदित्याह। निरपेक्षो न कर्तव्यो भृत्यैः स्वामी कदाचन (हितोप० २।४२)। निरपेक्षो निराकाङ्क्षः। निरातङ्को निराशङ्को वा।

### निरभि (निर्+अभि)

—**या (या प्रापणे)**। निर्याणेऽभियाने च राजमार्गं...गच्छेत् (कौ० अ० १।२१।१८)।

### निरव (निर्+अव)

—**दय्** (दय दानगतिरक्षणहिंसादानेषु)। रक्षांस्येव तत् स्वेन भागधेयेन यज्ञान्निरवदयते (ऐ० ब्रा० २।७)। **निरवदयतिः किञ्चिद् दत्त्वा प्रक्षालनार्थ इति षड्गुरुशिष्यः**। दानवानेव वीरं निरवदायाग्नि पुनराधत्ते (तै० सं० १।५।२।१)। अस्नैव रक्षांसि निरवदयते (तै० सं० ६।३।६।२)। **अस्ना=असृजा रुधिरेण**।

—**यज् (यज देवपूजासङ्गतिकरणदानेषु)**। ऋतुभ्य एव रुद्रं निरवयजते (का० सं० २१।६)। **निरवयजते=निर्ददाति**।

—**सो (षो अन्तकर्मणि)**। शूद्राणामनिरवसितानाम् (पा० २।४।१०)। **निरवसानं बहिष्करणम् पात्रात्। यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिता इति काशिका**। पात्रादनिरवसितानाम् (कामसूत्रे १।५।३)। **निरवसिताः पात्राद् बहिष्कृता इति जयमङ्गला**। तस्माज्ज्येष्ठं पुरुषं धनेन निरवसाययन्ति इति श्रुतिः (बौ० ध० २।२।३।५, तै० सं० २।५।२)। अथापि पुत्रं धनेन निरवसाययन्ति (आप० ध० २।६।१४।१२)। **धनेनोपतोष्य पृथक् कुर्वन्ति इति सर्वत्र समानोऽर्थः**।

### निराङ् (निर्+आङ्)

—**इ (इण् गतौ)**। एवा ते गर्भ एजतु निरैतु दशमास्यः (ऋ० ५।७८।७)। **निरैतु=निष्क्रामतु**। अहे निरैतु ते विषम् (अथर्व० ४।४।२१)। **उक्तोऽर्थः**।

—**कृ** (डुकृञ् करणे)। माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् (छां० उ० ८।१५।२)। **माऽहं ब्रह्म त्याक्षम्**। निराकरोतु वेदांश्च यस्ते हरति पुष्करम् (भा० अनु० ९४।२७)। **निराकरोतु=त्यजतु, आत्मीयान्मा स्म करोत्। प्रत्यादिष्टो निरस्तः स्यात् प्रत्याख्यातो निराकृत इत्यमरः। निराकृतो जातेर्बहिष्कृत इत्यर्थे हर्षचरिते सरस्वत्याः शापे**। उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः (भट्टि० ६।१००)। **निराकृतः प्रत्यादिष्टः, निरस्तः**। नाक्रमन्त तयोस्ते (शापाः) वरदाननिराकृताः (भा० आदि० २१०।१५)। **निराकृताः=व्यर्थीकृताः। आर्थिकोर्थः**। निराकृतनिमेषाभिर्नेत्रपङ्क्तिभिः। **निराकृतो निमेषो याभिः ताभिः। त्यक्तनिमेषव्यापाराभिरित्यर्थः। निर्निमेषाभिरित्यर्थः**। भविष्यत्यचिरात्साधो कलिनापि निराकृतः (भा० पु० ११।

७।४)। **निराकृतोऽनुसृत्यासादित इत्यर्थं विवक्षति । अनृषिरपि वाचि स्वतन्त्रोऽयं कविः ।** याश्च्यवन्तेऽम्बरात्तारा: काले काले निराकृता (रा० ५।१३।३१)। **निरस्ताः पराणुन्नाः ।** न हि तेप्युपशाम्यन्ति निराकृता वाऽनिराकृताः (भा० ३।१४०५)। **ते राजानो राजपुत्राश्च । निराकृता इति व्याख्यातचरम् ।** कृशानामबलानां चतुःशता गा निराकृत्य (छा० उ० ४।४।५)। **निराकृत्य =पृथक् कृत्वा। निष्कास्य, उद्वीयेत्यर्थः ।** यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः (मनु० ३।१५४)। **निराकृतिः पञ्चमहायज्ञानुष्ठानरहित इति कुल्लूकः ।** यस्त्वाधायाग्निमाशास्य देवादीन्नैभिरिष्टवान् । निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः (गो० स्मृ० ३।१११)॥ अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः (व० धर्म० २८।१७)। **उक्तोऽर्थः ।** यश्च सर्वान् वर्जयति सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः (आप० ध० १।१८।३३)। **निराकृतिर्निःस्वाध्यायः । तथा चामरः पठति—निःस्वाध्यायो निराकृतिः ।** ग्रामधान्यं यथा शून्यं यथा कूपश्च निर्जलः । यथा हुतमनग्नौ च तथैव स्यान्निराकृतौ (भा० शां० ३६।४८)। **निराकृतिर्मूर्ख इति नीलकण्ठः ।** निराकारा निरानन्दा···अयोध्या (रा० २।११३।२४)। **निराकारा निरलङ्कारा ।** निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः (मनु० ३।१५४ इत्यत्र कुल्लूकोद्धृतं छन्दोगपरिशिष्टम्)। एवमेव निराकर्ता यश्चाग्नीनपविध्यति । त्यजत्यकारणे यश्च पितर मातरं गुरुम् (भा० शां० १६५।६१-६२)।

**—क्रम् (क्रमु पादविक्षेपे)।** रोमाञ्चलक्ष्येण स (अभिलाषबन्धः) गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः (रघु० ६।८१)। **निराक्रामत्=निरगच्छत्=आविरभवत् ।**

**—दिश् (दिश अतिसर्जने)।** निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलंधन (मनु० ८।१६२)। **निरादिष्टधनः=निसृष्टधनः ।**

**—धा (डुधाञ् धारणपोषणयोः)।** ब्रह्मैव विद्वानेष्यो यः क्रव्यादं निरादधत् (अथर्व० १२।२।३६)। **निरादधत्=बहिष्कुर्यात् ।** सर्वं मर्त्यस्य तन्नास्ति क्रव्याच्चेदनिराहितः (अथर्व० १२।२।३५)। **अनिराहितः=अनिष्कासितः ।** तमिन्द्र इध्म कृत्वा यमस्याग्निं निरादधौ (अथर्व० १२।२।५४)। बहिष्कनीनिके निरादध्युः (का० सं० ३४।८, पञ्चविंश० १७।१२।२)। **उदितपूर्व एवार्थः ।**

**—यम् (यम उपरमे)।** निरायतपूर्वकायाः (शा० १।८)। **दीर्घीकृतकायपूर्वभागाः ।** निरायत्याश्वस्य शिश्नम् (श० ब्रा० १३।५।२।२)। **निरायत्य =निराकृष्य ।**

—वह् (वह प्रापणे)। नावो हिरण्ययीरासन्याभिः कुष्ठं निरावहन् (अथर्व० ५।४।५)। निरावहन् बहिरनयन्।

निरुप (निर्+उप)

—स्कृ (डुकृञ् करणे ससुट्कः)। शमेन तपसा चैव भक्त्या च निरुपस्कृतः (भा० शां० २७१।१४)। निरुपस्कृतः=भोगवर्जितः।

—निरुपाङ् (निर्+उप+आङ्)

—ख्या (ख्या प्रकथने)। निरुपाख्यम्=तुच्छम्, अदृश्यम्, असद्, अवस्तु।

निर्वि (निर्+वि)

—क्रम् (क्रमु पादविक्षेपे)। भित्त्वा कुक्षिं निर्विचक्राम विप्रः (भा० आदि० ७६।६१)। निश्चक्रामेत्यर्थः। विशब्दो न विशेषकृत्।

—वस् (वस निवासे)। द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः (भा० वन० ६५।४१)। अतीतानीत्यर्थः।

—वह् (वह प्रापणे)। निर्व्यूढं प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् (मुद्रा० २।१८)। निर्व्यूढं निर्व्यूढिः, साधना, निष्पादना, प्रतिपालनम्, निर्वर्तनम्। मुहूर्तनिर्व्यूढविस्मयः (मालती० ७)। निर्व्यूढो विवृद्धः। हा तात जटायो निर्व्यूढस्तेऽपत्यस्नेहः (उत्तर० ३)। निर्व्यूढः प्रमां प्रतिष्ठां वा नीतः। सत्योऽयं स्नेह इति व्यवहारेण साधु दर्शितमिति तात्पर्यम्। निर्व्यूढोद्वाहमङ्गलः (कथा० ३५।१५७)। निर्व्यूढ निर्वृत्तम्। एव वदति निर्व्यूढकार्ये यौगन्धरायणे (कथा० १७।१५६)। निर्व्यूढं सिद्धं पूर्णम्। येन यूय गजप्रख्या निर्व्यूढा वारणावतात् (भा० आदि० १६२।१६)। निर्व्यूढा निर्गमिताः, निःसारिताः, निर्वाहिताः। निरुह्य त्राता इत्यर्थः। निर्व्यूढा रणसाहसव्यसनिता (प्रियद० १।६)। निर्व्यूढा संन्यस्ता त्यक्ता। पूर्ति नीतेति शब्दार्थः। पूर्त्या परिसमाप्त्या त्यागो लक्ष्यते। लक्ष्योऽप्येषोऽर्थोऽन्यत्र दुर्लभ इत्यवश्यमभ्युपेयम्।

निर्व्याङ् (निर्+वि+आङ्)

—दा (डुदाञ् दाने)। या ते शक्तिस्तया सम्यक् तावत्स्वमुखं निर्व्यादेहि (अवदा० जा० ३४)। सुष्ठु विवृतं कुर्वित्यर्थः।

निष्प्र (निस्+प्र)

—पत् (पत्लृ गतौ)। निर्बलासेतः प्र पत (अथर्व० ६।१४।३)। निष्प्रपत निष्क्रम्य प्रकर्षेण दूरेण गच्छेत्याह।

# दुर् (दुस्)

**—कृ** (**(डुकृञ् करणे)**। काँल्लोकांस्तु गमिष्यामि कृत्वा कर्म सुदुष्करम् (भा० शां० २७।१८)। **दुष्करं दुःसाधम्**। विनाशाय च दुष्कृताम् (गीता ४।८)। **दुष्टकर्मकारिणाम्, दुरात्मनामित्यर्थः**। पुनः पुनर्दुष्कृतिनं निनिन्द (रघु० १४।५७)। **दुष्कृती दुर्जनः**।

**—क्री** (**डुक्रीञ् द्रव्यविनिमये**)। क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी (नारदप्रोक्त मनुस्मृ०)। **अल्पार्घं महार्घेण क्रीतं दुष्क्रीतं भवति**।

**—गम्** (**गम्लृ गतौ**)। असत्यशीला विकृता दुर्गा अहृदयाः सदा (रा० २।३६।२२)। **दुर्गा दुष्टाभिसरणादिगतिशीलाः**।

**—चर्** (चर गतिभक्षणयोः)। चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा (रघु० ८।७६)। **दुःखेन चरितुं शक्यं दुश्चरम्**। तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति (मनु० ११।२६३)। **दुश्चरितम् पापम्**।

**—जृ** (**जृष् वयोहानौ जॄ वयोहानौ**)। राजश्रीर्दुर्जरा तस्य नवत्वे भूभुजोऽभवत् (रा० ५।१६)। **दुःखेन जरयितुं (जरीतुं) शक्या दुर्जरा**।

**—तॄ** (तॄ प्लवनतरणयोः)। तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् (रघु० १।२)। **दुःखेन तरीतुं शक्यं दुस्तरम्**।

**—पूर्** (**पूरी आप्यायने, दिवादिश्चुरादिश्च**)। दुष्पूरोदरपूरणाय पिबति स्रोतः पतिं वाडवः (भर्तृ०)।

**—युज्** (**युजिर् योगे**), आयुधपरिग्रहं यावदध्यारूढो दुर्योगः (उ० ६)। **दुर्योगः=औद्धत्यं वैयात्यम्**।

**—स्था** (**ष्ठा गतिनिवृत्तौ**)। दुःस्थं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि (अमरु०     )।

**—स्पृश्** (**स्पृश संस्पर्शने**)। दुःस्पृष्टश्चेति विज्ञेय लृकारः प्लुत एव च (पा० शिक्षा० ५)। **दुःस्पृष्टः—ईषत्स्पृष्टप्रयत्नः। यणगृह्यते तथाभूतलक्षणः**।

## दुरति (दुर्+अति)

**—इ** (**इण् गतौ**)। दैवी ह्येषा गुणमयी मम माया दुरत्यया (गीता० ७।१४)। **दुरत्यया=दुरतिक्रमा**।

## दुरधि (दुर्+अधि)

**—इ** (**इङ् अध्ययने**)। दुरधीता विषं विद्या (चाण० सू० ९८)। **दुर्गृहीतेत्यर्थः**।

**—स्था (ष्ठा गतिनिवृत्तौ)**। दुरधिष्ठितमिति कर्मणि क्तान्तमसाधु-निष्पादितेर्थे वर्तते। भावे क्तान्तं चैकत्रानुचितेऽवस्थाने। तथा च भारते शां० प० ३०८४ श्लो०प्रयोगः।

## दुरनु (दुर्+अनु)

**—इ** (इण् गतौ)। प्राज्ञस्य कर्माणि दुरन्वयानि (भा० शां० २२६।१६)। **दुरन्वयानि दुर्ज्ञेयोदर्काणि।** इन्द्रस्य लोका विरजा विशोका दुरन्वया काङ्क्षिता मानवानाम् (भा० अनु० १०२।३८)। **दुरन्वया दुरापाः।** गहनोऽयं भृश देशो महानूपो दुरन्वयः (गोरेसियो सं० रा० २।६२।१३)। **दुरन्वयो दुरत्ययः।** राजसूये ह्यसंहार्ये यज्ञाङ्गैश्च दुरन्वयैः (हरि० ३।२।२१)। **दुरन्वयैर्दुरनुष्ठानैः। दुरत्ययैरिति पाठान्तरम्।** दुरन्वय दुष्प्रधर्षं दुराप दुरतिक्रमम्। सर्वं वै तपसाऽभ्येति...(भा० अनु० १२२।८)। **दुरन्वयम्=दुर्ज्ञेयम्।**

## दुरव (दुर्+अव)

**—ग्रह्** (ग्रह उपादाने)। **अवपूर्वो गृह्णातिर्निरोधने वर्तते। दुःशब्दश्च तस्य दौष्ट्यं दुष्करत्वमाह। अवग्रहणमात्मसात्कारः।** तथा च (का० नी० सा० ८।६८) **प्रयोगः**—वशं गतो (वशागतो) रिपुर्यश्च विचलेद् दुरवग्रहः।

## दुरा (दुर्+आङ्)

**—गम् (गम्लृ गतौ)। दुरागतः=विषमपतितः। दुरागमः=दुर्जित आयः।**

**—चर् (चर गतिभक्षणयोः)**। दुराचारो हि पुरुषो लोके भवति निन्दितः (मनु० ४।१५७)। **दुराचारो दुश्चरितः।** सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः। तं चराद्य विधिं पार्थ दुश्चरं दुर्बलेन्द्रियैः (भा० शां० २३।६)।

**—दा (डुदाञ् दाने)। यथा दुरादानं सन्दंशे वानुहायाददीत** (षड्विंश० ३।१०)। **दुरादानं दुर्ग्रहम्।**

**—धृ (धृञ् धारणे)**। स देवयुक्तो रथसत्तमो नो दुराधरो द्रावणः शात्रवाणाम् (भा० कर्ण० ३४।६६)। **दुराधरो दुर्निरोधः, दुर्लभव्यतीघातः।** द्वाराणि तस्येह वदन्ति सन्तो बहुप्रकाराणि दुराधराणि (भा० उ० ४२।४६)। **दुराधराणि=दुरासदानि दुरभिभवानि वा।**

**—धृष् (धृष प्रसहने)**। नगराणीव गुप्तानि दुराधर्षाणि शत्रुभिः (भा०५।५२५७)। **दुराधर्षाणि दुष्प्रसहानि।** क्रुद्धात् आशीविषात्सर्पात्...दुराधर्षतरो विप्रो ज्ञेयः (भा० आदि० ८१।२३)। **दुराधर्षतरः=दुर्लभतरः खलीकारो यस्य सः।**

—वृ (वृञ् वरणे) । महतेवाम्बुवेगेन भिन्नः सेतुर्जलागमे । दुरावरं त्वदन्येन राज्यखण्डमिदं महत् (रा० २।१०५।३) । **दुरावरं दुर्बन्धम् ।**

—वृत् (वृतु वर्तने) । भवन्ति सुदुरावर्ता हेतुमन्तोपि पण्डिताः (भा० शां० १६।२३) । **सुदुरावर्ताः=अशक्यप्रत्यायनाः ।**

—सद् (षद्लृ विशरणगत्यवसादनेषु) । आख्याता भुजगास्तात वीर्यवन्तो दुरासदाः (भा० आदि० ३६।१) । **दुरासदा दुरभिभवाः, दुःखं वशं नेया इत्यर्थः ।** सम्प्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति (शा० १) । **न दुरुपेयो भविष्यतीत्याह ।**

दुरुद् (दुर्+उद्)

—सह (षह मर्षणे) । दीर्घकाल हिमवति गङ्गायाश्च दुरुत्सहाम् । मूर्ध्ना धारा महादेव. शिरसा यामधारयत् (भा० अनु० १०।३।२७) ॥ **दुरुत्-सहा=दुःसहा । नार्थ उदा ।**

दुरुप (दुर्+उप)

—चर् (चर गतिभक्षणयोः) । (राज्यलक्ष्मीः) आशीविष इव दुरुपचारा (पञ्चत०) । दुःसेव्येत्यर्थः ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । अत्यर्थं दुरुपसदादुपेत्य दूरं पर्यन्तादहिममयूखमण्डलस्य (कि० ७।६)। **दुरुपसदात्=दुरुपगमात् । दुःसहादिति तु मल्लिः । स च तात्पर्यार्थः ।**

—स्था (ष्ठा गतिनिवृत्तौ) । यो रणे दुरुपस्थानो हस्तरोधं दधद् धनुः (भट्टि० ५।३२) । दुरुपस्थानोऽनुपेयः ।

दुर्नि (दुर्+नि)

—मि (डु मिञ् प्रक्षेपणे) । पदे पदे दुर्निमिते गलन्ती (रघु० ७।१०)। **दुर्निमिते=दुर्न्यस्ये, विषमं निहिते ।**

दुष्परि (दुस्+परि)

—ग्रह् (ग्रह उपादाने) । लोकाधाराः श्रियो राज्ञां दुरापा दुष्परिग्रहाः (का० नी० सा०) **दुष्परिग्रहा दुःखेन वशं नेयाः ।**

दुष्प्र (दुस्+प्र)

—आप् (आप्लृ व्याप्तौ) । **असंयतात्मना योगो** दुष्प्राप इति मे मतिः (गीता ६।३६) । **दुष्प्रापो दुरापोऽसुलभः ।**

—तॄ (तॄ प्लवनतरणयोः) । धर्मं सूक्ष्मतरं वाच्यं तत्र दुष्प्रतरं त्वया (भा० शां० १६।७) । **दुष्प्रतरं दुस्तरम् ।** दुरवगम वा ।

—दा (डुदाञ् दाने)। अद्य भीताः पलायन्तु दुष्प्रदास्ते दिशो दश (रा० ७।१०६।२६)। **दुष्प्रदाः कष्टदाः।**

—धृष् (धृष प्रसहने)। सा दुष्प्रधर्षा हिंस्रैः (रघु० २।२७)। **अनास्कन्द्या अनाक्रम्या।**

—वृत् (वृतु वर्तने)। तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत् (रघु० १२।५१)। **तेषां खरादीनां हतानां दुष्प्रवृत्तिरनिष्टा दुःखदा प्रवृत्तिर्वार्ता।**

दुः सम् (दुस्+सम्)

—चर् (चर गतिभक्षणयोः)। दुःसंचारासु नगरवीथीषु (पञ्चत० १।१७३)। **दुःखं संचरणं परिक्रमणं गतागतं यत्र तासु।**

—धा (डुधाञ् धारणपोषणयोः) मृद्घटवत्सुखभेद्यो दुस्सन्धानश्च दुर्जनो भवति (पञ्चत०)। **सन्धानं संयोजनम्।**

—स्था (ष्ठा गतिनिवृत्तौ)। सन्ति दुःसंस्थिता. कुब्जे वक्राः परमपापिकाः (रा० २।९।४०)। **दुःसंस्थिताः=दुःसंस्थावयवसंनिवेशाः, दुःसंस्थाना दुराकृतयः।**

## वि

—अञ्च् (अञ्चु गतिपूजनयोः)। मायाभिरश्विना युवं वृक्षं स च वि चाचथः (ऋ० ५।७८।६)। **कृतनलोपोऽञ्चतिरेवात्र धातुर्न तु धात्वन्तरम्। व्यचथः=**विभुज्य (भुग्नं कृत्वा) **भङ्क्थः।** अग्ने व्यचस्व रोदसी उरूची (**अथर्व०** ३।३।१)। **व्यचस्व=प्रथय, विस्तृणीहि।** सहस्रधारं शतधारमुत्समक्षितं व्यच्यमानं सलिलस्य पृष्ठे (अथर्व० १८।४।३६)। **व्यच्यमानम्=विव्रियमाणमुद्घाट्यमानम्।**

**—अज् (अज गतिक्षेपणयोः)। व्यजति वातोऽनेन विक्षिप्यते वा व्यजनम् (अमरोद्घाटने स्वामी)।** वि यदज्राँ अजथ नाव ईं यथा (**ऋ० ५।५४।४**)। **व्यजथ=कृषथ। पृथग्वा कर्षथ।**

**—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु)।** अञ्जते व्यञ्जते क्रतुं रिहन्ति लघुनाऽभ्यञ्जते (अथर्व० १८।३।१८)। **व्यञ्जते=व्यञ्जन्ति। लौकिकादञ्जनादन्येन प्रकारेणाञ्जन्तीत्यर्थः। तथा च तैत्तिरीयिण आमनन्ति—दक्षिणं पूर्वमाङ्क्ते। सव्यं हि पूर्वं मनुष्या आञ्जत** (तै० सं० ६।१।१।६) इति। शुभ्रा (मरुतः) व्यञ्जत श्रिये (ऋ० ८।७।२५)। **व्यञ्जत=प्राकाशन्त, अदीप्यन्त।** जिह्वा कथं ते हृदयं व्यनक्ति (भा० सभा० ६४।२)।

व्यनक्ति, व्यक्ती करोति, विवृणोति, प्रत्यक्षयति । दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति (रा० २।२३।१८) । व्यक्तिर्भेदः, प्रबलदुर्बलविवेक इत्यर्थः ।

—अद् (अद भक्षणे) । मूषो न शिश्ना व्यदन्ति माध्यः (ऋ० १।१०५।८) । व्यदन्ति=अवकृन्तन्ति अवलुम्पन्ति ।

—अश् (अशू व्याप्तौ) । इमां व्यष्टिं व्याश्नुत (श० ब्रा० १०।२।४।८) । व्यष्टिः=प्राप्तिः, समृद्धिः, साफल्यम् । प्रजापतिरकामयत सर्वा व्यष्टीर्व्यश्नुवीय (श० ब्रा० १३।४।१।१) । सर्वा व्यष्टीः=सर्वानर्थान् । यदेव हूयमानस्य व्यश्नुते (श० ब्रा० २।२।४।१७) । व्यश्नुते=शिष्यते=उर्वरितं भवति । प्रतापस्तस्य भानोश्च युगपद् व्यानशे दिशः (रघु० ४।१५) । व्यानशे=व्याप । ते तं व्याशिषत (भट्टि० १५।४३) । व्याप्तवन्तः=परिगतवन्तः, परिवेष्टितवन्त इत्यर्थः ।

—अश् (अश भोजने) । अन्ना यदिन्द्रः प्रथमा व्याश (ऋ० ३।३६।८) । व्याश=आश=बुभुजे । पाटामिन्द्रो व्याश्नात् (अथर्व० २।२७।४) । व्याश्नात्=अभुङ्क्त । विशब्द उभयत्रार्थस्य विशेषको न ।

—अंस् (अंस विभाजने) अयं नित्यं विपूर्वः । यदाश्रौषं देवराजेन दत्तां दिव्यां शक्तिं व्यंसितां माधवेन (भा० आदि० १।१६६) । व्यंसितां व्यर्थीकृताम् इति नील० । व्यंसयामास त तस्य प्रहारं भीमविक्रमः (भा० वन० १६१।६७) । उक्तोऽर्थः ।

—अस् (असु क्षेपे) । व्यस्यै मित्रावरुणौ हृदश्चित्तान्यस्यतम् (अथर्व० ३।२५।६) । व्यस्यतम्=विक्षिपतम् । अस्यै इति षष्ठ्यर्थे चतुर्थी । संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे (भा० शां० २३८।१४) । व्यस्यन्ते=विभज्यन्ते शक्तिर्व्यसनम् । व्यस्यत्येनं श्रेयस इति (यो० सू० २।५४ भाष्ये), कौ० ८।१।१।२७) । व्यस्यति विभजति, पृथक् करोतीत्यर्थः । विव्यास वेदान् यस्मात् (भा० आदि० ६३।८८) । अत्र विशब्दस्य दुरुक्त्या नार्थः । पुच्छं व्यस्यति विपुच्छयते (काशिका) । व्यस्तरात्रिन्दिवस्य ते ( ) विभक्ताहोरात्रस्येत्यर्थः । तदस्ति किं व्यस्तमपि त्रिलोचने (कु० ५।७२) । व्यस्तमेषामन्यतममेकम् इत्यर्थः ।...सामादिभिरुपक्रमैः । व्यस्तैश्च समस्तैश्च...(मनु० ७।१५६) ॥ एकैकशः सामस्त्येन वा । व्यस्यन् विश्वा अनिरा अमीवाः (वा०सं०११।४७) । विक्षिपन्, परासुवन्नित्यर्थः । व्यस्यन्बाणसहस्राणि योधेषु च गजेषु च (भा० द्रोण० ५२।२८) । व्यस्यन्=निरस्यन् । आयुर्वेदं भरद्वाजात्प्राप्य स भिषजां क्रियाम् । तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् (हरि० १।२९।२७) ॥ व्यस्य=विभज्य । तामरसव्यासव्यसनिनि सहस्ररश्मौ (हर्ष० १) । तामरसव्यासः=पङ्कजविकासः सरसिजव्याकोचः । व्यसनं विपदि भ्रंश इत्यमरः ।

भाण्डं व्यसनमागच्छेद् यदि वाहकदोषतः। (याज्ञ० २।१९७इत्यत्र मिताक्षराया-मुद्धृतं नारदवचनम्)। **व्यसनं भ्रंशम्।**

—**आप्** (आप्लृ व्याप्तौ)। **तत्तु स्यादाप्रपदीनं व्याप्नोत्याप्रपदं हि यत्** (अमरः)। **व्याप्नोति प्राप्नोति।** तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् (श्वेता० उ० ४।१०)। **व्याप्तमाक्रान्तम्।** वृत्रेण पृथिवी व्याप्ता पुराकिल (भा० आश्व ११।७)। **स्वाधिकारे कृता।** अपरं मे प्रिया मृता, गृहं चान्येन व्याप्तम् (पञ्चत०)। **परिगृहीतं स्वीकृतं स्वायत्तीकृतम् इत्याह।** किं व्याप्यं किमपोहितम् (प्रबोध०)। **व्याप्तमाक्रान्तम्। अपोहितं दूरीकृतम्।** राद्धिः प्राप्तिः समाप्तिर्व्याप्तिः (अथर्व० ११।९।२२)। **व्याप्तिर्विविधाऽऽप्तिः।**

—**इ** (इण् गतौ)। तस्मिन्निदं सं च वि चैति सर्वम् (वा० सं० ३२। ८)। **व्येति सृष्टिकाले निर्गच्छति** (महीधरः)। वि द्यामेषि रजस्पृथ्वहा (ऋ० १।५०।७)। उर्वन्तरिक्षं वीहि (वा० सं० ११।१५)। वज्रेण यजमानस्य प्राणान् वीयात् (ऐ० ब्रा० २।२१)। **वीयात्=पृथक् कुर्यात्।** वि श्लोक एति पथ्येव सूरिः (अथर्व० १८।३।३९)। **स्तुतिस्तोमो विशेषेण गच्छति पथ्येन विद्वानिवेत्याह।** इमौ वै लोकौ सहास्तां तौ व्यैताम्। नावर्षन्न समतपत् (ऐ० ब्रा० ४।२७)। **व्यैताम्=पृथगभूताम्।** द्यावापृथिवी व्यैताम्। वसवो रुद्रा आदित्या अनुव्यायन् (यजुः १४।३०)। **उक्तोऽर्थः।** इमौ वै लोकौ सह सन्तौ व्यैताम् (जै० ब्रा० १।११६।१४५)। **उदितपूर्व एवार्थः।** न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्याम् (ऐ० ब्रा० १।६)। **वियन्ति विपरिवर्तन्ते, रूपान्तरं सङ्क्रामन्ति।** ये पि ह्येते इत उत्तरं प्रत्ययाः शिष्यन्ते एतेप्येतौ कालविशेषौ न वियन्ति भूतवर्तमानौ (पा० ३।३।३ इति सूत्रे भाष्ये)। **न वियन्ति न व्यभिचरन्ति।** एतानर्थान् के चिद्वियन्ति केचिन्न वियन्ति (भाष्ये)। स्त्रीपुन्नपुंसकत्वानि सत्त्वगुणा एकत्वद्वित्वबहुत्वानि च, एतानर्थान्ये न वियन्ति तदव्ययम् (पा० १।१।३८ सूत्रे भा०)। **उक्तोऽर्थः।** सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् (गो० ब्रा० )। **न व्येति न परिवर्तते।** व्यन्ये यन्तु मृत्यवः (अथर्व० ३।११।५)। वियन्तु विमुखा यन्तु। येन देवा न वियन्ति (अथर्व० ३।३०।४०)। **न वियन्ति विमतिं न प्राप्नुवन्ति।** नित्या यत्र महागुणाः।…न वियन्ति स्म कर्हि चित् (भा० पु० १।१६।२९)। **न वियन्ति=नापयन्ति।** व्येतु ते मनसो ज्वरः (भा० स्वर्गा० ३।२१, वि० ४५। ४१)। **व्येतु=अपगच्छतु, विनश्यतु।** दृष्ट्वा वनचरान् सर्वान् कच्चित् कुर्याः शरव्ययम् (रा० ३।९।१४)। **शरव्ययः=इषुप्रयोगः।** ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति (बौ० ध० २।६।११।१३)। **वियन्ति=विविधं**

गच्छन्ति। पूर्णं मे मा विगात् (पा० गृ०२।१६)। **मा नशत्, मा तिरो भूत्।** सम्भवत्यव्ययाद् व्ययम् (मनु० १।१६)। **अव्ययमनश्वरम्। व्ययं नश्वरम्।** कवेश्चित्तन्तु मनसा वियन्तः (ऋ० १०।५।३)। **वियन्तः=विचृत्य गच्छन्तः।** ते वियती अब्रूताम् (तै० सं० ५।२।३)। **वियती वियुवती** (द्यावापृथिव्यौ)। त्वद् विश्वा सुभग सौभगान्यग्ने वियन्ति वनिनो न वयाः (ऋ० ६।१३।१)। **वियन्ति=निर्गच्छन्ति, उद्यन्ति, प्रभवन्ति।** अस्यामहं त्वयि च सम्प्रति वीतचिन्तः (शा० ४।१३)। **वीता नष्टा विगता चिन्ता यस्य सः।**

—**ईक्ष् (ईक्ष दर्शने)।** पृथुलोचना सहचरी यथैव ते सुभगं तथैव खलु सापि वीक्षते (विक्रम० ४।३)। **सापि सुभगदर्शना, भवति, भव्याकृतिरस्ति।** वीक्ष्य वेपथुमतीम् (कु० ५।८५)। **वीक्ष्य दृष्ट्वा। विशब्दो नेह विशेषकृत्।** आवव्राते वीक्षणे च क्षणेन (शिशु० ८।३०)। **वीक्षणे नयने।**

—**ईर् (ईर गतौ कम्पने च)।** दिवोदासाय नवतिं च नवेन्द्रः पुरो व्यैरयच्छम्बरस्य (ऋ० २।१६।६)। **व्यैरयत् व्यगमयत्। व्यध्वंसयदित्यर्थः।**

—**उक्ष् (उक्ष सेचने)।** तां व्यौक्षत् (श० ब्रा० २।२।४।५)। **व्यौक्षत्= प्रौक्षत्।**

—**उच्छ् (उच्छी विवासे)।** इयमेव सा या प्रथमा व्यौच्छत् (अथर्व० ३।१०।४)। **व्यौच्छत्=व्यभासीत्। तमोनिरसनं कृतवतीति तु सायणः। स चार्थिकोऽर्थः।** उषा नो व्युच्छतु (अथर्व० ७।७२।१)। **विवासिता प्रकाशिता भवत्विति सायणः।** उषो अद्येह सुभगे व्युच्छ (ऋ० १।११३।७)। **व्युच्छ=विभाहि।** या व्यूषुर्याश्च नूनं व्युच्छान् (ऋ० १।१०।१३, ३।५५। १)। **नूनमिदानीमायतौ वा। व्युच्छान् इति पञ्चमो लकारः।** अहा यदिन्द्र सुदिना व्युच्छान् (ऋ० ७।३०।३)। **सुदिना=सुदिनानि। अत्यन्तसंयोगे द्वितीया।** व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परां गतिम्। गन्तुम्…(भा० आदि० १५८।२२)॥ **व्युष्टिः फलम्। परा व्युष्टिर्महद् भाग्यम्।** स्नातानां शुचिभिस्तोयैर्गाङ्गैश्च प्रयतात्मनाम्। व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ( )॥ **व्युष्टिः पुण्यवृद्धिः।** सेयं दानकृता व्युष्टिरनुप्राप्ता सुखं त्वया (भा० वन० २६१।२६)। **व्युष्टिः समृद्धिः, भूतिः। व्युष्टिः फले समृद्धौ चेति मेदिनी।** जननाद् दशरात्रे व्युष्टे (गो० गृ० २।८।८)। **व्युष्टे=अतिक्रान्ते। औपचारिकः प्रयोगः। यथा रजनी व्युष्टा इत्युक्ते प्रभातेति मुख्योऽर्थः, समाप्तेति च गौणः।**

—**उन्द् (उन्दी क्लेदने)।** आदिद् घृतेन पृथिवीं व्यूदुः (ऋ० अथर्व० ६। २२।१)। **व्यूदुः=व्युन्दाञ्चक्रुः=आर्द्रां चक्रुः।**

**—ऊर्णु (ऊर्णुञ् आच्छादने)।** आदिद् दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः (ऋ० ४।५४।२)। **व्यूर्णुषे=प्रकटी करोषि।** तं व्यूर्णुवन्तु सूतवे (अथर्व १।११।२)। **विगताच्छादनं कुर्वन्तु।** वि द्यामौर्णोन्महिना विश्वचक्षाः (वा० सं० १७।१८)। **व्यौर्णोत्=आच्छादितवानित्यर्थ इत्युवट-महीधरौ।** व्यूर्ण्वती दाशुषे वार्याणि (ऋ० ५।८०।६)। **व्यूर्ण्वती=व्यूर्णुवती =विवृण्वती।**

**—ऊह् (ऊह वितर्के)।** स वै स्रुचौ (जुहूमुपभृतं) च व्यूहति (श० ब्रा० १।८।३।१)। **विश्लेषयति पृथक् करोति।** स ऋचौ व्यौहत् (श० ब्रा० १०।४।२।२३)। **व्यौहत्=व्यभजत्।** तद्वद् योगबलं लब्ध्वा व्यूहते विषयान् बहून् (भा० शां० ३००।२३)। **व्यूहते विक्षिपति तुच्छी करोति।** व्यूहेदेकाक्षरी-भावात्पदे वनेषु सम्पदे (ऋ०प्राति० १७।१३)। **व्यूहेत्=विगृह्णीयात्। विसंहितं कुर्यात्।** व्यूढोरस्को वृषस्कन्धः (रघु० १।१३)। **व्यूढोरस्कः=विपुल-वक्षाः।** शर्कराः सिकता व्यूहेत् (तै० सं० ५।२।६।१)। **पार्श्वयेन विकिरेत्, विस्तृणीयात्।** व्यूह रश्मीन् (समूह) (वा० सं० ४०।१६)। व्यूहध्वं वाहिनीम् (भा० वि० ३९।८)। **युद्धोचितविन्यासविशेषेण स्थापयतेत्यर्थः।** सीमन्तं व्यूहति (आश्व० गृ० १।१२।४)। **सीमन्तो यथा भवति तथा केशान्पृथक् करोति।** भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् (भा० वि० ४३।१३)। **व्यूहतः क्षिपतः, निरस्यतः।** व्यूहन्निव जनौघं त शनै राजकुलं ययौ (रा० २।५।२१)। **व्यूहन् विभजन्, एकतः कुर्वन्नित्यर्थः।** व्युह्य स्थितः किञ्चिदिवोत्तरार्धम् (रघु० १८।५१)। **व्युह्य=विस्तार्य।** व्यूह्यात्मानं चतुर्धा वै वासुदेवादि-मूर्तिभिः। सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दन ॥ **व्यूह्य=विभज्य। व्युह्येति तु युक्तम्।**

**—ऋ (ऋ गतौ)।** अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार (ऋ० ३।३०।१०)। **व्यारेत्यर्तेर्विपूर्वाल्लिटि रूपम्। स्वयमेव विवृतो बभूवेत्यर्थः।**

**—ऋध् (ऋधु वृद्धौ)।** पशुभिर्व्यृध्येत् (श० ब्रा० १३।१।३।८)। **व्यृद्धो वियुक्तः स्यात्।** मिथुनेन व्यृद्धः (श० ब्रा० २।१।२।४)। इन्द्रस्यानु व्यृद्धि क्षत्रं सोमपीथेन व्यार्ध्यत (श० ब्रा० १२।४।६, ऐ० ब्रा० ७।२८)। **व्यार्ध्यत= व्ययुज्यत।** क्षत्रेणैनं व्यर्धयानि (श० ब्रा० १२।४।४।६)। **विनाकरोमि, क्षत्रा-देनं सोमपीथमाच्छिनद्मि।** मा वर्नि मा वाचं नो वीर्त्सीः (अथर्व० ५।७।६)। **व्यृद्धां मा चिकीर्षीरित्याह।**

**—कच् (कच बन्धने)।** विकचकिंशुकसंहतिरुच्चकैः (शिशु० ६।२१)। **विकचा=व्याकोशा। अत्र विर्धात्वर्थविपर्यासकृत्।**

—कत्थ् (कत्थ श्लाघायाम्)। प्राकृता ह्यकृतात्मानो लोकेस्मिन् कुलपांसनाः निरर्थकं विकत्थन्ते यथा राम विकत्थसे (रा० ३।३५।२१)। **विकत्थन्ते आत्मानं श्लाघन्ते, आत्मानमुच्चैर्वदन्ति**। का खल्वनेन प्रार्थ्यमाना विकत्थते (विक्रम० २)। **उक्तोऽर्थः**। न चार्जुनः कलापूर्वो मम दुर्योधनस्य च। सदा भवान्फाल्गुनस्य गुणैरस्मान् विकत्थते (भा० वि० ३६।४०)। **इयं कर्णोक्तिः। विकत्थते निन्दति, अपकृष्टान् कथयति**। न पौरुषेणापि विकत्थतेऽन्यान् (भा० उ० ३३।११३)। **विकत्थते=न्यक्करोति। खलीकरोति**। विलपन्तं बहुविधं भीत परविकत्थने (भा० उ० ५५।२७)। **परविकत्थने=परगुणाख्याने**। भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परविकत्थकाः (चरके)। **स्वं शास्त्रमजानन्तः परदूषका भवन्तीत्याह**। विकत्थयित्वा राजानं ततः प्राह (द्रौपदी० ६।१०)। **विकत्थयित्वा=विकत्थ्य=अवमान्य**।

—कथ् (कथ वाक्यप्रबन्धे)। देवमिवाचार्यमुपासीताऽविकथयन् (आप० ध० १।२।६।१३)। **अविकथयन्=व्यर्थां कथामकुर्वन्**। कथादिभ्यष्ठक (४।४।१०२) सूत्रे विकथेति पठ्यते। **व्यर्था कथा विकथा। विकथायां साधुः प्रवीणो वैकथिकः**।

—कम्प् (कपि चलने)। स्फुरति नयनं वामो बाहुश्च मुहुर्विकम्पते (मृच्छ० ११३)। **विकम्पते=वेपते**। स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि (गीता २।३१)। **विकम्पितुम्, विचलितुम्, व्यथितुम्, विह्वलितुम्**। स्वस्थानान्न विकम्पेत (भा० वि० १०६)। **न विकम्पेत=न निवर्तेत, न व्यावर्तेत। स्वं स्थानं न रहयेदित्यर्थः**। वदनं तद् वदान्याया वैदेह्या न विकम्पते (रा० २।६०।१७)। **नास्या वाक् सज्जति भाषमाणाया इत्यर्थः**। किं यासि बालकदलीव विकम्पमाना (मृच्छ० १।२०)। **विकम्पमाना=वेपथुमती**।

—काङ्क्ष् (काक्षि वाक्षि काङ्क्षायाम्)। स विकाङ्क्षन् भृशं रामम् (रा० ३।४६।१)। **अनिच्छन्नित्यर्थ इति गोविन्दराजः**। कैकेय्याः प्रियकामार्थं तदविकाङ्क्षया (रा० २।५२।२४)। **अविशङ्कयेति टीकाकारो रामः पठति**। दुःखोपायस्य मे वीर विकाङ्क्षा परिवर्तते (भा० द्रोण० ८०।१६)। **विकाङ्क्षा विसंवादः, मिथ्यात्वं विरोधः। विकाङ्क्षा विचारणाऽनिश्चय इत्यन्ये**। न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् (रा० २।७३।१८)। **विकाङ्क्षा=इच्छाऽभावः, विचारः**। पृष्ठमारोह मे देवि न विकाङ्क्षस्व शोभने (रा० ५।३७।२६)। **न विकाङ्क्षस्व=मा ते विचारणा भूत्**। ताण्ड्यब्राह्मणे (६।६।२२)। **विकाङ्क्षतिः प्रतीक्षणे प्रयुक्तः**।

—कस् (कस गतौ)। विकसति हि पतङ्गस्योदये पुण्डरीकम् (मालती०

१।२८)। **भेदमुपैतीत्यर्थः।** निजहृदि विकसन्तः सन्ति सन्तः कियन्तः (भर्तृ० २।७८)। **हर्षवशाद् हृदयविकासं हृत्स्फार्ति लभमाना इत्यर्थः।** पुरारूढे स्नेहे परिचयविकासादुपचिते (उत्तर० ६।२८)। **विकासो वृद्धिः।** चन्द्रो विकासयति कैरवचक्रवालम् (भर्तृ० २।७३)॥ ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्त— (पा० ७।२।३४) **इत्यत्रच्छन्दसीडभावो निपातितः।** त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतम् (ऋ० १।११७।२४)। **विकस्तं विदीर्णम्।** उत्तानाया हृदयं यद्विकस्तम् (वा० सं० ११।३६)। **उक्तोऽर्थः। तालव्यान्तोप्ययमिति केचिद्**—बालेन्दुवक्राण्यविकाशभावात् बभुः पलाशान्यतिलोहितानि (कु० ३।२९)। विकाशमीयुर्जगतीशमार्गणाः (कि० १५।५२)।

**—काश् (काशृ दीप्तौ)।** स तैः क्रीडन्धनुष्मद्भिर्व्योम्नि वीरो व्यकाशत (रा० ५।४०।१०)। **व्यकाशत=अभासत।** श्रेणीकृता व्यकाशन्त क्रौञ्चाः (भा० ५।४०।१०)। विचाकशच्चन्द्रमा नक्तमेति (ऋ० १।२४।१०)। **भूयो भूयो भासमानः।** आदित्य इव तं देशं कृत्स्नं सर्वं व्यकाशयत् (भा० आदि० २१६।१६)। **प्राकाशयदित्यर्थः।**

**—कित् (कित निवासे रोगापनयने च)।** सा हैनमभिराधयाञ्चकार। स व्यचिकित्सज्जुहवानि मा हौषम् (श० ब्रा० २।२।४।६)। **व्यचिकित्सत्=व्यमृशत्=व्यचारयत्।** अनन्तरं क्षत्रियस्य तत्र किं विचिकित्स्यते (भा० शां० १३०।१६)। **प्रायश्चित्तादिकं किं विधीयत इत्याह।** या राजन् विचिकित्सिथाः (भा० उ० ७३।२७) **मा संशयिष्ठाः।** नूनमिति विचित्सार्थीयो भाषायाम् (नि० १।५।१२)। **विचिकित्सा विवेकपूर्वकोऽभिप्राय इति दुर्गः।** येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके (कठोप० १।१।२०)। **विचिकित्सा संशयः।** द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ (भा० पु० ११।२१।३)। **विचिकित्सा तत्त्वबुभुत्सा। भागवतादन्यत्र दुर्लभोऽयमर्थः।**

**—कुञ्च् (कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः)।** कर्णौ विकुञ्चयति। **सङ्कोचयति।** विकुञ्च्य कर्णौ हनुमानुत्पपात (रा० ५।५।१८)।

**—कुष् (कुष निष्कर्षे)।** कोशः कुष्णातेः। विकुषितो भवति। (नि० ५।२६) **विविधं कुषितो विकुषितः। सुषिरत्वात्।**

**—कूज् (कूज अव्यक्ते शब्दे)।** तत्र हंसाः प्लवाः क्रौञ्चाः सारसाश्चैव राघव। वल्गुस्वरा विकूजन्ति (रा० ३।७६।७)। **नाना वाश्यन्त इत्यर्थः। विशब्दो नानार्थे।**

—कृ (डुकृञ् करणे)। मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया (मनु० १।७५)। **विकुरुते=करोति, उत्पादयति**। एक विचक्र चमसं चतुर्धा (ऋ० ४।३५।२)। **विचक्र (यूयं)=विभेज=विभक्तं कुरुथ स्म**। स त्रेधाऽऽत्मानं व्यकुरुत (बृ० उ० १।२।३)। **व्यभजदित्यर्थः**। वि भा अकः ससृजानः पृथिव्याम् (ऋ०७।८।२)। **व्यकः=व्यकरोत्=अप्रथयत्**। त्वष्टा वै सिक्तं रेतो विकरोति (श० ब्रा० १।६।२।१०)। **विकरोति परिणमयति। रूपान्तरमस्य करोतीत्यर्थः। पुष्णातीति त्वार्थिकोऽर्थः। देहत्वेन परिणामो विकार इति भट्टभास्करः** (ऐ० ब्रा० २।३६)। उभौ विनिश्चय कृत्वा विकुर्वाते वधैषिणौ (भा० आदि० २१०)।१६)। **विविधानि सिंहव्याघ्रादिरूपाणि गृह्णाते तिरोभावायेत्याह**। अष्टावक्रोऽन्वपृच्छत्तां रूपं विकुरुषे कथम् (भा० अनु० २१।२)। **विकुरुषे ऽन्यत्करोषि**। सम्पूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु। अपास्ताश्च तथा राजन् विकुर्वन्ति तथा स्त्रियः (भा० अनु०)॥ **मनो विकुर्वन्ति=मनो ऽन्यथयन्ति, अपरक्तं कुर्वन्ति**। यस्मादुद्विजते लोकः कथं तस्य भवो भवेत्। अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् (भा० वन० २८।२२)॥ **अपरक्तो भवति, अपकुरुते, विरोधमाचरति, शत्रूयते, द्रुह्यतीति वाऽर्थः**। रक्षिता यत्नतोपीह भर्तृष्वेता विकुर्वते (मनु० ९।१५)। **व्यभिचाराश्रयणेन भर्तृषु विक्रियां गच्छन्तीत्याह**। हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते (रघु० १७।५८)। **विरुद्धं चेष्टन्ते, अपकुर्वन्तीति यावत्**। ब्रह्मदत्तो विकुर्वीत यदि (कथा० २०।२१६)। यस्या पूर्वे पूर्वजना विचक्रिरे (अथर्व० १२।१।५)। **विचक्रिरे=विक्रियामापुः। विविधां विरुद्धां वा चेष्टामकुर्वन्नित्यर्थः। यस्यां भूमौ**। कालो हेतु विकुरुते स्वार्थस्तमनुवर्तते (भा० शां० १३९।१५७)। **विकुरुते=उत्पादयति**। क्रोष्टा विकुरुते स्वरान् (पा० १।३।१५७ सूत्रवृत्तौ)। **विकुरुते=उत्पादयति**। यत्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः (भा० उ० १३४।३३)। **विकारमपसरणलक्षणमाप्नुयाद् इत्यर्थः**। अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च। अन्यथैव प्रभुस्तानि करोति विकरोति च (भा० वन० ३०।३०)॥ ईशित्वं च वशित्वं च लघुत्वं मनसश्च ते। विकुर्वते महात्मानः···(भा० आश्व० ३९।१२)॥ **विकुर्वते=कुर्वते**। अश्वसधर्माणो हि मनुष्याः कर्मसु नियुक्ता विकुर्वते (कौ० अ० २।९।२७)। **विकुर्वते= विचेष्टन्ते=विरुद्धं चेष्टन्ते**। यस्याः पुरो देवकृतीः क्षेत्रे यस्या विकुर्वते (अथर्व० १२।१।४३)। ओदनस्य पूर्णाश्छात्रा विकुर्वते (पा० १।३।३५ सूत्रे वृत्तौ)। **निष्फलं चेष्टन्त इत्यर्थः**। विकुर्वते सैन्धवाः। **साधुदान्ताः शोभनं वल्गन्तीत्यर्थ इति पूर्वत्र सूत्रे वृत्तिः**। अनार्य इति मामार्याः पुत्रविक्रायकं ध्रुवम्। विकरिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा (रा० २।१२।७८)॥ **विकरिष्यन्ति=निन्दिष्यन्ति,**

**विगर्हिष्यन्ते** । पादौ विकुरुते (सुश्रुत० १।१५।१५)। **विकुरुते—इतस्ततो विक्षिपति** । भुजौ दीर्घौ विकुर्वाणम् (रा० ३।७४।१८) । **प्रसारयन्तम्, वितन्वानम् इत्यर्थः** । घोरौ भुजौ विकुर्वाणम् (रा० ३।६९।३१) । **इति वा पाठः । समानोऽर्थः** । विकुर्वाणो मुनीनां च व्यचरत्स महीमिमाम् (भा० वन० १३५।५०)। **विकुर्वाणः=अपकुर्वाणः=बाधमानः=पीडयमानः** । शत्रोर्मिथत्या कृणवन्वि नृम्णाम् (ऋ० ७।४८।३) । **विकृणवन्=विहिंसन्, उत्सादयन्, उज्जासयन्** । भगदत्ते विकुर्वाणे कौन्तेयः कृष्णमब्रवीत् (भा० द्रोण० २७।२) । **विकुर्वाणे=विविधाः क्रियाः कुर्वाणे** । दिव्यवस्त्रं विकुर्वाणस्त्रिगर्तान्प्रत्यमर्षणः (भा० वि० ३३।३१) । **विकुर्वाणः=प्रयुञ्जानः** । ऐन्द्रमस्त्रं विकुर्वाणमुभे चाप्यग्निमारुते (भा० उ० १४२।६) । **उक्तोऽर्थः । द्रोणपर्वण्यन्यत्रापि** (५।४३, ८।४६, १९३।४०) **विकुर्वाणशब्द एतदर्थकः प्रयुक्तः** । विकुर्वाणो कथाश्चित्राः (भा० आश्व० ५२।४) । **इह नार्थो विना । वैविध्यं नानात्वं चित्रशब्देनैवोक्तम्** । अजय्या जैत्रमूहुस्तं विकुर्वाणाः स्म सैन्धवाः (भा० द्रोण० ११२।६७) । **विकुर्वाणाः=प्रहृष्यन्तः । अमरोप्याह—हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः** । नेत्राभ्या विकुर्वाणम् (सुश्रुत० १।१२१।१८) । **अन्तःक्षोभं (दौःस्थ्यम्) नेत्राभ्यामाविर्भावयन्तम् इत्यर्थः** । आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः । वायुरुत्पद्यते...(मनु० १।७६) ।। **विकुर्वाणात्=विकारजनकात्** । कवचानि महार्हाणि वैदूर्यविकृतानि च (भा० १।१४२९) ।। **वैदूर्यैर्विद्रुमैरलङ्कृतानि । प्रत्युप्तविद्रुमाणीत्यर्थः** । पादुके हेमविकृते (रा० २।११३।३३) । **हेम्ना विचित्रतया कृते इत्यर्थः** । विकृतः सोमशोणितः (हरि० १।४१।३२) । **विकृतोऽभिषुतः । समासैकदेशग्यापि सोमस्य विशेषणमिदम्** । बालाश्च न प्रमीयन्ते विकृतं न च जायते (मनु० ९।२४७) । **व्यङ्गं न किं चिद्भूतमुत्पद्यत इत्याह** । विकृतं प्राप्नुयाद् वधम् (मनु० ९।२९१) । **नासाकरचरणकर्णादिभङ्गपूर्वं वधम्** । त्वं हि कर्ता विकर्ता च भूतानामिह सर्वशः (भा० वन० २०१।२३) । **विकर्ता=संहर्ता** । अङ्गुलीयकं स्वर्णस्य विकृतिः (**=विकारः रूपान्तरम्**) । मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः (रघु० ८।८७)। **प्रकृतिः स्वभावः । मरणं ध्रुवमित्यर्थः । जीवितं यादृच्छिकम्** । सावलेपमुपलिप्सिते परैरभ्युपैति विकृतिं रजस्यपि (कि० १३।५६)। **विकृतिं विकारं क्रोधलक्षणमुपैतीत्याह** । सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः (शा० २।५) । **विकृतिमत्=क्षुभितम् अस्वस्थम्** । श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च (रघु० १३।७१) । **विक्रिया=विकारः, परिवृत्तिः** । अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् (कु० ४।४१) । **विक्रिया क्षोभः** ।

साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् (सुभाषितम्)। लिङ्गैर्मुदः संवृतविक्रियास्ते (रघु० ७।३०)। संवृतविक्रिया निगूढमत्सराः। विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः (कु० ६।२९)। **विक्रियायै न कल्पन्ते = हानये न जायन्ते।** भ्रूविक्रियायां विरतप्रसङ्गैः (कु० ३।४७)। **भ्रूविक्रिया = भ्रूविलासः। रोमविक्रिया = रोमाञ्चः, पुलकोद्गमः। लोमहर्षः।** इत्याप्तवचनाद्रामो विनेष्यन् वर्णविक्रियाम् (रघु० १५।४८)। **वर्णविक्रिया = वर्णधर्मव्यतिक्रमः, तं विनेष्यन् अपनेष्यन्।** विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः (कु० १।५९)। नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः (पञ्चत० १।४४)। **विकारः परिवृत्तिः, आकारपरिवर्तनम्, रूपान्तरपरिग्रहः।** प्रमथमुखविकारैर्हासयामास गूढम् (कु० ७।९५)। **मुखविकारैर्मुखवैरूप्यैः।** विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य (शा० ४)। **विकारो रोगः। प्रतीकारश्चिकित्सा।** मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु (शा० ५।१८)। **विकाराश्चेतोवृत्तिपरिवृत्तयः, कृतकर्मविस्मृतिलक्षणाः।** कुतः परस्मिन् पुरुषे विकारः (कि० १७।२३)। **निर्विकारे परमात्मनि कोपरूपो विकारः कुतः।** भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनम् (मालती० १।१७)। **विकारि कामादिविकारविधेयम्।**

—**कृत् (कृती छेदने)।** तस्मादस्य यत्रैव क्व च कृशो वा यद्वा विकृन्तति तत एव लोहितमुत्पतति (श० ब्रा० ३।१।२।१६)। **विकृन्तति ईषच्छिनत्ति। विशब्दोऽल्पीभावे।** इन्द्रो वलं रक्षितारं दुघानां करेणेव वि चकर्ता रवेण (ऋ० १०।६७।६)। **विचकर्त = खण्डशश्चकार शकलानि चकार।** वि पर्वशश्चकर्त गामिवासिः (ऋ० १०।७९।६)। **उक्तोऽर्थः।** कुञ्जरान् कुञ्जरारोहान् पदातीन् रथिनो रथान्। आप्लुत्याप्लुत्य दशनैर्नखैश्च विचकर्तिरे (रा० ६।१९।१०)॥

—कृष् **(कृष विलेखने)। शुनं** न फाला विकृषन्तु भूमिम् (ऋ०४।५७।८)। **विकृषन्तु विशेषेण कृषन्तु।** अग्निं विकक्ष्यत्सु सर्वौषधं च वप्स्यत्सु (लाट्या० श्रौ० ५।८)। ततः शरं तु नैषादिरङ्गुलीभिर्व्यकर्षत (भा० आदि० १३२।५६)। **व्यकर्षत = आयंस्त। यजमानं** वा एतद् विकर्षन्ते यदाहवनीयात्पशुश्रपणं हरन्ति (तै० स० ३।१।३।२)। **विकर्षन्ते प्रमुष्णन्ति, लुण्टन्ति।** एष ह वाव क्षत्रियोऽविकृष्टो यमेवंविदो याजयन्ति। अथ ह तं व्येव कर्षन्ते यथा ह वा इदं निषादाः...। वित्तमादाय द्रवन्ति (ऐ०ब्रा० ८।११)। **उक्तोऽर्थः।** कच्चिद् बलस्य भक्तं च वेतनं च यथोचितम्। सम्प्राप्तकाले दातव्यं ददासि न विकर्षसि (भा०

सभा० ५।४८)।। **न विकर्षसि=कालं नातिक्रामसि । प्राप्तकालं दानं न व्याक्षिपसि, न विलम्बयसीत्यर्थः ।** यज्ञं विकृष्टमनु विकक्ष्ये (श० ब्रा० ११।८।४।२) । **विकृत-मनु विकरिष्य इत्याह ।** विकृष्टं त्वेनं स भूयो विकर्षेत (श०ब्रा० ६।५।१।६३)। **उक्तोऽर्थः ।** दुर्योधनवधे यानि रोमाणि हृषितानि नः । अद्यापि न विकृष्यन्ते तानि तद्विद्धि भारत (भा० शल्य० ६१।१६) ॥ **न विकृष्यन्ते=न न्यञ्चन्ति ।** आरुजन् विरुजन्पार्थो ज्यां विकर्षंश्च पाणिना (भा० द्रोण० १२७।३१) । **विकर्षन्=अत्यर्थं कर्षन् ।** सम्प्रकर्षन् विकर्षंश्च सेनाग्रं समलोडयत् (भा०द्रोण० १२७।३१)। **विकर्षन्=विक्षिपन् ।** नैव मृत्युरनिष्टो नो निःसृतानां गृहात्स्वयम् । जलमग्निस्तथा वायुरथवापि विकर्षणम् (भा० आश्रम० ३७।२७) ।। **विकर्षणम् अनशनम्, अनाशकं ।** प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः (भा० आदि० १६०। २५)। **विकर्षणं तिर्यक्पातनम् ।** यः परमो विकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी (गो० गृ० १।५।७) । **विकर्षः=विप्रकर्षः ।** कृष्टय इति मनुष्यनाम । कर्म-वन्तो भवन्ति । विकृष्टदेहा वा (नि० ) । ते श्रान्तवाहना दूता विकृष्टेन सता पथा (रा० २।६८।२१) । **विकृष्टेन=विप्रकृष्टेन ।** विकृष्य बलवद् धनु. (भा० वन० १६७।३३) । **सज्यं शरमाकृष्येत्यर्थः ।**

—**कॄ (कॄ विक्षेपे)** । व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्ग-भिन्नः (कु० ३।६१)। **व्यकीर्यत=व्यक्षिप्यत ।** असिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु (मालती०५।३४)। **खण्डयत्वित्यर्थः ।** एतद् यो वेद निहितं गुहायां सोऽ-विद्याग्रन्थि विकिरतीह सौम्य (मुण्डोप० २।१।१०)। **विकिरति=विस्रंसयति= भिनत्ति ।** विकिरति मुहुः श्वासान् (गी० गो० ४।१६) । **विकिरति=विसृ-जति, मुञ्चति ।** तिलैश्च विकिरेन्महीम् (मनु० ३।२३४) । **श्राद्धभूमौ तिलान् विकिरेत् विक्षिपेत् ।** वसूनि तोयं घनवद् व्यकारीत् (भट्टि० १।३) । **व्यक्षैप्सीत्, अदादित्यर्थः ।** अवकरनिकरं विकिरति तत् किं कृकवाकुरिव हंसः (भर्तृ०) । **विकिरति=अपस्किरते=आलिखति ।** उच्छिष्ट भागधेयं स्याद् दर्भेषु विकिरश्च यः (मनु० ३।२४५) । **विकिरः=विकीर्णः ।** विकीर्णमूर्धजा (कु० ४।४)। **पर्या-कुलशिरोरुहा ।** बहुधा विकीर्णध्वजः (रा० ३।३४।२५) । **विकीर्णः= विदीर्णः ।** विष्किरः शकुनिर्विकिरो वा (पा० ६।१।१५०) । सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते (काशिका) । कुक्कुटो विकिराणाम् (आप० ध० १।१७।२२) । **पादाभ्यां विकीर्य कीटधान्यादि ये भक्षयन्ति ते मयूरादयो विकिरा इत्युज्ज्वलायां हरदत्तः ।**

—**क्लृप् (कृपू सामर्थ्ये)** । मुखस्य वर्णो न विकल्पतेऽस्य (भा० वन० १७।

६)। **न विकल्पते=नान्यथा भवति, न भिद्यते।** काचो मणिर्मणि काचो येषां बुद्धिर्विकल्पते (पञ्चत० १।८७)। **विकल्पते=विपर्यस्यति, विपर्येति।** अथेदमधराच्यं करम्भेण विकल्पते (अथर्व० ४।७।२)। **विगतसामर्थ्यं भवतीति सायणः।** नीवारा व्रीहिभिर्विकल्पेरन्नेकार्थत्वात् (का० श्रौ० १।४।२ सूत्रविवरणे)। **नीवारा वा प्रयुज्यन्तां व्रीहयो वेति नैयत्यं नास्ति।** कथंचिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नया. (पञ्चत० १।३८५)। **न विकल्पन्ते=न सन्देहविषयतां यान्ति।** तेनोणादीनां परत्वं न विकल्पते (विकल्प्यते) (पा० ३।१।२ सूत्रवृत्तौ)। आदिष्टो न विकल्पेत (हितोप० २।' ३)। **न विकल्पेत=इदं कर्तव्यं न वेति न विचारयेत्।** प्रेष्यमाणा विकल्पन्ते (भा० शां० ५६।५०)। **विकल्पन्ते=कार्ये संशयं दर्शयन्ति।** ब्रह्मणा व्यहं कल्पयामि (अथर्व० १२।२।३२)। **विकल्पयामि भिनद्मि, विशिनष्मि।** तत् सिषेवे नियोगेन स विकल्पपराङ्मुखः (रघु० १७।४९)। **अनध्यवसायशून्यः।** मायाविकल्परचितैः (रघु० १३।७५)। **मायाविकल्पा मायाविशेषाः।** तुल्यार्थयोर्हि तुल्यविपययोर्विकल्पो भवति न नानार्थयोः (मी० सू० १०।६।३३ शा० भा०)। तस्य दण्डविकल्पः स्याद्यथेष्ट नृपतेस्तथा (मनु० ६।२२८)। **दण्डनानात्वमित्यर्थः। दण्डेऽनियमः।** एव सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोऽपि फलेऽविकल्पा. (भा० पु० ८।६।२८)। **अविकल्पाः=भेदशून्याः।** विकारको विकल्पानाम् (भा० पु० १०।८५।११)। सृष्टं च पात्यनुयुग यावत्कल्पविकल्पना (वि० पु० १।२।६२)। **कल्पस्य सृष्टेर्विकल्पना विघटना।** पक्वान्नलेह्यपानाना मासानां च विकल्पकाः (भा० वन० ९२।२०)। **विकल्पका मृष्टामृष्टविभाजकाः।**

**—क्रन्द् (क्रदि आह्वाने रोदने च)।** विक्रन्दितमहास्वनः शोकसागरः (रा० २।५९।२९)। **विक्रन्दितमाक्रोशः।**

**—क्रम् (क्रमु पादविक्षेपे)।** साधु विक्रमते (वाजी) (पा० १।३।४१ सूत्रे वृत्तौ)। **अश्वादीनां गतिविशेषो विक्रमणमुच्यते।** विक्रामत्यजिनसन्धिः (इहैव वृत्तौ प्रत्युदाहरणम्)। **द्विधा भवतीत्यर्थः।** इद विष्णुर्विचक्रमे त्रेधा निदधे पदम् (ऋ० १।२२।१७)। **इदं (सर्वम्) पादक्रमैर्व्यापेत्यर्थः।** सृती विचक्रमे विष्वङ् साशनानशने उभे (ऋ० १०।९०।४)। **चरणन्यासैराक्रान्तवानित्यर्थः।** विचक्रमे पृथिवीमेष एताम् (ऋ० ७।१००।४)। **उक्तचर एवार्थः।** पृथिवीमनु विक्रमेऽहम् (अथर्व० १०।५।२५)। **पृथिवीमुद्दिश्य क्रामामीत्यर्थः।** आतिष्ठस्व रथान्राजन् विक्रमस्व विहायसम् (भा०

मादि० ६३।१४) । **आरोह, उत्पतेत्यर्थः ।** सखे विष्णो वितरं विक्रमस्व (ऋ० ४।१८।११) । उरु विष्णो विक्रमस्व (वा० सं० ५।३८) । **आयताङ्क्रमाना-तिष्ठेत्याह।** व्यध्वानः क्रामेयुः । **विक्रामेयुः पृथग् गच्छेयुः।** एकपाद् द्विपदो भूयो विचक्रमे (अथर्व० १३।२।२७) । **दूरमतिचक्रामेत्याह।** य एकमोज-स्त्रेधा विचक्रमे (अथर्व० १।१२।१) । **विचक्रमे विभक्तवानित्यर्थः प्रतिभाति।** स स्मरन्वै परिक्लेशं स्वपितुर्विक्रमिष्यति (भा० उ० १७०।३) । **योत्स्यते, आस्कन्त्स्यति ।** येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि शत्रून् विक्रमन्ते (पञ्चत०) । **विक्रमन्ते = विक्रामन्ति = अभिभवन्ति ।** तांश्चैव विक्रमते जेतुम् (भा० सभा० ५।६२) । **विक्रमते = क्रमते = उत्सहते ।** तत्प्रहरणान्याच्छिद्य विक्रामतः (मालती० ८।६)। **शूरवद् वर्तेते इत्यर्थः ।** आरण्योऽग्निरिव हि दुःखामर्षज तेजो विक्रमयति (कौ० अ० ७।२।१०१) । **विक्रमयति = शूरवृत्तं कारयति ।** अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात् कैलासेपि त्वदधिवसतौ विक्रमयतः (महिम्नः स्तोत्रे १२) । **भुजवनं बाहुसङ्घातमतिशौर्येण व्यापारयत इत्याह।** मेदिनी दानवपते देहि मे विक्रमत्रयम् (भा० वन० २७१।६७) । **विक्रमः क्रमः ।** ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः (रा० १।८।५) । **त्वरितविक्रमः त्वरितगमनः ।** सदार्यौ राजपुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ (रा० २।११२।३) । **धर्मविक्रमौ धर्ममार्गवर्तिनौ ।** शैनेयः श्येनवत्संख्ये व्यचरल्लघु-विक्रमः (भा० द्रोण० १२०।३५) । **लघुविक्रमः क्षिप्रचरणन्यासः ।** अपाक्राम-द्रथोपस्थाद् विक्रमांस्त्रीन्नरर्षभः (भा० द्रोण० ४६।१५) । **विक्रमः = क्रम ।** लघुः शीघ्रः । सर्वमावृत्त्य विक्रमम् (मनु० ३।२१४) । **विक्रमम् = विशिष्टं क्रमम् = आनुपूर्वीं = परिपाटीम् ।** गतेषु लीलाञ्चितविक्रमेषु (कु० १।३४) । **विक्रमम् = गतिम् ।** अनुत्सेकः खलु विक्रमालङ्कारः (विक्रम० १) । **विक्रमः शौर्यम् । विसर्जनीयस्योष्मत्वाभावेनाविकृता स्थितिरपि विक्रम उच्यते ।** यदस्मानपि विक्रान्तान्विक्रम्याक्रामति स्वयम् (शि० भा० १४।३७) । **विक्रम्य सोत्साहं प्रवृत्य ।** विक्रम्य तु हृतं चोरैर्न पालो दातुमर्हति (मनु० ८।२३३) । **विक्रम्य बलप्रयोगं कृत्वा, साहसं प्रयुज्येत्यर्थः ।** विघुष्येति पाठान्तरम् । जले विक्रममाणाया (राक्षस्याः) हनूमान् शतयोजनम् (भट्टि० ८।२४) । **विचरन्त्या इत्यर्थः ।** द्रुतविक्रान्तचन्द्रार्कमार्गो गोपानुपाद्रवत् (वि० पु० ५।१६।२) । **द्रुतं विक्रान्तोऽतिक्रान्तश्चन्द्रार्कमार्गो येन स तथोक्तः ।** सुकुमाराभिताम्रेण क्रान्तविक्रान्तगामिना(हरि० २।११।३) । **पादेनेति विशेष्यम् ।**

**—क्री (डुक्रीञ् द्रव्यविनिमये)** । प्रजया स विक्रीणीते पशुभिश्चोपदस्यति (यो गां न दित्सति)। (अथर्व० १२।४।२) । **प्रजाऽस्य विक्रीता द्रव्येण विनिमिता प्रणिदत्ता भवति, पशवश्चास्योपदस्ताः क्षीणा भवन्तीत्याह । प्रजयेति प्रकृ-**

**त्यादित्वात्तृतीया ।** वस्नेन विक्रीणावहा इषमूर्ज च शतक्रतो (वा० सं० ३।४९) । गवा शतसहस्रेण विक्रीणीते सुतं यदि (रा० १।६१।१३) । **काच-**मूल्येन विक्रीतो हन्त चिन्तामणिर्मया (शां० श० १।१२) । **सर्वत्र समानोऽर्थः ।**

—**क्रीड्** (**क्रीडृ** विहारे) । यथात्मतन्त्रो भगवान्विक्रीडत्यात्ममायया (भा० पु० २।८।२३) । **विक्रीडति विहरति । अनायस्तस्तास्ता लीलाः समा-चरतीत्यर्थः ।** विक्रीडितो यथैवाहं क्रीडामृग इवाधमः (भा० पु० ६।२।३७) । **विक्रीडितः क्रीडनकतां नीतः ।** विक्रीड्य सुचिरं भीमो राक्षसेन सहानघ । नि-जघान महावीर्यस्त तदा''' (भा० ३।५६)॥ **विक्रीड्य=प्रहस्य, नर्मवचनमुदीर्य ।**

—**क्रुश्** (**क्रुश आह्वाने रोदने च**) । भ्रातॄनन्ये पितॄनन्ये पुत्रानन्ये विचुक्रुशुः (भा० सौ० ८।१२१) । **विचुक्रुशुः=आचक्रन्दुः ।** कृष्णं च जिष्णुं च हरिं नरं च त्राणाय विक्रोशति (भा० सभा० ६७।३३) । भवति । कस्य वयं विक्रोशामः (मध्यम० १) । **आक्रन्दाम इत्यर्थः ।** राघवस्तुतिसंयुक्ता गगने च विचुक्रुशुः । साधु साध्विति हृष्टाना देवानां शोभना गिरः (रा० ६।९२।६९) ॥ **विचुक्रुशुः=प्रतिदध्वनुः, प्रतिध्वनिताः प्रतिशब्दिताः प्रतिश्रुत्वत्यो बभूवुरि-त्यर्थः । क्रोशतिरिहाकर्मकः ।**

—**क्लिद्** (**क्लिदू आर्द्रीभावे**) । वर्षाम्बुविक्लिन्नं पद्ममागलितं यथा (भा० पु० १।५४।१२) । **विक्लिन्नम्=विशेषेण क्लिन्नमुन्नम् ।**

—**क्षर्** (**क्षर संचलने**)। तस्य यो रसो व्यक्षरत् (श० ब्रा० १४।१।१।११) । **व्यक्षरत्=निरस्यन्दत ।** विक्षरन्तं महामेघम् (भा० १४।२१८४) । **विक्षरन्तं प्रस्यन्दमानम् ।** सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना (हरि० ३।१८।२४) । **विक्षरन्ती=विस्रवन्ती=स्यन्दमाना ।**

—**क्षि** (**क्षि हिंसायां स्वादिः**) । एते वैतं विक्षिण्वन्ति यं विचिकीर्षन्ति (श० ब्रा० ६।१।१।२३) । **क्षीणमपचितं कुर्वन्तीत्याह । ब्राह्मणे तु श्नाविकरणोऽयं प्रयुक्तः ।**

—**क्षिप्** (**क्षिप प्रेरणे**) । महार्णवं विक्षिपेत्संक्षिपेच्च (भा० आश्व० ४२।५९) । **विक्षिपेत्=विस्तारयेत् ।** तत्र मेधाविनः केचिदर्थमन्यैरुदीरितम् । विचिक्षिपुर्यथा श्येनो नभोगतमिवामिषम् (भा० सभा० ३६।६)॥ **विचिक्षिपुः=आददाना व्यकुर्वन् ।** सुहृदो विक्षिपन्त्याशु कथाभिर्व्रणवेदनाः (सुश्रुत० २।१।६९)। **विक्षिपन्ति=हरन्ति=अपनुदन्ति ।** ये स्वामिनं दुष्टतमं वदन्ति वाञ्छन्ति वृद्धिं न च विक्षिपन्ति (भा० सभा० ७१।१) । **न विक्षिपन्ति व्याकुला न भवन्ति । क्षिपतिरिहोपसर्गवशादकर्मकः ।** तस्य विक्षिपतश्चापं सन्दधानस्य चासकृत् (भा० वन० १७।५) । **विक्षिपतः=कर्षतः ।** विक्षिपन्नादयंश्चापि धनुः

श्रेष्ठम् (भा० वन० १७।३)। **उक्तोऽर्थः।** अभितश्चक्षुषी विक्षिपन्ती (सा० द०)। **प्रेरयन्तीत्याह।** ज्यां विक्षिपन्तश्च महाधनुर्भ्यः (भा० वन० २६६।२४)। **विक्षिपन्तोऽवरोपयन्तः।** स्फुरता विक्षिप्यमाणा धनुषा नरेन्द्राः (भा० आदि० १८७।१८)। **प्रास्ताः, परास्ताः, मिथो विश्लेषिताः सन्तः, इतस्ततोऽवशं नुद्यमानाः।** सर्वगात्राणि विक्षिप्य किं शेषे (रा० ६।६५।३५)। **विक्षिप्य=वितत्य=प्रसार्य।** भ्रूविक्षेप कथयति (पा० ३।४।५४ सूत्रे वृत्तिः)। **भ्रुवौ विक्षिप्य उदच्य, उन्नमय्य।** गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् (भा० शां० ३३७।३६)। **विक्षिप्य प्रसार्य।** शत्रुघ्नविक्षेपविमूढसंज्ञां समीक्ष्य कुब्जाम् (रा० २।७८।२६)। **विक्षेप इतस्ततः कर्षणम्। अङ्गहारोऽङ्गविक्षेपः (अमरः)।** नृत्यविशेष इत्यर्थः।

**—क्षुभ्** (क्षुभ संचलने)। यदाशसा वदतो मे विचुक्षुभे (अथर्व ७।५७।१)। **विचलितं विघटितं विकृतिमद्वाऽभूदित्याह।** अम्भोधयः श्वासहृता विचुक्षुभुः (भा० पु० ७।८।३२)। **विचुक्षुभुः=क्षोभमुपजग्मुः, विचेलुः, विजह्वलुः।**

—खण्ड् (खडि मडि भेदने)। ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः। न वशं योषितो यान्ति न दानैर्न च सस्तवैः (पञ्चत० ४।६०)। **विखण्डिता विशकलिताः।**

—खन् (खनु अवदारणे)। यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु (अथर्व० १२।१।३५)। **विखनामि=उत्खनामि।**

—ख्या (ख्या प्रकथने)। व्यन्धो अख्यदहिमाददानः (ऋ० ४।१६।६)। **व्यख्यत् अपश्यत्।** रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः (ऋ० १०।१२७।१)। **व्यख्यत् प्राकाशयत् अदीपयत् प्रभामकरोत्।** वि नाकमख्यत्सविता (ऋ० ५।८१।२)। जातो यदग्ने भुवना व्यख्यः (ऋ० ७।१३।३)। **उक्तपूर्व एवार्थ एतयोरुदाहृत्योः।** त्रिषु लोकेषु विख्यातः **प्रख्यातः, प्रसिद्धः, प्रतीतः।**

**—गण्** (**गण संख्याने**)। वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः (याज्ञ० ३।१०४)। **विगण्यन्ते=गण्यन्ते=संख्यायन्ते। विशब्दोऽविशेषकृत्।** ततो भूयो व्यगणयत् स्वबुद्ध्या मुनिसत्तमः (भा० शल्य० ५०।६१)। **व्यचारयदित्यर्थः।** किमपि विगणयन्तो बुद्धिमन्तः सहन्ते (पञ्चत० ३।४०)। **किमपि चिन्तयन्त इत्यर्थ इति वयम्। अवजानन्त इति संस्कृतशार्मण्यकोषः। अस्मदुक्त एवार्थः साधुरितीमा उदाहृतयो भूयस्समर्थयन्ते—**अदूरवर्तिनी सिद्धि राजन् विगणयात्मनः (रघु० १।८७)। तांस्तान् विगणयन्नर्थान् (भा० वन० २९८।२०)। एवं यथावद् विगणय्य बुद्ध्या (रा० ३।४४।३१)।

**—गद्** (गद **व्यक्तायां वाचि**)। न हि निम्बात्स्रवेत्क्षौद्रं लोके विगदितं वचः (रा०)। **विशेषेण गदितम्, बहुलमुच्चारितम्।**

—**गम् (गम्लृ गतौ)** । न विगच्छति वैदेह्याश्चन्द्रांशुसदृशी प्रभा (रा० २।६०।१६) । **विगच्छति=अपगच्छति=अपैति** । वासवृक्षे समागम्य विगच्छन्ति यथाण्डजाः । नियत विप्रयोगान्तस्तथा भूतसमागमः (बुद्ध० ६।४६) ॥ **विगच्छन्ति=वियुज्य वियुत्य गच्छन्ति, विप्रयुक्ता गच्छन्ति । व्यपयान्ति ।** त्रेधा विष्वग् विगच्छति (अथर्व० ११।८।३३) । **उक्तोऽर्थः ।** ततो निशा व्यगमन्महात्मनां संशृण्वतां विप्रसमीरिता गिरः (भा० १४।१६।१२) । **व्यगमत्=व्यत्यगात् ।** इदानी दूरं व्यगमल्लज्जा लज्जावतीनाम् । **अत्यन्तं व्यनशदित्यर्थः ।** शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः (शा० ६।५) । **यापयति क्षपयति ।** आशास्यमीतिविगमप्रभृति प्रजानाम् (माल० ५।२०) । **ईतिविगमः=दैवीनामापदां विनाशः ।** यथा क्रीडोपस्कराणां संयोगविगमाविह (भा० पु० १।१३।४३)। **विगमो वियोगः । केवलो विगमशब्दस्तु वियोगं नाह । संयोगसमभिव्याहृतस्तु तत्रार्थे शक्त इति सुधीभिरवधेयम् । निष्प्रभे विगतारोकौ (अमरः) । विगतो निष्प्रभः । प्रयोगस्त्वत्रार्थे नोपलभ्यते ।** अवनितलविगतैश्च भूतसङ्घैः (भा० द्रोण० ३७।३४) । **विगतैः=विकीर्णैः ।** विगते बाहुवीर्ये (अथर्व० ५।२१।१०) । **विगते विनष्टे ।** विगतं तु विदेशस्थ शृणुयाद्यो ह्यनिर्दशम् (मनु० ५।७५)। **विगतमुपरतं मृतम् ।** वेः शालच्छङ्कटौ (पा० ५।२।२८)। **इत्यत्र वृत्तौ विगते विशाले शृङ्गे । तद्योगाद् गौरपि विशाल उच्यत इत्युक्तम् । अन्यानुरक्ता विगता** (वैजयन्ती) ।

—**गर्ह् (गर्ह गल्ह कुत्सायाम्)** । प्रमाणदृष्टधर्मेण कथमस्मान्विगर्हसे (भा० आदि० ११७।१७) । **विगर्हसे=गर्हसे=निन्दसि=कुत्सयसि ।** अयं द्विजैर्विद्वद्भिः पशुधर्मो विगर्हितः (मनु० ६।६६) । **विगर्हितो विनिन्दितः ।** यदि भीष्मः स्त्रियं हन्यात्सन्तः कुर्युर्विगर्हणम् (भा० उ० १६२।६६) । प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि (वेणी० १।१२) । **स्पष्टोऽर्थः ।**

—**गल् (गल इति लौकिको धातुः स्रवणेऽवस्रंसने वा वर्तते) । प्रायेण निष्ठायां दृश्यन्ते प्रयोगाः ।** महावनमिव च्छिन्नं शिश्ये विगलितद्रुमम् (भा० वि० २३।३२) । **विगलिताः पतिता द्रुमा यत्र तत् ।** रतिविगलितबन्धे केशपाशे सुकेश्याः (विक्रम०, रघु० ६।६७, तत्र प्रियाया इति पाठः) । **रतौ निधुवने विगलिता विघटिता विस्रस्ता बन्धाः कबर्यो यत्र ।** जलात्पुनर्विगलितो (मत्स्यो) गलितो वकेन (पञ्चत० २।८७) । **विगलितो भ्रष्टः, निष्क्रान्त इति यावत् । गलितो निगिलितः, अवगीर्णः ।** वियोगाग्निविगलज्जीवितोऽभवत् (कथा० ७।७५) । **विगलत्=द्रवत्, भ्रश्यत् ।** कामाग्निनेव सन्तप्तः स्विन्नो विगलितः स च (कथा० १८।७८) । **उक्तोऽर्थः ।** विगलितमेघवर्चसः (भा०

आदि० १६।२५) । क्षरिताम्रज्योतिष इत्यर्थः । दाक्षिण्योदकवाहिनी विगलिता (मृच्छ०) । **विगलिता निःशेषेण स्रुता स्यन्ना स्कन्ना शोषं गतेत्यर्थः** । मयि विगलितप्रत्याशत्वाद् विवाहविधेः पुरा (मालती० ६।११) । **विगलितप्रत्याशः =नष्टाशंसः** ।

—**गाह्** (**गाहू विलोडने**) । एष विप्रैरभिष्टुतोऽपो देवो विगाहते (ऋ० ६।३।६) । **अपः समुद्रं प्रविशति, अप्सु निमज्जति** । स व्यगाहत विगाढमन्मथः (दीर्घिकाः) (रघु० १६।६)। **उक्तोऽर्थः** । **विगाढमन्मथः=प्रौढमदनः** । विषमोपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः (कि० २।३)। **विगाह्यते=प्रविश्यते** । निशा व्यगाहत सुखशीतमारुता (भा० उ० १८२।२६) । **व्यगाहत=अवातरत्** । (वनस्पतिः) अन्तर्भूमिं विगाहते मूलैः (सुश्रुत० १।२७०।५) । **अन्तः प्रविशतीत्यर्थः** । दुःखेन हि विगाह्यते प्रचकितैं राज्ञां गृहं वार्धिवत् (पञ्चत० १।४२०) । **उक्तोऽर्थः** । तया मुनीनां चरित व्यगाह्यत (कु० ५।१६) । **अन्वस्त्रियत, अन्वचर्यतेत्यर्थः** । यदिन्द्रादो दाशराज्ञे मानुषं विगाहथाः (अथर्व० २०।१२८।१२) । **विगाहथाः=व्यगाहथाः, व्यविध्यः** । अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः (रघु० १३।१)। **विगाहमानः=अतिक्रामन्** । ईषद् विगाहमानायां रजन्यां दिवसे गते (हरि० २।२५।६) । **अल्पमतिक्रान्तायामित्यर्थः** । विगाह्यमाना सरयूं च नौभिः (पश्यन् रेमे) (रघु० १४।३०) । **विगाह्यमाना=विलोड्यमाना, क्षोभमापाद्यमाना** अन्तर्जले विगाढः (पर्वतः) (रा० ५।७।३६) । **विगाढः=निमग्नः** । विगाढायां रजन्यां च राजा दैन्यं परं गतः (भा० द्रोण० १८३।२०) । **विगाढा=अवतीर्णा** । मकरैर्नागभोगैश्च विगाढाः (जलराशयः) (रा० ५।७४।३१) । **विगाढाः कृतावगाहाः** । विगाढे रजनीमुखे (भा० वन० ४६।५) । **विगाढेऽतिक्रान्ते । रजनीमुखं प्रदोषः** । जनस्य तस्मिन्समये विगाढे (रघु० १६।५३) । **विगाढे =कठिने** । विगाढमन्मथः (रघु० १६।६) । **प्रौढमदनः=विवृद्धमनसिजः** । विगाढे युधि सम्बाधे वत्स्यसे माम् (भा० ३।१६।१४)। **विगाढे वृद्धिमुपेयुषि** । विगाह्यागाधगम्भीराम् (उशतीम्) (भा० उ० ७६।१४) ।

—**गुप्** (**गुपू रक्षणे**) । यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशान भूतभव्यस्य न ततो विजुगुप्सते (श० ब्रा० १४।७।२।१८) । **न विजुगुप्सते= नोद्विजते** ।

—**गै** (**कै गै शब्दे**)। विगायति च यो लोके यवनानां विलोकनम् (शि०भा०)। **निन्दति विरुणद्धि वा** । विगीयसे मन्मथदेहदाहिना (नै० १।७६) । **विगीयसे =निन्द्यसे, अवक्षिप्यसे** । **विगानं वचनीयत्वम् इति सङ्कीर्णवर्गान्ते स्वामिनो-**

**द्धृतं वचः** । अभिचार चकारास्येत्यविगाना जनश्रुतिः (रा० ७।१३३) । **अविगाना=अविसंवादा=अविप्रतिपन्ना** । यश्चाधरोत्तरानर्थान् विगीतान्नावबुध्यते (मनु० ८।५३) । **विगीतान्=विरुद्धान् । संकुलान् परस्परव्याहतान्** ।

**—ग्रन्थ् (ग्रथि कौटिल्ये, ग्रन्थ सन्दर्भे)** । अन्तानुष्णीषेण विग्रथ्नाति (श० ब्रा० ३।३।२।१८) । **बध्नातीत्यर्थः** ।

**—ग्रह् (ग्रह उपादाने)** । आज्य जुह्वां चतुष्कृत्वो विगृह्णाति (श० ब्रा० ३।२।४।८) । **विगृह्णाति=विभज्य गृह्णाति** । तदेनानि द्वेधा विगृह्णीयात् (ऐ० ब्रा० ७।३२) । त विगृह्णाति देवेभ्यस्त्वा...य एव कुर्याद्यथादेवतं त्वेत्र विगृह्णीयात् (श० ब्रा० ४।२।३।११) । **विभजेदित्यर्थः** । अचेतसो वि जगृभ्रे परुष्णीम् (ऋ० ७।१८।८) । **विजगृभ्रे=विजगृहिरे=विस्रावितजलां निःशेषितापां चक्रुरित्यर्थः । विग्रहः कूलभेद इति सायणः** । अथ निग्राभ्याभ्यो ग्रहान् विगृह्णते (श० ब्रा० ३।६।४।२५) । **निग्राभ्याभ्यस्तन्नामिकाभ्योद्भ्य उद्धृत्य भरन्तीत्यर्थः** । अपशब्दांश्चास्य विगृह्णीयात् (का० सं० त्रि० शिष्योप०) । यदास्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः । न विगृह्णाति वैषम्यम्...(भा० पु० ३।३२।२४) । **विगृह्णाति=विविच्य गृह्णाति, विबुध्यते** । अन्तर्भूमिगताश्चान्ये हयानां चरणान्यथ । व्यगृह्णन् दानवा घोरा रथचक्रे च भारत (भा० वन० १७२।८) ।। **अभञ्जन् अमृद्नन्नित्यर्थः प्रतिभाति । धृतवन्तो गृहीतवन्त इति कश्चित्** । सन्दधीत न चानार्य विगृह्णीयान्न बन्धुभिः (भा० शां० ७०।५) । **विग्रहमाचरेत्, सम्प्रहरेत्, युध्येत** । विगृह्यते राहुणा दिनाधीशः (पञ्चत० १।२३१)। **उक्तोऽर्थः** । यत्कृतेऽरीन् व्यगृह्णीम (भट्टि० १७।२३) । विजगृहे तिसृणा जयिनं पुराम् (कि०१८।१२)। **गृहीतवानित्यर्थः** । **विशब्दो नार्थे विशेषं करोति** । राजानं बोधिसत्त्वं प्रति विग्राहयामासुः (अवदा० जा० २३) । **बुद्धिभेदं जनयामासुः, बिभिदुः** । सर्वमिदं पूर्वकर्मकृतं सुखासुखम्, न प्रयत्नसामर्थ्यमस्तीत्येव मन्य एनं विग्राहयामास (अवदा० जा० २३)। **विपरीतं ग्राहयामास बोधयामासेत्युक्तं भवति** । अनुयुगविगृहीतदेहाः (ब्रह्मविष्णुगिरीशाः) (भा० पु० ४।१।२७) । **परिगृहीतविविधतनवः, धृतनानाशरीरा इत्यर्थः** । विगृहीतादपीष्यते (पा० ४।२।९३ सूत्रे वार्त्तिकम् । **अवयवशो गृहीतादित्यर्थः** । बन्धुना विगृहीतोऽहम् (भट्टि० ६।८६) । **विगृहीतो विरोधितः** । स जायमानो विगृहीतमात्रः (भा० आदि० ९०।१५) । **विग्रहेण सर्वाङ्गकलापेन सम्पन्नमात्र इति नीलकण्ठः । विभक्तावयव इति तु मूलानुवाद्यर्थः** । बलवता विगृहीतस्य तदनुप्रवेशो विदेशगमनं वा (तन्त्रा० ३, उपक्रमे) । **विगृहीतस्यायोध्यमानस्य** । षोडशाक्षरेण विगृह्य (शां० श्रौ० १०।८।१८) । **विगृह्य=प्रगृह्य** । मध्ये ह्रदस्य

प्लवस्व विगृह्य चतुरः पदः (अथर्व० ४।१५।१४) । **प्रसार्येति दुर्गः । विश्लेष्येति तु परे ।** तस्मादिमानि वयांसि विगृह्य पक्षावनायुवानानि पतन्ति (श० ब्रा० ४।१।२। २६) । **विगृह्य=वितत्य, विस्तार्य ।** विगृह्य शत्रून्कौन्तेय ज्ञेयः क्षितिपतिस्तदा (भा० आश्रम० ६।७) । **विगृह्य=युद्ध्वा ।** विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः (शिशु० १।५१) । **उक्तोऽर्थः ।** देवराजो विगृह्येदं काले वचनमब्रवीत् (भा० वन० १७४।१) । **विगृह्य विशेषेण गृहीत्वा, स्वीयत्वेनाङ्गीकृत्य ।** धनुर्विगृह्य (भा० ४।२०८६) । **गृहीत्वेत्यर्थः । नार्थो विना ।** एतद्वा एनं देवा एषु लोकेषु विग्राहमैच्छन् (श० ब्रा०६।३।३।५) । **एकैकशोऽन्वैच्छन्नित्यर्थः । विग्राहमिति विपूर्वाद् गृह्णातेर्णमुल् । आश्व० श्रौ० ८।३ इत्यत्रापि विग्राहमिति प्रयोगः । तत्र पृथक् कृत्वेत्यर्थः ।** यथा लोहस्य निःस्यन्दो निषिक्तो बिम्बविग्रहम् । उपैति··· (भा०आश्व० १८।६) । **विग्रह आकारो रूपम् ।** त्रयी विग्रहवत्येव सममध्यात्मविद्यया (माल० १।१४)। **विग्रहः शरीरम् ।** विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे (रघु० १९।३८) । **विग्रहः कलहः ।** उग्राय विग्रहायास्मै त्वया प्रेषयता ह्यमुम् (शि० भा० १७।३५) । **विग्रहो निग्रहोऽनुग्रहविपर्ययो वा ।** वृत्त्यर्थबोधकं वाक्यं **विग्रह इति** वैयाकरणाः । अनुग्रहं विग्रहं वा मन्यसे तद्विधेहि नः (भा०पु० १०। १६।५६) । **विग्रहो निग्रहोऽनुग्रहविपर्ययो वा । अत्रार्थेऽन्यत्र मृग्योऽस्य प्रयोगो बहुश्रुतैः ।** परिमाणं च कालस्य कल्पलक्षणविग्रहम् । **विग्रहो विभागः ।**

**—ग्लै (ग्लै हर्षक्षये)** । नानुध्यायाद् बहूञ्छब्दान्वाचो विग्लापनं हि तत् (छा० उ०) । **विग्लापनं व्ययः, अपक्षयः ।** तन्नो विग्लापयति (भा० पु० ३। २।२२) । **विग्लापयति खेदयति, विमनाययति, विमनस्कान्करोतीत्यर्थः ।**

**—घट् (घट चेष्टायाम्)** । एते द्रागेव विघटिष्यन्ते । **भेदं प्राप्स्यन्ति पलायिष्यन्त इति वा ।** ततो विजघटे शैलैः (भट्टि० १४।६६) । **विघटितम् । शैला भेदमापुः, संहतिं जहुरित्यर्थः ।** कार्यमुद्घाटितं क्वापि मध्ये विघटते यतः (हितोप० ४।२) । **विघटते=प्रतिहन्यते विराममेति ।** वयस्य विघाटयता द्वारम् (अवि० ५) । **उद्घाटयतां विवृद्धतामित्यर्थः ।** विघटयन्त्यग्रे **नभोऽम्भोमुचः** (मालती० ५।२) । **विघटयन्ति द्विधा विभजन्ति ।** उपरि विघटमानः प्रौढतापिच्छनील (मालती० ६।२४) । **विघटमानः=रूपनानात्वं परिगृह्णानः ।** अहो विघटितं तिमिरपटलम् (प्र० च०) । **संहतभावमहासीदित्यर्थः ।** मन्त्रिणा पृथिवीपालचित्तं विघटितं यदि । वलयं स्फटिकस्येव को नु सन्धातुमर्हति (हितोप० २।१५७) ॥ **विघटितं द्विधा भिन्नम् ।**

**—घट्ट् (घट्ट चलने)** । द्वारं विघट्टयन्कराभ्याम् (भा० सभा० ५७।११) ।

**उद्घाटयन्नित्यर्थः**। कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् (कु० १।६)। **विघट्टितानां बलवत्कम्पितानाम्**। दर्व्या विघट्य (सुश्रुत० १।३२।१६)। आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् (भर्तृ० ३।५४)। **विघट्टिता=विक्षिप्ता**। तदीयमातङ्गघटाविघट्टितैः··· दिग्गजैः (शिशु० १।६४)। **विघट्टितैः=विकीर्णैः**। सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे वियति धनुःसस्थाना ये दृश्यन्ते तद् इन्द्रधनुः (व०बृ०सं०३४।१)। **उक्तोऽर्थः**। हेषितं ह्युपशृण्वाने द्रोणे सर्वं विघट्टितम् (भा० ४।१४६४)। **सर्वं रहस्यमुद्भिन्नमित्याह**।

—**घस्** (**घस्लृ अदने**)। विघसो भुक्तशेषं तु (मनु० ३।२८५)। **तथा चोत्तरे रामचरिते प्रयोगः**—तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणा इव (भुवः) (५।६)। वकविघसपङ्कसारा नचिरात् कावेरि भवितासि (**आर्या०**)। किमद्याश्वत्थामा तदरिरुधिरामारविघसम् (वेणी० ३।२५)। **विघसो भोजनम्**।

—**घुष्** (**घुषिर् अविशब्दने, विशब्दनं प्रतिज्ञानं ततोऽन्यस्मिन्नर्थे, शब्द इत्यन्ये पेठुः**)। तूर्यगीतविघुष्टानि विमानानि (रा० ३।३६।१६)। **विघुष्टानि=शब्दपूर्णानि**। अहो दानं विघुष्टं ते सुमहत् स्वर्गवासिभिः (भा० ३।१५४३३)। **विघुष्टमुच्चैर्घोषितम्**।

—**घूर्ण्** (**घुण घूर्ण भ्रमणे**)। विनिपेतुः पृथक् केचित्तथाऽन्ये विजुघूर्णिरे (हरि० १२५४७)। **विजुघूर्णिरे=इतस्ततो भ्रेमुः**।

—**चक्ष्** (**चक्षिङ् व्यक्तायां वाचि**)। उपस्थे मातुर्विचष्टे (ऋ० ५।१६ १)। **विचष्टे प्रकाशते भासते, भाति**। त्रयः केशिन ऋतुथा विचक्षते (ऋ० १।१६४।४४)। **उक्तोऽर्थः**। शतं नो रास्व शरदो विचक्षे (ऋ० २।२७।१०)। **विचक्षे=दर्शनाय**। तदयं केतो हृद आ वि चष्टे (ऋ० १।२४।१२)। **विचष्टे विपश्यति**। परि चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम्। (ऋ० ७।१०४।२५)। **उक्तचर एवार्थः**। तया पवस्व धारया यया पीतो विचक्षसे (ऋ० ६।४५।६)। **विचक्षसे=आत्मानं प्रादुर्भावयसि**। गृह्या गृह्णानो बहुधा विचक्ष्व (**अथर्व०** ५।२०।४)। (हे दुन्दुभे) **बहुधा घोषणां कुर्वित्याह**। **इति शुश्रुम धीराणां ये** नस्तद् विचचक्षिरे (ईश० उ० १२)। **उपदिदिशुः, व्याजह्रुः**।

—**चर्** (**चर गतिभक्षणयोः**)। अधिज्यधन्वा विचचार दावम् (रघु०२।८)। **बभ्राम, पर्याट**। इष्टान् देशान् विचर जलद विद्युता संभृतश्रीः (मेघ० ११७)। **उक्तोऽर्थः**। बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी। **योगसिद्धा जगत्कृत्स्नमसक्ता** विचचार ह (हरि० १।३।४५)॥ **अनन्तरोदीरित एवार्थः**। यन्मे माता

प्रलुलुभे विचरन्त्यपतिव्रता (मनु० ६।२०)। कामचारतः स्वैरं परिभ्रमन्तीत्यर्थः। हविषि व्यचरत्तेन वषट्कारं गृणन् द्विजः (भा०पु० ६।१।१५)। **व्यचरत्= अपाचरत्, प्रामाद्यत्। अन्यत्रान्वेष्योऽयमर्थः सुधीभिः।** तांस्तु सर्वान्निरव्याघ्रः सैन्धवान् व्यचरद्बली (भा० आश्व० ७७।३०)। **व्यचरत्=आक्रामत्, आस्कन्दत्, अभ्ययात्।** असिमार्गान् बहुविधान् विचेरुः सैनिका रणे (भा०द्रोण० ६७।१७)। **विचेरुः=आचेरुः। विशब्दो नानात्वे।** आत्मनः परिमर्शेन बुद्धिं बुद्धया विचारयेत् (भा० शां० १२०।१६)। **साधकबाधकभूमौ संचारयेदिति नीलकण्ठः।** पुत्रो मातरा विचरन्नुपावसि (वा० म० १२।१०७)। **उपावसि तस्याः साह्यमाचरसि।** विषसलिलतुलाग्निप्रार्थिते मे विचारे (मृच्छ० ६।४३)। **विचारो व्यवहारपरीक्षा।** कस्येयं मृगशावाक्षी वनान्तरविचारिणी (हरि० २।२८।७८)। **वनान्तरविचारिणी वनमध्ये भ्रमन्ती।** आज्ञा गुरूणां ह्यविचारणीया (रघु० १४।४६)। **अविचारणीया, अचिन्तनीया, अनाशङ्कनीया।** को विचारः स्वेषूपकरणेषु (उत्तर०)। **विचारो विचारणा=अनध्यवसायः, विमर्शः।** नास्त्यर्थो विज्ञानविसहचरेण, अस्ति तु ज्ञानमर्थविसहचरं स्वप्नादौ कल्पितम् (यो० सू० ४।१४ भाष्ये)। **विज्ञानविसहचरेण=विज्ञाननान्तरीयकत्वेन। विर्विरोधे।** प्रत्यक्षमपि कर्मेदं करोतीव विचारणाम् (अवदा० जा० २।३१)। **विचारणां सन्देहम्।** विचरितप्राया मया लङ्का (अभि० २)। **प्रायेण भ्रान्तेत्यर्थः।** अपूर्वमकृतं नित्यं य एनमविचारिणम् (भा० आश्व० ५१।३४)। **अविचारिणम्=अविचालिनम्=कूटस्थम्।**

**—चर्च् (चर्च अध्ययने)। पामपामे विचर्चिका (अमरः)। प्रत्ययोपसर्गाभ्यां रोगप्रतीतिरिति तत्त्वबोधिनी।**

**—चल् (चल कम्पने, चल विलसने)।** व्यचालीदम्भसां पतिः (भट्टि० १५।७०)। **अक्षुभदित्यर्थः।** विचलति पत्रे शङ्कितं भवदुपयानम् (गीत० ५)। नादण्ड्यो नाम राज्ञोऽस्ति धर्माद् विचलितः स्वकात् (याज्ञ० १।३५८)। **विचलितो भ्रष्टः।** अधिकरणविचाले च (पा० ५।३।४३)। **विचालोऽन्यथाकरणम्, सङ्ख्यान्तरापादनम्। एकस्यानेकीकरणम्, अनेकस्य चैकीकरणम् इति वृत्तिः।** विचाली हि संवत्सरशब्दः, सावनोऽपि गणितदिवसकः, शीतोष्णवर्षलक्षणोऽपि चान्द्रमसोऽपि (मी० ६।७।३८ सूत्रे शा० भा०)। **विचाली=अनियतः।**

**—चि (चिञ् चयने)।** कृतं न श्वघ्नी विचिनोति देवने (ऋ० १०।४३।५)। एते हीदं सर्वं विचिन्वन्ति (श०ब्रा० ६।१।१।२३)। **परिचिन्वन्ति प्रत्यभिजानन्तीति वेत्याह।** न यजमानः सोमं विचिनुयात् (आप० श्रौ० १०।७।२०।१६)। **तृणाद्यपनयेन शोधनं विचयनम्** (रुद्र०)। ततस्त्रैलोक्यमृषयो व्यचिन्वन्त

सुरैः सह (भा० अनु० ८५।२०) । **व्यचिन्वन्त = व्यचिन्वत = अमृगयन्त = अन्वैच्छन्।** विचिनोति मां तात सहैवाश्रमवासिभिः (भा० वन० २६७। ८४) । **विचिनोति = अन्विष्यति ।** कृष्णाजिने सोमांशून् विचिनोति (कौ० सू० २४, ३-७) । नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया (वा० स० २३। ३६) । **लोमानि पृथक् कुर्वन्त्वित्यर्थः ।** ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये (भा० पु० १०।२३) । **जिज्ञासन्त इत्यर्थः ।** गदामि वेदान् विचिनोमि छन्द. (भा० वन० १६७।८) । क्रव्यात्कविष्णुर्वि चिनोत्वेनम् (अथर्व० ८।३। ४) । **एनं यातुधानम् । विचिनोतु इतस्ततो भक्षणायाकृष्य विप्रकीर्णं करोतु ।** त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् (ऋ० ६।६८।५८) । **विचिनुयाम सम्पादयेम ।** चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मणे (ऐ० आ० २।१।७) । **विशेषेण सम्पादयति, निर्मिमीत इत्यर्थः ।** धनानि व्यवसायेन विचीयन्ते महावने (रा० ३।४३।३१) । **विचीयन्ते संगृह्यन्ते ।** फलानि वृक्षमारुह्य विचिन्वन्ति च ये तदा (भा० आदि० १२८।२१)। **विचिन्वन्ति = अवचिन्वन्ति ।** अयमेमि विचकाशद् विचिन्वन्दासमार्यम् (ऋ० १०।८६ १६) । विचिन्वतीमाकिरन्तीमप्सराम् (अथर्व० ४।३८।२) । **समुच्चिन्वतीं कोष्ठे त्रिचतुरानक्षान्सङ्घीकुर्वतीमिति सायणः ।** आचख्युस्तत्र रामाय महीं सागरमेखलाम् । विचिताम्... (भा० वन० २८२।२४) ॥ **विचिताम् अन्विष्टामनुसंहितां परीक्षिताम् ।** विचितश्चैष समन्तात् श्मशानवाटः (मालती० ५) । **उक्तोऽर्थः ।** धर्म्यां तु वृत्तिमन्विच्छन् विचिताशीह दुःखितः (अवदा० जा० १) । स्नातवस्यं वाऽमौत्रधौतं विचितकेश प्रसारितदशं दीक्षातपसोरिति (का० श्रौ० ७।२।१६) । **विचितकेशं विचिताः निष्कासिताः केशाः सूत्राणि यस्मात् तत् तथोक्तम् ।** चोदयामास तानश्वान् विचितान् भीष्मसायकैः (भा० भीष्म० ५६।५३) । **विचितान्, आचितान् आच्छन्नानित्याह । विविशेषणे ।** ततस्त्रिगर्तराजानं सूर्यवर्माणमाहवे । विचित्य शरजालेन प्रजहास धनञ्जयः (भा० आश्व० ७४।६) । **विचित्य = आचित्य = आच्छाद्य ।** वनदिङ्मार्गविचयो वीवधासाररक्षणम् (का० नी० सा० २०।५) । **विचयः परीक्षणम् ।** तुरगविचयव्यग्रान् (उत्तर० १।२३) । **विचयोऽन्वेषणम् ।** छन्दोविचिति (आप० ध० २।८।११) । **छन्दांसि विचीयन्ते विविच्य ज्ञायन्ते यया सा छन्दोविचितिर्वेदाङ्गम् ।** विचेतव्या मही वीर संग्राममनगराकरा (भा० वन० २८२।१६) । **अन्वेष्येत्यर्थः ।**

—**चृत् (चृती हिंसाग्रन्थनयोः) ।** शालाया नद्धानि वि चृतामसि ( ) । **श्रथ्नीमः, विष्यामः, भिन्द्मः । नद्धानि ग्रन्थयः ।** 'वेदः स्वस्तिः' इति वेदं विचृतति (वै० श्रौ० ८।१२) । **विचृतति विमुञ्चति ।** अयस्मयं विचृता बन्धमेतम् (वा० सं० १२।६३) । **विच्छिन्धीत्याह ।** वि ते पाशांश्चृतामसि (अथर्व०

६।३।१४)। उत्क्रोऽर्थः। पाशं ग्रीवास्वविचृत्यम् (वा० सं० १२।६५)। वर्तितुं छेत्तुमनर्हम्।

—चेष्ट् (चेष्ट चेष्टायाम्)। महाभुजगसंकाशा बाहवः परिघोपमाः। उद्वेष्टन्ति विचेष्टन्ति सचेष्टन्ति च सर्वशः (भा० द्रोण० ८९।१६)। विचेष्टन्ति=विविधं चेष्टन्ते। सम्पत्तौ च विपत्तौ च दैवमेव हि कारणम्। इति दैवपरो ध्यायन्नात्मना न विचेष्टते (का० नी० सा० ६।१४-३७)। न विचेष्टते न व्यवस्यति=नोद्युङ्क्ते, नोद्यच्छते, नोत्तिष्ठते। अत्र विविरोधे न, चेष्टामेव विशिनष्टि। धराया स्म व्यचेष्टेताम् (रा० २।७७।८०)। व्यलुठतामित्यर्थः। विदर्भनगरे येषां राजेन्द्रत्वं विचेष्टय (हरि० २।५०।२१)। विचेष्टय विचालय। भ्रंशयेत्यर्थः। मैथुनाय विचेष्टन्ती परपुंसोपशङ्कया (हरि० १।६।५४)। विचेष्टन्ती मैथुनप्रतिकूलां चेष्टां कुर्वाणेति नीलकण्ठः। यथार्हमस्य लोकस्य मया सर्वं विचेष्टितम् (वि० पु० ६।६।३८)। विचेष्टितम्=चेष्टितम्=कृतम्। न हि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितम् (भा० वन० १६०।६)। विचेष्टितम्=अवदानानि=चरितानि। किमपि चेदमनङ्गविचेष्टितम् (विक्रम० २।६)। अनङ्गविचेष्टितम्=मनसिजविलसितम्।

—छद् (छद अपवारणे)। घ्नन्ति त्वेवैनं विच्छादयन्तीव (छां० उ० ८।१०।२)।

—छन्द् (छदि संवरणे)। दानाद् विच्छन्दयंस्तं महासत्त्वमुवाच (अवदा० जा० ५)। वारयन्नित्यर्थः। विर्विरोधे। उपच्छन्दनविरोधिनमर्थमाह।

—छिद् (छिदिर् द्वैधीकरणे)। न ध्यातं पदमीश्वरस्य विधिवत् संसारविच्छित्तये (भर्तृ० ३।११)। संसरणच्छेदाय, जननमरणप्रवाहविरामायेत्याह। वृत्त्यविच्छित्तिकामः (गो० गृ० ४।८।१६)। जीविकाविलोपाभावमिच्छन्नित्यर्थः। विच्छिद्यमानेपि विच्छित्तिर्नवचन्दनेन वपुषः (शिशु० १६।८४)। विच्छित्तिरलङ्क्रिया। विच्छित्तिविशेषैः सुरसुन्दरीणाम् (शा० ७।५)। विच्छित्तयो वर्णकारागाः। स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् (सा० द० १३८)। मण्डनानादरन्यासो विच्छित्ती रूपदर्पतः (१।६।२३ अमरोद्घाटने स्वामी)। विच्छिद्यमानेपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या (भट्टि० ३।५२)। वंशेऽवसानमुपयति सतीत्यर्थः। दशश्चन्दनविच्छिन्नैस्त्वं च दोर्भिः प्रसाधितः (राम० २४।१००)। चन्दनविच्छिन्नैश्चन्दनानुलिप्तैः। विच्छिन्नेषु पथिष्वहः-

परिणतौ ध्वान्ते समुत्सर्पति (अमरु० ७६)। **विच्छिन्नेषु भग्नेषु।** यदर्थे विच्छिन्नं भवति कृतसन्धानमिव तत् (शा० १।६)। **विच्छिन्न विसंहितम्।**

—जन् (जनी प्रादुर्भावे)। विजज्ञे च ततः काले राजन्राजीवलोचना। कुमारं देवगर्भाभम्···(भा० आदि० ८२।२७)। **विजज्ञे=सुषुवे। प्रजज्ञ इति पाठान्तरम्।** समा समा विजायते (पा० ५।२।१२)। **इह विपूर्वो जनिरकर्मकः।** ततः स्मरसखे काले पुष्ययुक्ते निशाकरे। दिवाकरे मृदुकरे देवी पुत्रं व्यजायत (बृ० श्लो० स०)॥ **उक्तोर्थः। इह धातुः, सकर्मको यथा निरुक्ते भारतप्रयोगे।** वैराजात्पुरुषाद्वीरं शतरूपा व्यजायत। प्रियव्रतोत्तानपादौ वीरात्काम्या व्यजायत (हरि० १।२।५)॥ अद्यश्वीन इति निपात्यतेऽवष्टब्धे विजने (पा० ५।२।१३ सूत्रे वृत्तिः)। **विजनः प्रसवः। अवष्टब्ध आसन्नः।** यस्ते पुत्रो गर्भितोऽयं विजातः स्वर्णष्ठीवी यमदात् पर्वतस्ते (भा० शां० २६।१४६)। **विजातः=विशिष्टगुणोपेतः।** विजावति प्रजावति वि ते पाशाश्चृतामसि (अथर्व० ६।३।१४)। **विजा=विजनः=प्रसवः।**

—जल्प् (जप जल्प व्यक्तायां वाचि)। **विजल्पः प्रलापः, मात्सर्यगर्भा गीः।** असौ त्वा विजल्पति (कौ० अ० ११।१।१६०)। परिहासविजल्पितं सखे परमार्थेन न गृह्यता वचः (शा० २।१८)।

—जि (जि जये, जि अभिभवे)। प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः (गीत०)। **अभिभवतीत्यर्थः।** रहस्यं साधूनामनुपधि विशुद्धं विजयते (उत्तर० २।२)। **सर्वोत्कर्षेण वर्तत इत्यर्थः।** यौ वै सर्वं जयति विजयते (जै० १।६५)। चक्षुर्मेचकमम्बुज विजयते (वा० भा० १।३३)। **विजयतेऽतिशेते अतिक्रामति।** इतो जयेतो विजय संजय जय स्वाहा (अथर्व० ८।८।२४)। यस्मात्तमेव होतारं वृणीष्वेत्येतस्य लोकस्य विजितये (गो० ब्रा० पूर्व० २।२४)। **अत्र विशब्दो वैशिष्ट्यवचनः प्रतिभाति। अन्यत्र प्रायेण जयतिना सम्प्रयुक्तो नायं विशेषकृत्। जयो विजय इत्येकोर्थः, लोचनविलोचनवत्।** अस्याधिज्ये धनुषि विजयम् (आशंसन्ते) (शा० २।१६)। **स्पष्टोऽर्थः।** प्रभवति न तदा परो विजेतुं भवति जितेन्द्रियता यदात्मरक्षा (कि० १०।३५)। क्षितिविजितिस्मृतिविहितिव्रतरतयः परमतयः। **विजितिर्विजयो जयः।**

—जृम्भ् (जृभि गात्रविनामे)। तमोऽन्ये ह्रासिषुर्योधा व्यजृम्भिषत चापरे (भट्टि० १५।१०८)। **मुखव्यादानमकुर्वतेत्यर्थः।** सुखश्रवा मङ्गलतूर्यनिस्वनाः ···न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि (रघु० ३।१६)। **व्यजृम्भन्त=अमूर्च्छन्। व्याप्नुवन्।** तत्खल्विदं विजृम्भते (मालती० १।७)। **विजृम्भते व्याप्तिं याति।** वनेषु सायन्तनमल्लिकानां विजृम्भणोद-

# अशुद्धशोधनम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७० | ७ | संसस्क्त | संसक्त- |
| १७४ | १ | संस्थाप्यैव | संस्थाप्यैवं |
| १७५ | २६ | संहृत्य | संहृत्य |
| २०३ | २६ | वेदसन्वाधीन० | वेदान्स्वाधीन० |
| २०५ | ४ | (व० बृ० सं० ५२।२) | इदमुपेक्ष्यम् |
| २०६ | ४ | अवसाय्य समापय्य | विधिवद् गृहीत्वा |
| २२६ | ६ | अध्यसनेन | अध्यासनेन |
| २३० | १० | मा | मा |
| २३५ | ११ | नृत्यन्ति | नृत्यति |
| २३८ | ५ | अथान्वबध्नामा | अथान्वबध्नान्मां |
| २४० | ३ | बध्यो | बन्ध्यो |
| २४३ | १४ | नुमिमीहे | नुमिमीमहे |
| २५३ | १७ | वीरमनशेते | वीरमनुशेते |
| २५७ | ८ | त्यक्तं | त्यक्तु |
| २६५ | २२ | त्वममीत्याह | त्वमपीत्याह |
| २६६ | ८ | प्रणार्दन्ति | प्रणुदन्ति |
| २७२ | २६ | अत्रेक्षते | अवेक्षते |
| २७८ | २६ | नगर्यंस्तं | नगर्यंन्तं |
| २८५ | १२ | वे | ग्रे |
| २६४ | १४ | पुप्लुत्रे | अवपुप्लुवे |
| ३१८ | ११ | उद्धनानि | उद्धृतानि |
| ३२७ | २१ | कुब्रक | कुरबकं |
| ३३६ | १२ | म मृतेषु | गम्भृतेषु |
| ३४६ | ११ | पदे वनेषु | पदेपूनेषु |
| ३५१ | २७ | कृष्णातेः | कुष्णातेः |
| ३६३ | १५ | विग्रहो निग्रहोऽनुग्रह- विपर्ययो वा | विग्रहो युद्धम् |
| ३६७ | ७ | विविरोधे | विर्विरोधे |

## परिबृंहणम्

| | | |
|---|---|---|
| १६६ | १८ | समुन्नद्धम् प्रवृद्धं प्रकर्षपर्यन्त गतम् । |
| २०० | १६ | भूतसमुच्छ्रयो भूतसमुदायः (लीयत इति शेषः) । |
| २१२ | २७ | सम्प्रयुज्यते संयुक्तः प्रयुज्यते । |
| २१६ | ११ | संविधत्त उपकल्पयति (युधिष्ठिरः) । |
| २२५ | १० | 'कृत्वा' इत्यतः पर बध्नीयान्मोक्षयीत वेति पाठ्यम् । आगमः प्राप्तिरधिगमः (लोप्त्रमिति शङ्कितस्य द्रव्यस्य) । तस्यानुगमः सद्धेतुकः सम्बन्धः, निश्चयः सन्देहान्तगमनम् इति तु वयम् । नीलकण्ठस्तु दूराधिरूढ कल्पयति । |
| २३६ | १ | अन्वपद्यत । उपेंदित्यर्थं इत्यधिक पाठ्यम् । |
| २८१ | २५ | अवगीतं नाशितमिति नीलकण्ठः । सोऽयमुपचारः । |